ॐ

पूर्णमदः पूर्णमिदं, पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय, पूर्णमेवावशिष्यते ॥

यो देवानां प्रभवश्चोद्भवश्च, विश्वाधिपो यो रुद्रो महर्षिः ।
हिरण्यगर्भं यो जनयामास पूर्वं, स नो बुद्ध्या शुभया संयुनक्तु ॥

सत्यनाम रसज्ञाय, मायाध्वान्तापसारिणे ।
देशिकेन्द्र नमस्तुभ्यम्, निःशेषानन्द मूर्तये ॥
धर्मव्रत चरो लोके, सर्वो भवतु सर्वदा ।
अस्तु सर्वः स्वरूपस्थः, सर्वः श्रेयांसि पश्यतु ॥

# मूल ग्रंथस्य उपोद्घातः

अद्यतो वर्षत्रयादर्वाङ् मया कारागृहे "जीवन और दर्शन" इत्येतन्नामकं पुस्तकं व्यलेखि। तस्मिन्नेतद्दर्शयितुं प्रयत्नः कृतोऽस्ति यद् विचारशीलस्य मनुष्यस्य समक्षमीदृश्यः प्रभूताः समस्या आयान्ति यासां समाधानमन्तरा वैयक्तिकं सामूहिकं च जीवनं यथावन्न निर्वहेत्। समस्या नव्या न सन्ति, अतः आसां सम्बन्धे पुराकालतः अस्मिन् अद्यत्वे यावत् प्रभूतानि मतानि प्रतिपादितानि सन्ति। उपर्युक्तपुस्तके एषां मध्यात् मुख्यानां मतानां दिग्दर्शनं कृतमासीत्। एषु कतमत् समीचीनमस्ति अर्थात् अस्माकं सर्वेषां प्रश्नानामुत्तरं व्यापकत्वेन दातुं शक्नुयात् एतस्य निर्णयः पाठकानां पुरः परित्यक्तमासीत्। किन्नाम मतं मम सम्यक् प्रतीयत इत्येतत् स्पष्टशब्देषु नहि कथितमासीत्, यद्यपि कोऽपि पाठकः पुस्तकं दृष्ट्वा मम स्वारस्यस्य किञ्चिन्नु किञ्चिदनुमानं कर्तुं शक्नुयात्।

प्रश्नानामुत्थापनेन ममैतत् कर्त्तव्यमिव संजातं यत्तेषामुत्तराण्यपि समुपस्थापयेयं ये मे प्रतिभासन्ते। प्रथमं पुस्तकाध्ययनानन्तरं कतिचन मित्राणि एतत्कर्त्तव्यताया दिशि ध्यानमाकृष्टमकार्षुः। स्वीकृतं चैतन्मया। सत्यं त्वेतदस्ति यदीदृशैकपुस्तकलेखनविचारश्चिरादुपस्थितोऽभवत्। कतिचन वर्षाणि व्यतीतानि, महात्मा गान्धी मल्लिखितं समाजवादनामकं पुस्तकं पठित्वा ममान्तिकमलिखद् यद् भवान् समाजवाद्यपि सन् मार्क्सस्य दार्शनिकं मतं पूर्णतया नहि समर्थयते। एतच्चाभ्युपगतं मया निवेदितं च यद् दार्शनिकैकपुस्तकलेखनस्य विद्यते मे विचार इति। एतस्य।सस्य कृते सानुग्रहमहं तेन प्रोत्साहितः। षड् वर्षाणि व्यतीतानि, अद्यावधि तं विचारं कार्ये परिणमयितुम् अवसरो नासादितः। ब्रिटिशसरकारस्य कृपयेदानीं समयो लब्धः। पाश्चात्यानां त्रयाणां वर्षाणां मध्याद् वर्षद्वयं समासचतुष्टयं कारागारे व्यतीतम्। इतोऽ-

प्यपराणि दिनानि इत्थमेव व्यत्येष्यन्ति। भारतीयराजनीतिकपरिस्थितेरितोऽपि साधीयसी कापरा समालोचना भवेत् यद्दर्शनाध्ययनमननयोः पुस्तकलेखनस्य चावकाशो वन्दीगृह एव लभ्यते।

दर्शनस्य विषयः पुरातनो विद्यते, समस्या अपि तादृश्यः सन्ति, परन्तु अद्यत्वे, समस्या नूतनं रूपमधारयन्त। एकस्य महासमरस्य विकारेऽशोशुष्यम णेऽपरो महासमरः समजायत। युद्धस्य भीषणता वृद्धिमीदृशीमुपगताऽस्ति यद् यदीदृश एकार्धः संग्रामोऽपरोऽपि संघटेत तर्हि सभ्यताया नामापि मृष्टं जायेत, अपरं यत्र जनसङ्कुलानि नगराणि वसन्ति तत्र श्वापदाकीर्णानि जङ्गलानि द्रक्ष्यन्ते। मनुष्याः प्रकृतेरुपरि विजयं प्रापुः परन्तु धर्मबुद्धिं विकासयितुं ते व्यस्मार्षुः। अयं परिणामो जातो यत्ते स्वीयं ज्ञान स्वकीयस्य संहारस्य साधनं समपादयन्। विज्ञानोन्नतिरेतत् सम्भवमकार्षीद् यत् प्रत्येकं मनुष्यः ससुखं वर्तितुं शक्नुयात् परन्तु यावद् दैन्यं दारिद्र्यदुःखं चाद्यत्वेऽस्ति तावत् कदाचिदपि स्यात् किम्? यन्त्रद्वारा स्तोके समये प्रभूतानि कर्माणि सम्पद्यन्ते परन्तु कस्यापि पार्श्वेऽवकाशो नहि दृष्टिपथमापतति अपि च यस्यापि पार्श्वेऽवकाशोऽस्ति सोऽपि तदुपयोगं नावबुध्यते। मनुष्या अद्यत्वे परस्परं यावन्निकटा भवितुं शक्नुवन्ति तावत् पुरा कदापि संभाव्य नासीत्। परन्तु यावान् कलहः, द्वेषः, पार्थक्यं, शोषणं, चाद्यत्वे वरीवृत्यन्ते तावत् प्रथमं कदाचिदपि नासीत्। विश्वसंस्कृतेर्विश्वशान्तेश्च सुयोग आगत इव दृश्यते परन्तु बर्बरयुगसूचकान्यपशकुनानि दिगन्तानाच्छादयन्ति। एताः सर्वाः समस्या भारतीयानामपि समक्षं विद्यन्ते। इतोऽतिरिक्ता अस्माकं केचनापरेऽपि प्रश्नाः सन्ति। इदानीं भारतं परतन्त्रमस्ति। पारतन्त्र्यं सदैवावद्यं वर्तते परमस्मिन् समरसमये भारतीयानां स्वीयजघन्यदशाया यादृशः कटुरनुभवोऽभवत् तादृश इतः प्रथमं कदापि नाभूत्। कोऽपि नु कोऽपि विजेता भविष्यति, युद्धोत्तरकाले पृथिव्या नूतना राजनीतिकी आर्थिकी च व्यवस्था भविष्यति, परन्तु अस्मिन् पुनर्निर्माणे भारतवासिनां कीदृशोऽपि हस्तक्षेपो न भविष्यति, तेषामस्मिन् विषये कोऽपि संमतिं प्राप्तुं नेहेत। यः स्वकीयं गृहं संभालयितुं न शक्नोति स पृथिवीमात्रस्य कीदृशं प्रबन्धं करिष्यति। भारतीयानां हृदयेऽयं महान् विकारोऽस्ति। तेऽस्य दैन्यस्य लयं कर्तुं वाञ्छन्ति। ईदृशी आशा दृश्यते यदनीतिदूरे भविष्यति, तेषामिच्छा पूर्णा भविष्यति। तदानीं किं स्यात्? भारतं स्वीय स्वतन्त्रतायाः कमुपयोगं करिष्यति? आभ्यन्तर्याः सामाजिक्या आर्थिक्या राजनीतिक्याश्च व्यवस्थायाः कीदृश आधारो भविष्यति? अपरं च अन्ताराष्ट्रीयप्रश्नोपरि भारतस्य कीदृशो दृष्टिकोणो भवेत्।

एषां प्रश्नानामुत्तराणि कतिधा दातुं शक्यन्ते। एकः प्रकारस्तु सोऽस्ति यस्यावलम्ब-नमद्य यावत् कृतं जातम्। तस्यैकं नाम समयोपयोगिताऽवसरवादो वास्ति, अपरं नाम अतन्त्रवादोऽस्ति। लोका आत्मनोऽवसरवादिनः कथयितुं नहि प्रसीदन्ति परन्तु तेषामा-चरणानि आकार्याकार्य अवसरवादितायाः साक्ष्यं समुपस्थापयन्ति। आत्मनः स्वार्थ एकमेव लक्ष्यमस्ति यद्यपरेषां हितं तत्पूर्तौ बाधकं भवेत् तर्हि तत् सम्यक् चूर्णितं भविष्यति अस्यायं परिणामोऽस्ति यद् वैयक्तिकत्वे सामूहिके च जीवने किञ्चिद् दृढं सूत्रं लभ्यत एव नहि। यादृशं व्यवहारमेका व्यक्तिरपरया व्यक्त्या नहि करोति परं तादृशं व्यवहारमेकं राष्ट्रमपरेण राष्ट्रेण सह कर्तुं शक्नोति। यो मनुष्यो लक्षाणि रूप्यकाणि लगयित्वा धर्मशालामौषधालयं वा उद्घाटयितुं शक्नोति स एवात्मनः कार्यालये कर्मकराणां रक्तचूषण-मवद्यं नहि संबुध्यते; योऽध्यापको विद्यार्थिनां चरित्रशुद्ध्यै नियुक्तोऽस्ति स एव मुद्रालोभेन वितथमितिहासं समाजशास्त्रं च पाठयित्वा तेषां चित्तं द्वेषेर्ष्याविषेण पूरयति।

अपरमेतद्वार्तोपरि आश्चर्यं प्रकटयामो यत् पृथ्वीतले शान्तिः कथं न विद्यते। व्यासः एकदाऽकथयत् "ऊर्ध्वबाहुर्विरौम्येष नच कश्चिच्छृणोति मे। धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते॥ व्यासस्यैतद्वचनं वार्षपञ्चसहस्रिकं पुराणं संजातम्। मध्ये मध्येऽपरेऽपि लोका इमां वार्तां पुनरुदाहरन् परन्तु जगतो व्यवहारो नहि परिवृत्तः। कोऽप्यात्मन इच्छां परतन्त्रां मनितुं नोद्यतोऽस्ति।

अस्योपायस्य परीक्षणं संजातम्, अयं शान्तिमानेतुं नहि शक्नोति। तर्हि मनुष्येणापर उपायोऽन्वेषणीयः स्यात्। अपरस्योपायस्य बीजं सहयोग एव भवितुं शक्नोति। तस्मिन् वैयक्तिकः सामुदायिकश्चाचार एकस्मिन्नेव सूत्रे बन्धनीयो भविष्यति अपरं चैतत्ससूत्रे जीवनस्य सर्वेषामङ्गानां ग्रथनमपि कर्त्तव्यं भविष्यति। अद्यत्व एकत इयमाशा क्रियते यन्मनुष्य इयदुच्चाशयोऽस्ति यद् अपरेषां सम्पत्तेः स्वाधीनतायाश्च रक्षार्थमात्मनः प्राणाना-मपि विसर्जनं करिष्यति अपरस्यां दिशि स इयच्च संबुध्यते यदेकैकस्या रोटिकायास्त्रुटित-कस्य कृतेऽपरेषां गलकर्तनाय समुद्यतो भविष्यति। द्वे अपि वार्ते भवतः स प्राणानपि ददाति गलमपि कृन्तति। इदमसामञ्जस्यं दूरीकर्तव्यम्। यदर्थं प्राणा दीयन्ते तेन सह मिलित्वा रोटिकाखादनमपि शिक्षणीयम्। इदं वृत्तं केवलोपदेशेन नहि सेत्स्यति। साधवो महात्मानश्च वर्षसहस्रत ईदृशानुपदेशान् देदीयमानाः सन्ति। कियन्तो लोकास्तेषां वार्ता अमन्यन्त शेषास्तु अश्रुतामिवाकार्षुः। स्वार्थसङ्घर्षयोश्च क्रमः पूर्ववच्चासीत्। सहस्रात् सहस्राद् व्यासपीठेभ्य इयं घोषणा बोभूयते स्म—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

अपरं सहैव जातिभेदवैभवभेदबलभेदाधिकारभेदाद्याधारोपरि कोटिशः कोटिशो मनुष्याणामुत्पीडनमपि प्रचलदासीत्, अपरं दृश्यमेतदस्ति यत् समदर्शनस्य शुकपाठपाठको विद्वत्समुदायो दराडायमानोऽदरीदृश्यत, इयदेव नहि किन्तु ज्वलन्तीभिस्तृणकुटीभिस्तैरपि स्वार्थसिद्धिः संसाधिता ।

यदि समाजः समीचीनया रीत्या निर्वाह्यश्चेत्तर्हि तत्सङ्घटनं किञ्चित्सिद्धान्ताधारोपरि भवेत्, राजनीतिः, अर्थनीतिः, दण्डनीतिः, शिक्षा, आचारः, अन्ताराष्ट्रीयव्यवहारः, एतत्सर्वं कस्मिंश्चिदेकस्मिन्नाधारे स्थापनीयम् । अयमाधारस्तदैव निश्चितो भवेत् यदा जगतः स्वरूपं संबुद्धं भवेत् । इदं जगत् किमस्ति ? जगति जीवस्य स्थानं किमस्ति ? जीवस्य स्वरूपं किं विद्यते ? मनुष्यजीवनस्य लक्ष्यं किं वर्तते ? एषां प्रश्नानामुत्तरोपर्य्येव समाजसंव्यूहनस्याधारो निश्चितः कर्तुं शक्यते कर्त्तव्याकर्त्तव्ये च निर्णेतव्ये भविष्यतः । यच्छास्त्रमेतान् मौलिकप्रश्नान् स्वविषयीकरोति तद् दर्शनं कथ्यते ।

दर्शनस्येदं महत्त्वमस्ति यत्तद् ज्ञानस्य जीवनस्य च सर्वेषामङ्गानामुपरि प्रकाशं दीपति । तस्य संबन्धो विचारस्योच्चादुच्चतरेण स्तरेण व्यवहारस्य च नीचान्नीचतरेण स्तरेण विद्यते । तत् स्तोकानां पण्डितानां वाग्युद्धस्य सामग्री नास्ति । दर्शनं जगतः संबोधस्य तस्योन्नतता-संपादनस्य च श्रेष्ठ साधनमस्ति ।

मया दर्शनस्य सदैवानयैव दृष्ट्याऽध्ययनं कृतम् । प्रस्तुतपुस्तके मदीयाध्ययनस्य फलितार्थः पाठकानां समक्षमस्ति ।

पुस्तकसमाप्तौ कदाचिद् विषयसूचीपठनान्तरं कयाचिद् दिशाऽयमाक्षेपः कर्तुं शक्यते यदस्मिन् पुस्तके स एव पुरातनः सिद्धान्तः प्रतिपादितोऽस्ति यो हि शाङ्करोऽद्वैतवादो मायावादो वा कथ्यते । अहमेतत् स्वीकरोमि । नायं मदीयः संरम्भोऽस्ति यदत्र मदुपज्ञं कश्चन नव्यो वादोऽस्ति । यर्हि ममैतत् प्रतीयते यत् शाङ्करोऽद्वैतवादोऽस्माकं सर्वाः प्रहेलिकाः समाधत्ते अस्मान् कर्त्तव्यपथं दर्शयते च तर्हि तत्समर्थनं मम कर्त्तव्यमापद्यते । अद्यत्वे मायाशब्दः कियतां लोकानामेकां विचित्रां विभीषिकामुत्पादयति । यः सत्यमन्वेष्टिषिपति तेनैतज् ज्ञातव्यमस्ति यद् अभिमतत्वानभिमतत्वाभ्यां सत्यस्वरूपोपरि कश्चन प्रभावो नहि पतति यदि जगन्मिथ्याऽस्ति तर्हि तत्सत्यतास्वीकारः आत्मप्रलम्भनतो नातिरिच्यते । केवलं

हस्तपादपस्पन्दना वाढं कर्म भवेत् परन्तु तद् बुद्धिमत्तायाः कर्म कथयितुं न शक्यते। प्रशंसनीयं कर्म तदेव स्याद् यत् कस्यचित् प्रशंसनीयस्योद्देश्यस्य साधकं भवेत् अपि च उद्देश्यस्य प्रशंसनीयता परिस्थितेः पृथक् कर्तुं न शक्यते। मरुभूमौ पानीयस्य प्राप्त्यर्थमितस्ततो धावनं बुद्धिमतः कर्म नास्ति। जगतः स्वरूपं परिचेतुं यत्नः कर्त्तव्यः अथ च यदि तन्मिथ्या प्रमाणितं भवेत् तर्हि आत्मनः कर्मशैल्यपि तदनुरूपा संपादनीया।

एतत् प्रष्टुं शक्यते यदद्वैतवादमवलम्ब्य नव्यपुस्तकलेखनस्य कावश्यकताऽऽसीत्। अस्य प्रथममुत्तरं तु तदेवास्ति यत् प्रत्येकं ग्रन्थकारः स्वपुस्तकस्य सम्बन्धे दातुं शक्नुयात्। पुस्तकं स्वान्तःसुखाय लिखितमस्ति। ग्रन्थकारस्य भाव आत्मनः पुस्तकं प्रति स एव भवति यः कलाकारस्यात्मनः कृतिकृते विद्यते। कमलपरिमलस्य, मयूरनृत्यस्य, पिककलकण्ठस्य च विषये को नाम कविर्यः किञ्चिन्नालिखत्? सर्वस्मिन् कालिदाससदृशी प्रतिभा न भवति परन्तु यदा प्रथमं सौन्दर्यस्यानुभूतिर्भवति तदा प्रत्येकं तादृश एव रसो मिलति यादृशः कदाचित् कस्यचित् कवेर्मिलितो भवेत्। तत्कृते स आनन्दोऽपूर्वो भवति तद्व्यञ्जनां च स इच्छति। बीजे निहिता सर्जनशक्तिरङ्कुरिता पल्लविता च भूत्वैव कृतार्था भवति। इत्थमेव केनचिद् जगतो रहस्यस्य कियानपि परिचयो लब्धो भवति तर्हि तज्ज्ञानं व्यक्तं भूत्वा कृतिरूपेण मूर्त्तं च सम्पद्यैवावतिष्ठते। मन्त्रद्रष्टार ऋषयः, श्रीशङ्कराचार्यः, वाचस्पतिमिश्रो विद्यारण्यस्वामी च तामेव वार्तां प्रभूतं सुन्दरैः शब्दैः कथितवन्तः सन्ति, अत्यन्तमुत्तमैः, अकर्तनीयैश्च प्रमाणैरपुष्णन्, पुनरपि प्रभूतास्तत्परवर्तिन एतद्विषये लेखनीः उदतिष्ठिपन् अग्रेऽप्युत्थापयिष्यन्ति। एतेन संसारस्य कल्याणं वर्तते। यदि नवा विचारकास्तानि सनातनानि सत्यानि प्रतिसमयं नव्यवेशभूषाभूषितानि उपस्थापितानि न चेक्रीयेरँस्तर्हि ज्ञानस्रोतः शुष्कं जायेत। नवानां प्रतिपादकानां भ्रान्तयोऽपि प्रतिपाद्यविषयोत्तमतादिशि ध्यानमाक्रष्टुं शक्नुवन्ति।

पुस्तकं स्वान्तःसुखाय लिखितमस्ति,, अतोऽस्मिन् कियत्य ईदृश्यो वार्ताः सन्ति याः पुरातनाचार्याणां ग्रन्थेषु न लप्स्यन्ते। तेषां समक्षं ते प्रश्ना नासन् येऽस्मान् व्यथयन्ति, एतदर्थमस्माकमनुशीलनपद्धतेरपि ततो भेदः स्वाभाविकोऽस्ति। पाश्चात्यदेशेषु दर्शनं बुद्धिरञ्जनविषयतां प्रतिपन्नमस्ति। भारतस्य विद्वद्भिस्तन्मोक्षशास्त्रमभिगतमस्ति। अहमपीदृगेव मन्ये परन्तु मत्कृते विषयस्य प्रवेशद्वारं प्रथमतो भिन्नमस्ति। वारं वारं जन्ममरणयोर्भयदर्शनम्, मातुरुदरे पतितस्यार्भकस्य कल्पितकष्टानां जुगुप्सितकथानकानां पौनःपुन्येन श्रावणं च मह्यं न रोचेते। इमा अपि वार्ता ध्यातव्याः सन्ति। ये मूढधियो

जन्ममरणयोः दुखाद्, अविद्यायाश्च मोक्षप्राप्तेर्वार्ता न विचारयन्ति ते दयनीयाः सन्ति, दुर्लभममूल्यं च नरदेहं क्षिपन्तो विद्यन्ते । परन्तु प्रायशो मृत्युस्तादृग् भयानकघटना नास्ति यादृक् कियतां साधूनां महात्मनां च पुस्तकेषु प्रदर्श्यन्ते । हस्तपादस्याकुञ्चनं अस्या वार्तायाः सूचकं त्वस्ति यत् प्राणाः शरीरस्य भिन्नेभ्योऽङ्गेभ्य आकृष्यमाणाः सन्ति परन्त्वेतेन नैतत् सिध्यति यन्मुमूर्षोर्गभीरा पीडा बोभूयते बहुधा नाडिसंस्थानं शिथिलं संजायते मस्तिष्कं च क्रियातो विरतं भवति अतोऽनुभूतिर्भवत्येव नहि । ईदृशेषु पुस्तकेषु प्रायेणेदमिपि लिखितं भवति यत् प्रसववेदनातो व्यथितो भूत्वा गर्भस्थः शिशुः भगवतः सकाशं प्रतिज्ञां करोति यदहं धर्माचरणरतो भविष्यामि तव भक्तिं च विधास्ये । इदं कथनं कल्पनामात्रमस्ति । वारं वारं जन्ममरणयोर्भावः अर्थात् वारं वारं शरीरधारणं जीवस्याज्ञानस्य परिणामोऽस्ति । अज्ञानं स्वतो हेयमस्ति, तेन कतिविधा हानिर्भवति, परन्तु जन्ममरणयोर्दुःसहदुःखस्यातिरञ्जितानि चित्राणि कमपि विचारशीलं मनुष्यं प्रभावितं कर्तुं न शक्नुवन्ति । अविचारशीला हठिस्वभावा अपि एताभिर्वार्ताभिः क्षुब्धा नहि भवन्ति । एवमेव वैराग्यस्य दृढीकरणार्थं ईदृशेषु पुस्तकेषु प्रभूता एतादृश्यो वार्ताः कथ्यन्ते याः निःसारा निन्द्याश्च भवन्ति । स्त्रीणां निन्दा, तासां शरीरस्य गोप्यानामङ्गानां विस्तृतं वर्णनं कृत्वा भद्राभद्रकथनं च कुरुचेरभद्रतायाश्च द्योतकं त्वस्त्येव, तेनायमपि ध्वनिर्निःसरति यद् वक्ता स्वयं विरक्तो नास्ति अपरं गालीदानव्याजेन तेषां वस्तूनां वर्णनं कृत्वा स्वात्मानं तृप्तं चेक्रीयते यत्कृते तस्य चित्तं लालायितमस्ति । स्त्रीणां निन्दकैरेतन्नहि बुध्यते भवति यत् पुरुषाणां निन्दापि प्रायेण तैरेव शब्दैः कर्तुं शक्यते । ईदृशदुर्बलाधारशिलोपरि ज्ञानस्य सुदृढं दुर्गं नहि निर्मातुं शक्यते ।

मन्मते पुरुषार्थानां विवेचनं मोक्षाभिमुखनयनार्थं प्रशस्ततरो मार्गोऽस्ति । अर्थकामौ मनुष्यस्य स्वाभाविक्यौ प्रवृत्ती स्तः । एते शास्त्रं नापेक्षेते । विचारशीलस्य मनुष्यस्याभ्यामेव प्रवृत्तिभ्यां धर्मस्यावश्यकता प्रतीता भवति अपरं धर्मस्तं मोक्षदिशं नयति । ज्ञानं स्वत उपादेयमस्ति; क्षुद्राणि प्रलोभनानि भयं च तस्योपादेयतां वर्धयितुं नहि शक्नुवन्ति ।

विज्ञानं जगतः प्रतीयमानरूपोपरि प्रभूतं प्रकाशमपातयत् । दार्शनिकोऽस्या वैज्ञानिकप्रगतेरुपेक्षां कर्तुं न शक्नुयात् । एतस्य तात्पर्यमिदं नास्ति यद् दर्शनं विज्ञानस्यानुसारं संपद्येत । दर्शनं विज्ञानस्य विभिन्नानामङ्गानां स्वाम्यस्ति । तत् तेषां सामग्रीणामुपयोगं करोति, तेषां समन्वयं करोति अपरं तेषां त्रुटीरपि दर्शयति । दर्शनं स्वयं विज्ञानस्य शाखा नास्ति परन्तु वैज्ञानिकसिद्धान्तोपरि ततः प्रकाशः पतेत् । यथा यथा विज्ञानमग्रे वर्धते

तथा तथा तस्य समक्षमेते प्रश्ना आयान्ति यान् दर्शनमात्मनः क्षेत्रं मन्यमानमासीत्। अत्र दर्शनं विज्ञानं च मिलिते स्तः। दर्शनेऽस्माकं स सेतुर्लभ्येत यो भौतिकाऽभौतिके, दृश्यादृश्ये, जडचेतनौ च मेलयति।

क्षितिः, आपः, तेजः, वायुः, आकाशः, शब्दः, स्पर्शः, रूपं, रसः, गन्धश्च प्राचीनाः शब्दाः सन्ति। एषां सहायतया भारतीया विद्वांसो भौतिकजगतः स्वरूपं संबोधितवन्तः सन्ति। परन्तु यदि एषां शब्दानां त एवार्थाः सन्ति ये सांख्यन्यायवैशेषिकाणां प्रचलित-वाङ्मये क्रियन्ते तर्हि एतन्मतं भविष्यति यद् ये लोका एभिः शब्दैर्व्यवहरन्ति ते सत्यात् प्रभूतं दूरं सन्ति। एतत् क्षेत्रं विज्ञानमप्यमथ्नात्। अद्यापि तस्य खोजः समाप्तो नाभवत् सम्भवेत् सोऽग्रे स्वीयान् कतिपयान् सिद्धान्तान् परिवर्तयेत्। पुनरपि यावद् निश्चितरूपेण ज्ञातमस्ति तावतैव वयमेतदर्थं विवशा भवेम यत् इमान् शब्दाँस्तां विचारधारां च यस्यामेषां स्थानं लभ्यते त्यजेम अथवा पुनरेतेषां नव्यां निरुक्तिं कुर्याम।

नव्यनिरुक्तिकरणेन कस्यापि दार्शनिकस्य लज्जितत्वभावस्य वार्ता नास्ति परन्तु मदीयेयं धारणास्ति यद् एतेषां शब्दानां प्राचीनतमानर्थान् वयमद्य विस्मृतवन्तः स्मः। अस्यार्थस्य निरूपणमहमंशतः 'भारतीयसृष्टिक्रमविचारे' कृतवानासम्। प्रस्तुते पुस्तके तस्य विशदीकरणं कृतमस्ति। इयं निरुक्तिर्विज्ञानानुकूला विद्यते। निःसन्देहं ममोपरि वैज्ञानिकसिद्धान्तानां प्रभावः पतितोऽस्ति परन्तु मामको विश्वासोऽस्ति यद् वैज्ञानिकमते-कदाचित् संशोधनं भवेत् तदापि इयं मीमांसा स्थास्यति। अत्र दर्शनेन विज्ञानस्यानुसरणं नास्ति परन्तु यत्र विज्ञानं नोपतिष्ठते तत्र स्वप्रकाशः प्रक्षेपणीयः। यदि विज्ञानं क्वचन दार्शनिकमतस्य पुष्टिं करोति तर्हि द्वाभ्यां दर्शनविज्ञानाभ्यामस्य सुयोगस्य स्वागतं कर्त्तव्यम्।

दर्शनविज्ञानयोर्विरोधो नास्ति। द्वयोः परस्परं साहाय्यं मिलेत्। एतद् दृष्ट्वा ममाश्चर्यं भवति यत् प्राचीनानां मध्ययुगीयानां च भारतीयविदुषाम् एतत्साहचर्यस्य दिशं ध्यानं नायातम् विज्ञानस्यापराण्यङ्गानि बाढं नाभूवन्नाम परन्तु गणितेऽयं देशः परामुन्नतिमकार्षीत्। गणितदर्शनयोर्घनिष्ठः परस्परं सम्बन्धोऽस्ति। दिक्कालौ कार्यकारणशृङ्खला च द्वयोर्विचारणीया विषयाः सन्ति। परन्तु अस्माकं प्रमुखेषु गणिताचार्येषु न कोऽपि उल्लेख्यो दार्शनिकोऽभूत् नापि दार्शनिकेषु कश्चन गणितज्ञोऽभवत्। अद्यावधि इयं परम्परा प्रचलिताऽस्ति यत् ये पण्डितगणा दर्शनस्याध्ययनं कुर्वन्ति ते साहित्यं व्याकरणं च

पठन्ति परन्तु गणितात् सुदूरं तिष्ठन्ति। मयाऽस्मिन् पुस्तके स्थले स्थले गणितशास्त्राद् यान्युदाहरणानि गृहीतानि तेभ्यो विषयज्ञाने सहायता मिलति। विज्ञानाङ्गेषु गणितस्य विषयः सर्वेभ्यः सूक्ष्मतमोऽस्ति। तर्कशास्त्रगणितयोः परस्परं प्रभूतं सादृश्यं वर्तते। भारतीयदार्शनिकैरस्यां दिशि ध्यानं दातव्यम्।

अस्माकं प्राचीनदार्शनिकवाङ्मये द्वे त्रुटी विद्येते। एका त्वियमस्ति यत् तस्मिन् कलायाः सम्बन्धे किञ्चिदपि नहि कथितमस्ति। इदं स्वीकृतमस्ति यद् दर्शनं शुष्को विषयोऽस्ति तस्य कलया सह कोऽपि सम्बन्धो नास्ति। साहित्यस्य विद्वांसो रसविचारावसरे सौन्दर्यानुभूतिविषये किञ्चिदवोचन् परन्तु तेषां निरूपणमपूर्णमस्ति। वस्तुतोऽयं दर्शनस्य विषयोऽस्ति। एतदर्थमहं सौन्दर्यानुभूतेः कलायाश्च विवरणस्य समावेशमकार्षम्।

प्राचीने वाङ्मये सर्वतो महती त्रुटिरियमस्ति यत् तस्मिन्नाचारस्य विषये क्वचन विवेचनं नहि कृतं विद्यते। धर्मस्य वार्तास्तु प्रभूताः सन्ति परन्तु धर्मस्वरूपविषये तात्त्विको विचारो नोपलभ्यते। धर्मस्य कापि प्रत्यक्षं सार्वभौमपरिभाषाऽपि नहि दत्ता वर्तते। जैमिनिः कथयति 'चोदनालक्षणोऽर्थो धर्मः,' यस्य घोषणा, आज्ञा, वेदे कृताऽस्ति स धर्मोऽस्ति। इयं धर्मस्य परिभाषा नास्ति।' यत् खनौ लभ्यते तत् सुवर्णमस्ति,' एतत्कथनेन सुवर्णोद्गमस्य प्राप्तिर्भवति, तत्स्वरूपस्य बोधो न भवति। कणादः 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' —येनाभ्युदयनिःश्रेयसयोः सिद्धिर्भवति स धर्मोऽस्ति—इति कथयित्वा जैमिनेस्त्वग्रे याति। परन्तु वस्तुत इदं वाक्यमपि धर्मस्य स्वरूपं नहि परं फलं वदति। कर्मणः परिणामस्य सम्बन्धे तु प्रभूतः शास्त्रार्थो मिलति परन्तु सत्कर्मणः सम्बन्धे एतावान् सङ्केतः पर्याप्तः संबुद्ध आसीत् यत् श्रुतिर्यत् कथयति स धर्मः, सत्कर्म, कर्त्तव्यं चास्ति। तैत्तिरीयोपनिषदि गुरुः शिष्यं कथयति "यदि ते कर्मविचिकित्सा वा वृत्तिविचिकित्सा वा स्याद् ये तत्र ब्राह्मणाः संमर्शिनः युक्ता आयुक्ताः अलूक्षा धर्म्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः", यदि तव कर्मणः श्रौतस्मार्तयज्ञादिकर्मणः अथवा वृत्तस्य ( आचारस्य ) सम्बन्धे संशयो भवेत् तदा ये विचारशीलाः मृदुस्वभावा धर्मकामाः कर्मरता ब्राह्मणाः स्युः तेषामनुकरणं कर्त्तव्यम्। अयमादेशो व्यवहारे बाढम् उपयुज्येत परन्तु शङ्कानिवृत्तेरस्मिन् कोऽप्युपायो नहि दृश्यते। एवमेव यदा मनुस्मृतिः कथयति यद् आचारस्य सम्बन्धे 'श्रुतिः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः' श्रुतिः, स्मृतिः, सदाचारः यच्चात्मनः प्रियं भवति तत् प्रमाणं भवति, तदापि इदमेव कथयितुमापद्यते यदिदमपि कर्तव्यस्य यथावत् परीक्षणं न जातम्। आत्मनो यत् प्रियं लगति-अयं तु ईदृशो मार्गोऽस्ति यस्मिन् पदे पदे शङ्का समुदेति।

एते आदेशाः साम्प्रतं पर्याप्ता नहि मनितुं शक्यन्ते। लोका दार्शनिकं वैयक्तिकस्य सामूहिकस्य च धर्मस्य सदाचारस्य च स्वरूपं पृच्छन्ति। ते जिज्ञासन्ते यत् सत् कर्म किमस्ति ? कर्मणोऽच्छतायाः किं परीक्षणमस्ति ? धार्मिकाचरणस्य पक्षे को हेतुरस्ति ? अत्र दार्शनिकेन राजनीतेः, अर्थनीतेः दण्डविधानस्य, शिक्षायाश्च सम्बन्धे सम्मतिर्दातव्या भवेत् मार्गश्च दर्श्येत। यदि स स्वातन्त्र्येणैवं कर्तुं न शक्नुयात् तर्हि तस्य दर्शनं निष्फलमस्ति।

ममायं दृढो विश्वासोऽस्ति यद् दर्शनमेषां प्रश्नानामुत्तरं दातुं शक्नोति। एतदर्थं तत्कृते कस्याश्चित् श्रुतेराप्तपुरुषस्य च शरणाश्रयणस्यावश्यकता नास्ति। अस्मिन् पुस्तके एकस्मिन् बृहत्यंशे एषां प्रश्नानामुपरि विचारः कृतोऽस्ति।

दर्शनस्वरूपस्य अयथावज् ज्ञानस्यैवायं परिणामो यदत्र वेदान्तस्यार्थोऽकर्मण्यता संजाताऽस्ति। गीताया भगवद्वाक्यत्वडिण्डिमताडकाः तत्र प्रतिपादितं नैष्काम्यमकर्मण्यतां संबुध्यन्ते। विदेहराजस्य श्रीरामचन्द्रस्य श्रीकृष्णस्य च कर्मठजीवनानां कथां पठन्ति, इदमपि जानन्ति यद् व्यासः, वशिष्ठः, विश्वामित्रः, बुद्धदेवः, महावीरः शंकराचार्यः, कबीरः, नानकादयश्च संसारं मिथ्या मन्यमाना अपि कर्ममयं जीवनमात्मसादकार्षुः, पुनरपि, कर्मणः पलायनमेव त्यागः संबुद्धोऽस्ति। अतो लोकसंग्रहबुद्धिः शिथिला संजाता। क्रियाया अकरणम्, लोकानां दुःखपरिपूर्णजीवनस्य सुधारणार्थं सत्क्रियोपायस्याकरणम्, स्वोदरम्भरिता च तपस्त्वेनाभिमन्यन्ते; यो लोकसेवायामभिरमति स हास्यास्पदं संजायते। लोका इमां वार्तां व्यस्मार्षुः यत् देवगणा आत्मनामाध्यात्मिकं सुखं त्यक्त्वा निरन्तरं लोकहिते लग्नास्तिष्ठन्ति, वशिष्ठसदृशा योगीश्वरा ब्रह्मज्ञानिनो लोकहिताय मोक्षान्मुखं साचीकृत्य पुनर्मनुष्यशरीरधारणं कुर्वन्ति, बोधिसत्वा निर्वाणदिशातो मुखं परावर्त्य लोकहिताय सकृन्मातुर्गर्भे प्रविशन्ति। एषां पुराणादर्शानां विस्मृतिरस्मानधोऽपातयत्। योगित्वं सत्यदार्शनिकत्वं लब्धुमत्यन्तं कठिनं त्वस्त्येव, वयं कर्मशीलाः सद्गृहस्थाः सन्नागरिका अपि नहि सम्पन्नाः स्मः। ये तपोधना उपायान्तराभावे लोकहिताय राजानं वेनं स्वहस्तैरमारयन् तेषां कथा अपि वयं व्यस्मार्षुः; अत्र स एव महासाधुरस्ति यो हि समाजस्य धग्धग्जाज्वल्यमानविशालभवनोपरि तोयैकविप्रुट्प्रक्षे पणस्याऽपि भार वोढुं नहि समुत्सहते।

मया कतिषुचित् स्थलेषु साग्रहं कथितमस्ति यद् योगाभ्यासं विना दार्शनिकं ज्ञानं नहि भवेत् अद्यत्वे निदिध्यासनस्य परिपाटी विलीना विद्यते। वेदविद्यालयेषु पाठ-

शालासु च पुस्तकानि रचितानि जायन्ते । इतः कतिचन शतानि वर्षाणां पूर्वं ये तर्काः वादेषूपयुज्यन्ते स्म त एवाद्यत्वेऽपि कण्ठस्थीक्रियन्ते । कर्मसाक्षात्काराभ्यां दर्शनस्यैतावान् विच्छेदः संजातोऽस्ति यत् स्वसम्बन्धे 'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्' इत्युक्तिमालपन् खण्डनखण्डखाद्यसदृशग्रन्थकर्ता श्रीहर्षोऽपि वेदान्तोपदेशस्याधिकारी सम्बुध्यते । सन्यासिनस्तु बहुधा ग्रन्थाध्ययनस्यापि श्रमं नहि जानन्ति । तेषां महावाक्यावचतुष्टयावृत्त्यैव ब्रह्मज्ञानं समत्स्यते ! ये लोकाः सायं प्रातश्च सन्ध्याकरणसमये सम्यक् त्रीन् प्राणायामान् कर्तुं नहि शक्नुवन्ति । ते छात्रान् योगशास्त्ररहस्यसबोधनार्थं दुःसाहसं कुर्वन्ति ।

अह नेदं कथयामि यत् पुस्तकानि पठितव्यान्येव नहि । यद्येवं संबुध्येय तर्हि पुस्तकं लिखेयमेव किमर्थम् ? पुस्तकं श्रवणमननयोः सामग्री विद्यते परन्तु केवलं श्रवणमननाभ्यां कार्यं न निर्वहेत् । साक्षात्कारस्य कृते, आत्मनो जगतश्च स्वरूपस्य ज्ञानार्थं च योगाभ्यसोऽनिवार्यतयाऽऽवश्यकोऽस्ति । अस्मिन् विभापार्थं स्थानमेव नास्ति । समाधावेव साक्षात्कारो भवति । य एतन्मार्गोपरि यावदेवाग्रे गन्तुं समभ्यस्यति तस्य तावदेव विशदं विशङ्कं च ज्ञानं सम्पद्यते । समाधेरेकक्षणस्य तुलनायां पठनपाठनयोर्मननस्य च वर्षसहस्रमपि पुरः स्थातुं न शक्नुयात् । शर्करासम्बन्धे एकेन पुस्तकालयेन मेया ग्रन्था लेखितुं पठितुं च शक्यन्ते परन्तु तस्याः स्वादं स एव जानाति यस्य जिह्वोपरि शर्कराखण्डस्य एकोंशः पतितो भवेत् । श्रोत्रियतायाः क्षामतया सोऽपरेषामन्तिकमात्मनो ज्ञानस्य कमप्यंशमुपस्थापयितुं बाढं माशकत् परन्तु स स्वयं तमानन्दमनुभवति यो ज्ञानस्य नित्यानुषङ्गी विद्यते । सत्यं त्वेतदस्ति यत् कोऽप्यनुभवो अपरान्तिकं यथावत् प्रापयितुं न शक्यते । मादृशा अल्पज्ञाः कथने यां वार्तां विकृतां करिष्यन्ति तामेव ये बहुश्रुता मेधाविनश्च भवेयुस्ते सुबोधां करिष्यन्ति परन्तु यत्तावंवाङ्मनसागोचरमस्ति तत् स्वयं भारत्यपि शब्दबद्धं कर्तुं नहि शक्नुयात् । भारताद् बाह्या विद्वांसो दर्शनस्य योगेन कमपि सम्बन्धं नामन्यन्त । यदि दर्शनं केवलं बुद्धिविलासस्य विषयो भवेत् तर्हि इदं विभाजनं सम्यक् स्यात् । दार्शनिकं मतं साक्षात्कारस्य परिणामोऽस्ति अथवा कल्पनामात्रमस्ति । जगतः स्वरूपसम्बोधस्य प्रयत्ने कतिचनेदृश्यो ग्रन्थयो लभ्यन्ते यांस्तर्केण विशकलयितुं न शक्यन्ते ताः प्रत्यक्षानुभवेन उद्घटन्ते अथवा बद्धा एव तिष्ठन्ति । मां वारं वारं योगस्य प्रशंसाम् अपरं केवलस्य पाण्डित्यस्य निन्दां च कुर्वन्तं दृष्ट्वा स्थितम् इमं प्रश्नं पृच्छेत् यत् किं त्वं योगी असि ? अहमेतस्मिन् विषय एतावदेव

निवेदं करिष्यामि यत् सद्गुरोः कृपा मयि योगं प्रति असीमां श्रद्धामुदपादयत्। अहं योगस्य ज्ञानस्य च विषये यत् किञ्चिल्लिखितवानस्मि तत्सर्वं चिन्ममानुभवस्य परिणामो भवेन्नवा किन्तु मे दृढविश्वासस्य व्यञ्जकं तु निःसन्देहमस्ति। एतावन्मात्रमहमपरं कथयितुमीहे यदद्यत्वे योऽयं विश्वासः प्रसृतोऽस्ति यद् वयमाधुनिका ऐतत्कालिका मनुष्या योगाभ्यासस्य योग्या न स्मः, इत्येतत्कृते कोऽप्याधारो नास्ति। अद्यतनो मनुष्योऽपि योगमभ्यसितुं शक्नुयात् योगस्य स्थानं काप्यपरोपासनाशैली नायत्तीकुर्यात्।

इदं तु न मनोविज्ञानस्य पुस्तकमस्ति नापि कर्त्तव्यशास्त्रस्य, नापि धर्मशास्त्रोपासनयोर्नापि योगकलयोः। अस्मिन्नेषां सर्वेषां विषयाणां स्तोकः प्रभूतो वा सन्निवेशो जातोऽस्ति परन्तु स पर्याप्तो नास्ति। अध्यात्मशास्त्रं तं प्रकाशं क्षिपति यस्य साहाय्येनाज्ञानान्धकारो दूरीकर्तुं शक्यते। जगतः स्वरूपस्य परिचयेन सत्यं शिवम् सुन्दरम् इत्येतेन सम्बन्धस्थापिकानां समस्यानां निर्ग्रन्थनं सम्पद्यते। अध्यात्मज्योतिः समस्तं जीवनं विशदं शुभ्रं च कुर्यात्। मम विश्वासोऽस्ति यद् यो दार्शनिकः सिद्धान्तोऽस्मिन् पुस्तके प्रतिपादितोऽस्ति स सर्वानपि दृगविषयान् विज्ञानस्य सर्वाण्यङ्गानि योगमाचारमुपासनां कलां चैकस्मिन् सूत्रे ग्रथितुं समर्थोऽस्ति। येभ्यो लोकेभ्य इमे प्रश्ना रोचन्ते तैर्गभीरमननस्योपयोगः कर्त्तव्यः। शङ्कानामुत्थापननिराकरणे तथाऽऽध्यात्मिकप्रकाशे विभिन्नशास्त्राणां विस्तरश्च न केवलं बुद्धिविलासस्य व्यक्तेर्मानसतुष्टेश्च साधनं भविष्यति प्रत्युत एतेन लोकस्यापि प्रभूतं कल्याणं भविष्यति।

पुस्तकं खण्डत्रये विभक्तमस्ति। प्रथमखण्डे प्रायेणेदृशा विचाराः सन्ति ये सकले पुस्तके समुपयुक्ताः सन्ति। एतदर्थं तदाधारखण्डपदेन कथितमस्ति। अस्मिन् प्राप्तानां कियतां निर्णीतार्थानां विस्तृतविचारानन्तरं द्वितीये खण्डे परिवर्तनमप्यापतितमस्ति। द्वितीयस्य खण्डस्य नाम ज्ञानखण्डं विद्यते। अस्मिन्नेव मुख्यो विषयः प्रतिपादितोऽस्ति। तृतीये खण्डे, यादृशं हि धर्मखण्डेतिनाम्नैव प्रकटीभवति धर्मसम्बन्धी विमर्शो विद्यते।

पारिभाषिकशब्दविषये यत् किञ्चिद् वक्तव्यमस्ति। केचन नूतनाः शब्दा मयोपयुक्ताः सन्ति, परमधिकाः शब्दास्त एव सन्ति ये भारतीयदर्शनस्य सर्वेषामपि विद्यार्थिनां परिचिता विद्यन्ते। परं नाहमेतत् कथयितुं शक्नोमि यत् संवित्-प्रत्यय-प्रज्ञानादयः शब्दाः पुरातनपुस्तकेषु सर्वत्र यायातथ्येन तेष्वेवार्थेषु व्यवहृताः सन्ति येषु मया प्रयुक्ताः। वस्तुस्थितिरियमस्ति यद् एषां शब्दानां सर्वतन्त्रसम्मताः केचनार्थाः सन्त्येव नहि, विपर्ययाध्यासादयः शब्दा मया समानार्था अभिमताः यद्यप्येषां प्रतितन्त्रं प्रयोगेषु भेदोऽस्ति।

सत्यं सार्वदेशिकं विद्यते । तद् भौगोलिकसीमासु नहि बन्धुं शक्यते । सांस्कृतिकक्षेत्रस्य पक्षपातेन कालुष्यं नहि संपादनीयम् । सत्यं ननु प्राच्या हस्ते विक्रीतं नपि प्रतीच्याः दर्शनस्य प्राच्यप्रतीच्यात्मकविभागद्वये वण्टनं भ्रामकं कृत्रिमं चास्ति ।

इत्थं दर्शनस्य केनचित् संप्रदायविशेषेण नित्यसंबन्धो नास्ति । एवं मन्ये यत् सभ्यतायाः संस्कृतेश्च समुदयः सर्वतः प्रथममार्यजातावभूत् अपरं पूर्वयुगीयास्तपस्विन ऋषीणां मनूनां च शरीरं धृत्वा सर्वतः प्रथममार्यजातिमात्मज्ञानस्य मार्गमदर्शयन् । अतो ज्ञानस्य योगस्य च प्राचीनतमः परिपूर्णतमश्च भाण्डागारो वेदोऽस्ति । अस्मिन् देश इयं परम्परा कदापि लोपं न प्रापत्, आप्ताः पुरुषा वारं वारम् अवतीर्णा बोभूयन्ते । ते एतादृशकुलेषु समजायन्त ये सनातनधर्मावलम्बिन आसन् तेषां श्रोतारोऽपि प्रायेण एतत्संप्रदायानुयायिन एवासन् । एतदर्थं स्वभावतस्तेषां भाषाया निरूपणशैल्याश्चोपरि सैव मुद्राङ्किता यल्लौकिकव्यवहारे हिन्दुत्वं कथ्यते । परन्तु ब्रह्मज्ञानित्वसम्पत्त्यर्थं हिन्दुकुले जन्मग्रहणं, संस्कृतस्य पवित्रभाषात्वस्वीकारः, हिन्दूरीत्योपासना चावश्यकानि न सन्ति । एतद्देशस्य महाभागा आचार्या योगाधिकारे जातेः कुलस्य, संप्रदायस्य वा स्थानं नाददुः । मोक्षपदवी एभ्यः क्षुद्रभेदेभ्य उपरि वर्तते, तत्पथोऽसङ्कीर्णोऽस्ति ।

दर्शनं शुष्कं शास्त्रं मन्यते । लोकाः स्वकीयभावुकहृदयानां तृप्तिमन्विष्यन्ति तेषां कृते दर्शनं वस्तुतो नीरसमस्ति । अद्वैतवादः कस्यचिदीदृशस्य लोकस्याशां नहि बध्नाति यत्रोपस्थाय जीवो दिव्यस्य संगीतस्य, दिव्यस्य स्पर्शस्य, दिव्यस्य रूपस्य नित्यमनुभवं करिष्यति, स तु जीवसत्तानुभूतेः स्थितिमपि नानुमोदते, स तपसो विरतेर्योगाभ्यासस्य चादेशं विदधाति । इमाः सर्वा वार्ताः, श्रवणे, कथने, क्रियायां च कटुकाः सन्ति परमश्रेयस इदं रूपमस्ति यत् तद् आदौ विषवत् प्रतीतं भवति परन्तु अन्तेऽमृतोपमं दृश्येत । क्वाथः कटुको भवति परन्तु पानमात्रेण प्राणः पीयूषमयः संपद्यते । अयं स एव सोमरसोऽस्ति, यस्य महिमानं वेदा गायन्ति । परा विद्या परमानन्दरूपाऽस्ति ।

अहं स्वस्य त्रुटीर्जानामि । प्रभूतेषु स्थलेषु निबन्धो दुरूहः संजातो भवेत्, प्रभूताः शङ्का अनिवारितास्तिष्ठेयुः, ममाल्पज्ञतायाः, अल्पमेधावितायाः, प्रमादस्य च कारणात् क्वचित् क्वचित् विषयस्यान्यथाप्रतिपादनमपि कृतं भवेत् विमतप्रतिवचने क्वचित् क्वचित् दुर्विनीतभाषायाः प्रयोगोऽपि जातः स्यात् अपरं शास्त्राणां निरुक्तौ मीमांसायां च वितथाख्यानमपि घटितं भवेत् । एतदर्थमहं क्षमां याचे । एषु दोषेषु सत्स्वपि यदीदं पुस्तकं

कस्यचित् पाठकस्य- वास्तविकजिज्ञासोत्पादने कस्यचित् कर्त्तव्यपथप्रदर्शने च समर्थं भवेत् तर्हि आत्मानमहं धन्यं मंस्ये।

अहमात्मनो विदितस्याविदितस्य चापराधस्य कृते क्षमायाः प्रार्थनां कृतवानस्मि। यदि पुस्तके किञ्चिदप्युपादेयमस्ति तर्हि तदर्थं पौराणिकान् पथिकृत ऋषीनारभ्याद्यतनानां सर्वेषां सत्यसाक्षात्कर्तॄणां विचारकाणां चाहमृणी अस्मि। एत एव लोका अस्माकं ज्ञान-कोषं रत्नैः पूरयित्वा मनुष्यस्य सभ्यतायाः संस्कृतेश्च सम्पत्त्यर्थं, परमपुरुषार्थप्राप्तेश्चावसरं प्रदत्तवन्तः। येषां गुरुचरणानां प्रभाऽऽत्मनः शीतलस्पर्शेन मम जीवनं पुनीतमकार्षीत् तान् प्रति कृतज्ञताप्रकटनं मत्कृते धृष्टता भविष्यति।

मम पुरातनश्छात्रो डाक्टरब्रह्मानन्दोऽग्निहोत्री अस्य पाण्डुलिपिमपठत्। स च पापठयमानोऽहं च शोश्रूयमाण आस्व। तस्यैतेन कश्चन लाभो भवन्नवेति नाहं कथयितुं शक्नुयाम् परन्तु तस्योक्तानामनुक्तानां च शङ्कानां निराकरणसमये मध्ये मध्ये प्रभूता विचारा मम ध्याने समायाताः येषां यथास्थानं सन्निवेशो मया कृतः। देवगणा डाक्टरा-ग्निहोत्रिणः कल्याणं क्रियासुः।

केन्द्र कारागारः<br>बरेली नगरम्<br>२३ वृश्चिके २०००

सम्पूर्णानन्दः

— —

# अनुवादकस्य भूमिका

## श्रीः

साम्प्रतमहं चिद्विलासस्य विषये किञ्चित्कथयितुं प्रयते। भवेत्तत्र भवतां महती उत्कण्ठा यत् केनोद्देश्येनायमनुवादो हिन्दीभाषायाः संस्कृतभाषायामुपस्थाप्यते यन्नेतः पूर्वं कोऽपि एतादृशो दार्शनिको ग्रन्थो हिन्दीभाषातः संस्कृते अनूदितोऽभूत्। यस्यां भाषायां यो हि विषयो नोपलभ्यते स एव विषयः प्रायेणान्यभाषातः समाकृष्य तद्भाषा-शरीरमलंकर्तुमाध्यात्मिकीं वोन्नतिं परिवर्द्धयितुं तस्याः क्षीणं वा विग्रहं पोषयितुमन्तर्भाव्यते।

अधुना हिंन्दीभाषायां मौलिका अनूदिता वा सन्ति ग्रन्थाः, तेषामनुवादः सामयिको भवेत्। परं दार्शनिकोऽयं हिन्दीभाषातः संस्कृते सादरं समानीयते इत्यत्राश्चर्यपरम्परा न शाम्यति सरस्वत्या विशिष्टमनुग्रहमन्तरा; इति चिन्तायामुच्यते। सप्तचत्वारिंशदधिकैकोनविंशतिशततमे ख्रिस्ताब्दे विहारसंस्कृतसंजीवननाम्न्या विद्वत्परिषदो वार्षिकोत्सवे सभापतिपदमलंकर्तुमामन्त्रिताः संयुक्तप्रान्त- ( अधुना उत्तरप्रदेश ) शिक्षासचिवाः श्रीसम्पूर्णानन्दमहोदया मया सबहुमानमवलोकिताः। अहञ्च स्वकीयमभिलाषमवोचम्, भगवन्, अद्यत्वे यदि कश्चन जर्मनदेशीय आङ्गलदेशीयो वा गुणग्राही संस्कृतज्ञो भवेदस्मिन् भारते तदा मदीयं रूपं प्रकटयितुं स प्रयतेत। यो हि विषयो मया चिरादन्वेषितस्तस्य पूर्तिस्तु स्वातन्त्र्यमाप्तुं समुद्यतेऽस्मिन् भारतेऽवश्यं विधेया। ते च मामन्वरुन्धन् लखनऊपत्तनमुपस्थातुम्, तदनुसारं तत्रभवतां शिक्षासचिवानामालये पञ्च दिनानि यावदहमासम्। एतैर्मिताः कतिचन ग्रन्था मया ससंरम्भं समालोचिताः। परमयं चिद्विलासो मयामूलचूडं परिदृष्टः। स्वकीयमागमनप्रयोजनञ्च सविस्तरं श्रावितम्। भूतपूर्वकाशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीमतां म. म. प. गोपीनाथकविराजमहोदयानामभिलाषपत्रञ्चैषां पुरस्तादुपस्थापितम्। कविराजमहोदयानां पत्रस्यायमेव सार आसीद् यदद्यावधि व्याकरणदर्शनपुस्तकं न केनापि यथावल्लिखितम्, यच्चास्य श्रीरामाज्ञापण्डितस्य मानसे निमज्जति। यद्येतत्पुस्तकमाकारं लब्ध्वा जनतायाः समक्षमायायात् तर्हि इतिहासे काचनानिर्वचनीया क्रान्तिवर्ष्मयतीत्यादि। तत्प्रसङ्गतो मया हिन्दीभाषीय-

चिद्विलासस्य चतुःषष्ट्यधिकद्विशततमपृष्ठस्थः शिक्षाशीर्षकीयोंऽशः[1] शिक्षासचिवस्य पुरः प्रदर्शितः । तद् दृष्ट्वा ते मामवादिषुः--'पंडित जी आप अपना कार्य पूरा करें ......"

इत्यादि । "वर्षद्वयेनैवाहं तं विषयं पूरयितुं प्रयतमान आसम्, यो हि विषयः स्वर्गीय-डाक्टर वेनिसमहोदयानां जीवनकाले तदादेशानुसारं वर्षचतुष्टयश्रमसिद्धो ग्रन्थरूपमाप्तुं वर्षद्वयात्मककालमपेक्षमाण आसीत्; तस्य पूर्तिर्मया सह विधेयेति तात्कालिकेनाधिकारिणानुरुद्धः स्वकीयगौरवस्यापह्नवं समालोच्य प्रख्यातवांस्तदीयां स्पृहाम् । स एवापूर्णो विषयोऽधुना मया पूरणीयः" इति च तमहमवोचम् । तदनन्तरं "स्वकीयं कार्यं पूरयतु भवान्" इत्यादेशं शिक्षासचिवानां सम्प्राप्य पञ्चमे दिवसेऽनङ्गदेशं (वलियामण्डलं) गन्तुमुद्यतेन मया एते महोदयाः पृष्टाः । महाभागाः ! चिद्विलासं दृष्ट्वा मन्मनसि एतदायाति यद् भवान् संस्कृतेऽस्या अनुवादं करोतु । तैश्चोक्तम्, "कारागारे समयप्राचुर्यादयं ग्रन्थो मया लिखितः, अधुना नास्त्यवकाशोऽस्यानुवादकार्यसम्पत्त्यै" इति । अहमवोचम् नास्ति श्रमोऽनुवादेऽस्य ग्रन्थस्य । केवलमत्र विभक्तेर्योजनमात्रमपेक्ष्यते, क्रियाशब्दानाञ्चोपन्यासः । "एतावानपि समयो मया नोपलभ्यते" इति तैरुक्ते सत्यहमवादिषम् 'अहमेवैतत् कार्यं सरस्वतीभवनसमयतोऽतिरिक्ते समय एव समापयिष्यामि' इति । तैः सहर्षमेतत् स्वीकृतम् । एतदनुवादकार्यञ्च मया वर्षात्मकेन कालेन समापितम् ।

अत्र हिन्दीभाषायां प्रचलितानां शब्दानां प्रकृतिभूताः शब्दा, के ? इत्येतद्विचारे भूयान् समयो लगितः[2] । एवं रीत्यानूदितं चिद्विलासं तेषां पुरस्तादुपस्थाप्य मया भणितम् भवतु नामैतद् ग्रन्थरत्नं भवतामेव नाम्ना प्रकाशितम् । इयं हि रीतिः सायणप्रभृतिभिर्विद्वद्भिरवलम्बिता; किमुत मदीयः शिष्यः पं० सदाशिवदासशर्मापि (व्याकरणाचार्यः, साहित्याचार्यः, वेदान्तशास्त्री) यो हि साम्प्रतमुत्कलप्रदेशे बलाँगीरमण्डले राजकीयाङ्गल-

---

टिप्पणी १—तस्याविकलं रूपम् —' ऐसी शिक्षा देना सब का काम नहीं है । साधारण पाठ्यविषयों के अध्यापक तो बहुत मिल सकते हैं, परन्तु विद्यार्थियों को धर्म की शिक्षा देकर दूसरा जन्म देने की योग्यता रखने वाले आचार्य कम ही होते हैं । यह काम ब्रह्मबन्धुओं का नहीं हैं, ब्राह्मण का है । आचार्य छात्र के लिये तो पूज्य है ही, समाज का कर्तव्य है कि ऐसे व्यक्तियों का समादर करे और उनको निष्कंटक कार्य करने का अवसर दे ।"

टिप्पणी २—एतस्य स्फोरणं पश्चात् करिष्यामि ।

कलाशालायामध्यापकपदमध्यास्ते (पि. इ. एस.) दशभिः सहस्रैः श्लोकैस्तालसर्वस्वादिग्रन्थं विरचय्य रायगढ़पन्तस्थस्य राज्ञो नाम्ना व्यलिखत्। नहि मयात्र किञ्चित् परिवर्तितं परिवर्द्धितं वा, केवलं विभक्तयः क्रियाशब्दाश्च संनिवेशिता इति कथमत्र मदीयं नाम भविष्यति" । तेऽवोचन् 'नैतद् युज्यते'। पुनरपि मयोक्तम्-भगवन् भवादृशा आधुनिका अधिकारिणो लेखकैर्लिखिते पत्रे स्वहस्ताक्षराङ्कनं कुर्वन्ति तथैवात्रापि विधेयम्।' परं कथमपि तथा कर्तुं ते समुद्यता नाभवन्। स्यादेतत्, एकस्मिन्नवसरे एकः कश्चन मदीयः सुहृद् मामवोचत् - 'पण्डित महाशय, भवता तु श्रीसम्पूर्णानन्दस्य नाम संस्कृतसाहित्येऽमरतां नीतम्' । मया कथितम् 'कथमिति' । सोऽवादीत्–'चिद्विलासस्यानुवादेन'। अहं तमवादिषम्भगवन्, न भवता साधु बुद्ध्यते। तस्य ग्रन्थस्यानुवादकस्यैव नाम तत्र मुद्रितं भविष्यति न तु श्री सम्पूर्णानन्दस्य। तन्नाम तत्रोपन्यसितुं बहुधा अनुरुद्धास्ते तथा कर्तुं न स्वीचक्रुः।'

अनूद्य चायं ग्रन्थः श्रीमतां बिरलाविद्यालयप्रधानाध्यापकानां प० सभापत्युपाध्यायानां पण्डितसम्राजां पुरस्तादुपस्थापितः । काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षान् म० म० प० श्रीनारायणशास्त्रिखिस्तेमहाशयांश्चेमं ग्रन्थमहमदर्शयम् । यत्र क्वचन तेषामुक्तमहोदयानामनुमत्या कांश्चन शब्दान् पर्यवर्तयम् । पुनरपि सकलो ग्रन्थः शिक्षासचिवानां पुरस्तात् श्रावितः । ते च समनोयोगमामूलशुङ्गं ग्रन्थं पर्यवैक्षन्त, परिवर्तितवन्तश्च बहून् शब्दान् ये हि नेदानीं संस्कृतभाषायां तथा प्रयुज्यन्ते ।

अत्रैतदहं वच्मि, पाठकाः! मयास्यानुवादकार्ये व्यापृतेन महाञ्श्रमः स्वीकृतः। मन्मनसि बद्धमूलोऽयं विचार आसीद् यद् हिन्दीभाषायां ये शब्दाः सन्ति, तेषां मूलशब्दानेव प्रायोऽत्र निवेशयिष्यामीति। कृतञ्च मया तथा। पश्यन्तु भवन्तः,—प्रोञ्छतिपहुँचता है, छोपनम्=छूना; छुवति=छुवति; अस्माकं देशे 'अछोप' शब्दोऽधुनापि प्रचलितोऽस्ति नीचेऽर्थे : अच्छोपः अस्पृश्य इत्यर्थः अच्छुतः=अछूत। वुडनम्=डूबना, ठेठ हिन्दीभाषायां 'बूडना'। क्षामात् क्षामम्=कम से कम । बुद्धः=बुझ गया। वहोलनम्—भूलना, इत्यादि। एवं रीत्या मूलशब्दखोजने मया महान् समयो व्ययितः, इतः पूर्वं यादृशी संस्कृतलेखनपद्धतिरासीन्मे सा च परिवर्तिता । छात्रावस्थायां संस्कृतलेखने यो हि मार्गोऽवलम्बित आसीत् स च मार्गः श्रीमद्भिर्वेनिसमहोदयैः परिशोधितः। तेषामादेशानुसारं स्वीयां प्राचीनां पद्धतिं सरलां विधातुमहं यथेष्टं प्रायतिषम्, यस्यादर्शो वेदान्तकल्पलतिकाया भूमिकायां मयोपस्थापितो वर्तते । तथा संस्कृतसञ्जीवनपत्रिकायां

यो हि अक्षरविज्ञानविषयको लेखो मया लिखितस्तावत्तु मदीया सरला सरणिरेव दृष्टिगोचरीभवति। परमत्रत्वे ततोऽपि सरलः पन्था मयावलम्बितः, यो हि सारस्वतसुषमायां, पत्रिकायां दृष्टिपथमायाति।

चिद्विलासे तु कश्चनान्य एव मार्गः शरणीकृतः। तत्र हि मया प्रयतितं यदयं दार्शनिको विषयोऽतीव गभीरोऽस्ति। यद्ययं विषयो दुर्बोधायां भाषायां निबद्ध्यते तर्हि भाषाबोधन एव सर्वा शक्तिः पाठकानां क्षीणा स्यात्, तर्हि कथं ते प्रभवेयुरर्थावबोधने। अतो मदीयेऽनुवादे हिन्दीभाषाया महान् प्रभावो गोचरीभवति।

किञ्च संस्कृतभाषाशिक्षणेऽप्ययं ग्रन्थोऽनिर्वचनीयं साहाय्यं दास्यति। यदि नाम कोऽपि सज्जनः संस्कृतभाषायां प्रवेशं वाञ्छति तर्हि हिन्दीभाषायाश्चिद्विलासं संस्कृतञ्च तं पुरोधाय समनोयोगं पठेत्तदावश्यमेव कियद्भिरहोभिः संस्कृतं वक्तुं शक्नुयात्।

अस्तु, सम्प्रतं चिद्विलासस्य मौलिकतामत्र क्रमशो निर्दिशामि। अस्य ग्रन्थस्य लेखकः कारागारे बद्धः परमस्वतन्त्रो विचारेण न तु कायेनासीत् प्रवृत्तिश्चास्य लेखकस्य बाल्यादेव दर्शनस्य गूढं तत्त्वमवबोद्धुं सततं परिवर्द्धमाना सागरसन्निधिमागता गङ्गेवानेकमुखी आसीत्।

"सम्यग्दर्शनसम्पन्नः कर्मभिर्न स बद्ध्यते।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते॥"

इति सिद्धान्तमवलम्ब्य दर्शनार्थावगमार्थमनेन सपरिकरं बहव उपायाः शरणीकृताः। भारतीयदर्शनाध्ययनेनैव नास्य स्पृहा शान्तिमाससाद। किन्तु पाश्चात्यदर्शनसागरे निमज्ज्य तत्रत्यमुक्ताकलापानप्यात्मसात्कृत्य आपातालनिमग्नपीवरतनुर्मन्दर इव स्वसिद्धान्तादप्रच्याव्योऽयं सम्पन्नः। गणितशास्त्रपारगता अस्य दर्शनोन्मुखी प्रतिभा प्राञ्जलं पर्यवीवृधत्। निगमागमानां सावेशं समालोचनापूर्वकाध्ययनञ्चास्य प्रासूतोभयविधदर्शनावलोकननिकषोपलनिशितां साध्वीं धियं, या हि चिन्तमन्तर्भाव्य चिद्विलाससदृशं ग्रन्थरत्नं प्रासारयत्।

अस्मिन् पुस्तके त्रीणि खण्डानि सन्ति। प्रथमः खण्ड आधारनामको विद्यते, द्वितीयो ज्ञानखण्डः, तृतीयस्तु धर्मखण्डः। प्रत्येकं खण्डे अधिकरणभेदा निर्दिष्टाः सन्ति। अनया रीत्या प्रकरणादिनिर्देशस्तेषां नामानि च मानसिकीं गैर्वाण्या वाण्याक्रान्तां परिस्थितिं सूचयन्ति। यदि नाम संस्कृते स्वलिखितं भवेदिदं पुस्तकं, तदास्य

रूपं नहि साधारणै रधिगन्तुं शक्येत। हिन्दीभाषायां लेखनेन स्वतन्त्रे भारते विशिष्टपदाधिकारिणां तत्रत्सचिवानामिवैतत्पुस्तकस्थनां विषयाणां सारल्येनाभिगम्यत्वं जागर्ति। तथा सति संस्कृतेऽनूदिता विषया अपि न हि तथा दुर्बोधाः सन्ति यथान्येषु दर्शनेषु उपन्यस्ताः पदार्थाः।

अत्राहं ग्रन्थकर्त्तुर्वद्धेर्वैभवं, तस्या नैर्मल्यं, व्यवहारोपयोगिताञ्च क्वचन स्थलेषु दर्शयामि। प्रक्षिप्यतां चित्तप्रसादाधिकरणे दृष्टिः, तत्र हि, मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् (योगसूत्रपा.१.सू.३३)। अत्रत्यानां मैत्रीकरुणादीनां यादृशं रूपं प्रकटितं, यादृशञ्च सूत्रकर्तुस्तात्पर्यं स्फोरितं नहि तादृशं तात्पर्यं क्वचन संस्कृतसाहित्यग्रन्थेऽभिव्यक्तमस्ति। मैत्रीकरुणामुदितोपेक्षाणां चित्ते केवलं परिभावनया नहि कश्चनोपकारश्चतुर्षु स्थलेषु स्याद् यावत् क्रियात्मना तासां परिणमनं न भवेत्। तत्रैव पश्यन्तु भवन्तः तत्रोट्टङ्कितमस्ति यन्मैत्र्यादीनां भावनानां यथावत्परिपालनन्तु तदैव भवेद् यदाऽऽसामनुसरणकर्त्ता स्वयं पूर्णज्ञानो भवेत्। जिज्ञासुस्तु ज्ञानमार्गेऽधुना चलितुमारभते। अनया रीत्या सिद्धान्तं दर्शयित्वापि साधारणमपि जिज्ञासुं न हि ग्रन्थकारः स्वतन्त्रमजहात्, किन्तु तमपि भावनाधिकारिणमभ्युपगम्य ताः प्रयोगे समसज्जयत्। संक्षेपेण लिखितोऽयं विषयो मनसि नायाति चेत्तदधिकरणं संस्कृते पठ्यताम्।

अपरे तु कर्मनिर्मूलनक्षमास्तमेव पन्थानमवलम्ब्यास्मिञ्जगतीतले सुखिदुःखिपापिपुण्यवद्भेदेन चतुर्विधान् प्राणिनो दृष्ट्वा 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्युक्तपद्धत्या ईर्ष्याद्वेषादिप्रयुक्तक्रियायाः प्रतिषेधार्थं चतसृणां भावनानां चित्ते स्थापनार्थमेतत् सूत्रमिति वदन्ति। ते कर्ममार्गात्प्रच्युता अच्युतानां पदवीं स्प्रष्टुमपि नार्हन्ति।

ग्रन्थकारेण षष्ठेऽध्याये नानात्वसंकोचशीर्षके परायाः विद्यायाः स्वरूपनिरूपणावसरे निर्वाणशब्दार्थोऽत्यन्तं हृदिस्पृक् प्रदर्शितः। तथाहि--"आत्मसाक्षात्कारः पराविद्यास्ति, यस्यां माया पूर्णतया शान्ता जायते। इयमेवावस्था नयभेदेन कतिभिर्नामभिराकार्यते। अविद्याया बन्धनात् छुटकारो मिलति, अत इयं मुक्तिर्मोक्षो वास्ति। अस्मितादीपको बुद्धो जायते, अत इदमेव निर्वाणमस्ति।" समीक्षन्तां भवन्तः कीदृशोऽयं सम्बन्धः, कीदृशी च व्याख्या। यदा स दीपको बुद्धो भवति तदा स जीवो बुद्धपदेनोच्यते, यतो हि अस्मितानिर्वाणं प्राप्तो मनुजोऽपि बुद्ध एवोच्यते इति गूढोऽभिप्रायोऽस्य प्रबद्धकस्य। अपूर्वेयं कल्पना।

तृतीयाध्यायस्य चतुर्थेऽतीन्द्रियप्रत्यक्षाधिकरणेऽन्तिमे प्रघट्टके "परं तु यदा कदा वैज्ञानिकस्याथवान्यस्य विचारकस्य ईदृशानां तथ्यानां भानं हठाद् भवति। पश्चात् तर्कोऽनुसन्धानञ्चास्य तात्कालिकस्य ज्ञानस्य पुष्टिं कुरुतः। इदमपि अतीन्द्रियं प्रत्यक्षमस्ति" इत्याद्युक्तम्। इमं प्रघट्टकं दृष्ट्वा मन्मनसि परमानन्द एव नायातः, किन्तु चक्षुषी अपि आनन्दाश्रुपरिस्राविते अभूताम्। तदानीं पूज्यपादानां दीक्षादातॄणां जनकानाम् "समये सर्वं तव स्फुरितं भविष्यति" इत्याशीरपि प्रत्यक्षं दृष्टा। अधुनापि सैवावस्था मदीया। अस्य ग्रन्थकारस्य साधकमूर्द्धन्यस्योत्तरप्रदेशसाचिव्यं समये समये किञ्चिद् बाधकमिव प्रतीयते, परं गीतोक्तकर्ममार्गसिद्धान्तौ मनसो विभाजनशक्तिश्च सर्वा अपि बाधा दूरीकुरुतः।

पश्यन्तु भवन्तस्तर्काप्रतिष्ठानाधिकरणम् ( अध्याय ४ अधि० २ )। तत्र तत्समाप्तौ 'निर्दोषस्य तर्कस्य कृते सर्वज्ञतया सह पूर्णा वासनाशून्यतापि अपेक्ष्यते" इत्युक्तम्। अत्र द्वौ पन्थानौ प्रथितौ स्तः, एकस्तु तर्काप्रतिष्ठानादिति। अपरस्तु 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति। अत्रेदं द्वैतमापतति, किं विधेयम्? एको वदति 'तर्कोऽप्रतिष्ठः' अपर उपदिशति 'यस्तर्केणानुसन्धत्ते।' तस्य विभागस्तु अस्मिन्नेवाधिकरणे प्रदर्शितोऽस्ति। एक आभाणकोऽस्माकं देशे प्रचलितोऽस्ति—"लेखा जोखा थाहैं, लड़िका बुड़ले काहैं" अस्यार्थ, गणनया संख्याने गाधं जलम्, लाडीको ब्रुडितः कथम्? श्रूयताम्--एकः कश्चन मुन्शीजीव आसीत्। स स्वकं लाडीकं सह नीत्वा ग्रामान्तरं प्रयातः। मध्ये-मार्गमेका नदी लब्धा। नद्यास्तटं गत्वा विस्तारं दृष्ट्वा तस्याः कियत्सु अंशेषु जलं प्रमाय सम्पूर्णनदीविस्तारं मनसि सन्धाय स्थिरीचकार, अस्यां नद्यामनुपातपद्धत्या गाधमेव जलं भविष्यतीति। तत्र नावमलब्ध्वा स्वकं बालकमवदत् त्वं तिष्ठ, जलन्तु गाधं वर्तते। त्वं पारं गन्तुं शक्नोषि। तथापि एकाकी मा गमः। अहं क्षणादूर्ध्वं आगच्छामि। यावत्स परावर्तते, तावद् बालो बालचापल्याद् नदीं गाधां मत्वा उत्तरति। तावदेवैकस्मिन् नदीस्थे गर्त्ते पतितो ब्रुडितश्च। सपद्युक्तो मुन्शीजीव आगत्य बालकमपश्यन् पूर्वोक्तमाभाणकं भणन् परां चिन्तामुपागमत्। एतादृश एव तर्कः 'तर्काप्रतिष्ठानात्' ( अ० २ पा० १ सू० ११ ) इत्यादिनोत्तरमीमांसासूत्रेण निषिद्ध्यते।

तथा च वेदान्तसूत्रे स एव तर्को निषिध्यते यत्रागमप्रामाण्येन निश्चितोऽर्थस्तर्केण व्युदसितुं प्रयत्यते। न हि अवीतरागैः कपिलकणादप्रभृतिभिरुपस्थापितैस्तर्कैः सिद्धेनार्थेन पदार्थो निश्चेतुं पार्यते, परस्परं वैमत्यदर्शनात्। "न हि मन्वादयो महर्षयः न हि सर्वज्ञा

वीतरागा वा" (वाक्यपदीय टीका काण्ड ३ कारिका ४६)। इति पक्षपातरहितेन वाक्यपदीयटीकाकर्त्रा हेलाराजेन मन्वादीनामपि वचनस्य आगमापेक्षया दुर्बलत्व-प्रतिपादनेन तैर्वितर्कितस्य पदार्थस्य भ्रान्तिराहित्याभावाद् ब्रह्मविचारेऽप्रामाण्योद्बोधेण श्रुत्यन्तनिष्कृष्टार्थस्यैव ग्राह्यत्वं व्यवस्थापितम्। यदि नाम कपिलादीनामपीदृशी गतिस्तर्हि का कथा शङ्कराचार्यप्रभृतीनाम्? तस्माद् दौर्भाग्यवशादेतादृशे कराले काले वयं जनुर्गृहीतवन्तो यदा न हि कोऽपि शिष्टः 'पृषोदरादीनि यथोपदिष्टम्' (६।३।१०६) इति सूत्रस्थभाष्यलक्षणलक्षितो दृश्यते, यस्यानुसरणेन पादोपस्पर्शनेन च पूताः प्रभवेम धर्मतत्त्वं निश्चेतुम्। अत आगमानामनुपलम्भात्केवलं निगमा एवास्माकं मार्गप्रदर्शने प्रामाण्यपद-मारूढाः सन्ति। तथा चोक्तं निरुक्ते "न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा, पारोवर्यवित्सु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात्, मनुष्या वा ऋषीषूत्क्रामत्सु देवानब्रुवन्, को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्, मन्त्रार्थचिन्ताभ्यूह-मभ्यूढं तस्माद् यदेवं किञ्चनानूचानोऽभ्यूहत्यार्षं तद्भवति" (१३।१२) इति मनुरपि "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्मशुद्धि-मभीप्सता ॥ १॥ आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥२॥" (अ० १२ श्लो० १०५-१०६) आभ्यां निरुक्तमनूक्तिभ्यां तादृशस्य तर्कस्य प्राबल्यं बोध्यते। किञ्च 'वैजिसौभरिहर्यक्षैः शुष्कतर्कानुसारिभिः। आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥" (वाक्य० का० २ का० ४८८) इति कारिकया तर्काप्रतिष्ठा-नादिति सूत्रेण च तर्कस्याग्राह्यतेति द्वयोर्विरुद्धयोर्वर्गयोर्विद्यमानत्वादर्थनिर्णयः कया रीत्या कर्तुं शक्यते। इति चिन्तायां वेदाविरोधितर्कस्य प्रामाण्यं शुष्कतर्कस्य चाप्रतिष्ठानमित्येव निश्चेयम्। अत एव। 'वैजिसौभरि" इत्यादिकारिकाटीकायां पुण्यराजेन "शुष्कतर्कः केवल एवान्यशास्त्रपरिमलरहितो भण्यते। तमेवानुसरति प्रमेय-निर्णयाय" इत्युक्तम्। एतादृशविरोधपरिहारोऽनेन ग्रन्थकर्त्रा एकया पूर्वोक्तया पङ्क्त्या प्रदर्शित इति कीदृशमर्थगाम्भीर्यं ग्रन्थपङ्क्तीनामिति प्रमोदन्तां संयतमनस्का महात्मानः।

गायत्रीप्रतिपाद्ये सर्वदर्शनयथार्थज्ञानमूलभूते बुद्धिनैर्मल्ये सर्वदा प्रयतितव्यमित्य-यमेव सिद्धान्तोऽभिव्यज्यते। 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति गीतोक्तिरपि शुद्धाया एव बुद्धेरात्मप्राप्तेः सामग्रीं बोधयति। अत्रापि पञ्चमाध्याये द्वितीये समन्वयाधि-करणे "रिक्तस्थानपूर्तिस्तेन तैरतर्क्यैस्तैवः पूरणीया, येषां तस्यातीन्द्रियसाक्षात्कारः सम्पन्नो भवेत्। यो यावान् मेधावी भवेद्, यस्य बुद्धिर्यावन्निर्मला सर्वग्राहिणी च भवेत्, सोऽस्मिन्

कर्मणि तावदेव समर्थो भवेत्, यतो हि तस्यातीन्द्रियोऽनुभवस्तावदेव विशदो व्यापकश्च भवेत्। इयमेव समन्वयप्रक्रियास्ति। एतेनैव यथार्थज्ञानं सम्पद्यते।" इत्युक्त्यापि बुद्धिनैर्मल्यसम्पादनमेव सर्ववेदान्तार्थसारभूतमिति गूढोऽभिप्रायो ग्रन्थकर्तुः। किञ्च किञ्चिद् वस्तु लक्ष्यीकृत्यैवाप्राप्तमपि तत् प्राप्तुं प्रयतते जनः। यथा मार्गे आयातमनुद्देश्यञ्च वस्तु पश्यन्नपि पान्थो न हि पश्यति। अपि च स एव पान्थः पथि चलन् रत्नरूपानभिज्ञो दृष्ट्वापि न हि जानाति, अतोभीष्टमपि तन्नादत्ते। एतदर्थं वस्तुस्वरूपावगतिर्मनुष्यमात्रस्य कर्त्तव्यमस्ति। तदेवानेन चिद्विलासग्रन्थे सारल्येन निर्दिश्यते। अतः सर्वैर्पि मानवैरयं ग्रन्थो दैनन्दिनकृत्यमिव नित्यमध्येतव्यम्।

षष्ठाध्याये द्वितीयेऽधिकरणे यत् प्रदर्शितम्:
विद्यार्थी वा कलाकारोऽथवा वैज्ञानिको जनः।
आत्मानं ये पृथक्कर्तुं प्रपञ्चात् प्रभवन्त्यपि॥
त एव सफलाः स्वीये कर्मणि स्युरिति स्थितिः।
जिज्ञासा दर्शने येषां तैरप्येवं प्रवृत्यताम्॥

एतादृशा उपदेशा मनुष्यानुच्चपदं प्रापयितुं निर्दिष्टाः सन्ति। को नाम सर्वजनोपकारकं ग्रन्थमिमं पठितुं न प्रयतेत

किञ्च प्राचीनेषु दर्शनेषु कलानां सौन्दर्यादीनाञ्च सम्बन्धो दर्शनैर्नासीत्, अत एव तत्तत्वं प्राच्यदर्शनेषु नोपलब्धितम्। अपि च, गणितमपि दर्शनमिति विचारोऽपि न हि कस्यचित् प्राचीनस्य दर्शनग्रन्थप्रणेतुर्मनसि प्रादुरभवत्। अधुना तु पाश्चात्त्या गणितज्ञा दर्शनस्य मूलतत्त्वं गणिते विद्यमानं प्रत्यक्षतो दर्शयन्ति साधयन्ति च दर्शनमूलतत्त्वं गणितम्। अस्माकं धर्मग्रन्थेषु सदाचारनिरूपणं प्रधानो विषयो ऽस्ति। न हि तत्कृते दर्शनस्य हस्तक्षेपोऽपि मनाङ् मानसपथमवतरति। ये हि विषया अद्यत्वे पाश्चात्त्यदर्शने विचार्यन्ते, तत्तत्त्वमूलञ्च प्रत्यक्षीकृत्य जनतायाः समक्षमुपस्थाप्यते, न हि तद्वदस्मद्देशीया दर्शनानामध्येतारस्तथा कर्तुं प्रभवन्ति। यदि हि शिष्टत्वसम्पत्त्यै योगमार्गं तेऽवलम्बेरन् तर्हि तेषां तुलना पाश्चात्त्यैरनेकजन्मभिरपि न कर्तुं शक्येत। परं केवलमुदरपूरणमात्रलक्ष्या वैश्यवृत्त्या समृद्धिमेव लक्ष्यं मन्यमाना ब्राह्मण्यात् प्रच्युताः शूद्रत्वमेव आत्मसात् कुर्वन्ति।

किञ्च बहु मया अस्मिन् विषये लेखितुं वाञ्छ्यते, परमहं स्वकीयव्याकरणदर्शनमुद्रणकार्ये व्यस्तः समयमेव न प्राप्नोमि।

अपि चैतस्या भूमिकायाः समाप्तेरर्वाक् प० रघुनाथपाण्डेयं सरस्वतीभवने अनुसन्धानविभागे व्यापारितं न विस्मरामि, नापि तथाविधं व्रजवल्लभशास्त्रिणं याभ्यां भविष्णुभ्यां धन्यवादपात्राभ्यां मदीयत्रह्माक्षराणां साध्वीं प्रतिलिपिं कृत्वा पाण्डुलिपिर्मुद्रणाय सज्जीकृता।

अपि च बिरलाकालेजाध्यक्षाणां गुरुकल्पानां पण्डितसम्राजां श्रीसभापत्युपाध्यायानां तथा म. म. प. स्विस्ते नारायणशास्त्रिणां काशिकराजकीयसंस्कृतमहाविद्यालयप्रधानाध्यक्षाणां साहाय्यं स्मारं स्मारं तेभ्यो धन्यवादानर्पयित्वानृणो भवितुं प्रयतिष्ये। श्रीमन्तं साम्प्रतं काशिकराजकीयसंस्कृतमहाविद्यालये व्याकरणाध्यापनेऽस्थायिरूपेण नियुक्तं पं० बालकृष्णपञ्चोलीशास्त्रिणं समये समये नूतनशब्दविन्यासविषये संमतिदानेनोपकुर्वन्तं मङ्गलानुशासनैः परिवर्द्धयामि।

वस्तुतस्तु अनूदितश्चिद्विलासो भूमिकामन्तरा नाट्यमण्डपे इतस्ततो लुठन्निवासीत्। साम्प्रतं भूमिकां निर्माय तत्रैव तं स्थापयित्वा पाठकानाहूय दर्शयामि। भ्रान्तेःपुरुषधर्मत्वात्तद्विग्रहे यदि भवेयुस्त्रुटयस्तर्हि सहृदयानां सूचनां प्राप्यान्यस्मिन् संस्करणे शोधयित्वोपस्थापयिष्ये।

किञ्चैतस्य मुद्रणं लखनउपत्तने सञ्जातम्, तत्संशोधनञ्चात्रत्येन मया कर्तुमशक्यमिति साग्रहमनुरुद्धः श्रीभगवतीशरणसिंहमहोदयो महता परिश्रमेणाशोधयदिति तस्मै अपि धन्यवादानर्पयामि शुभाशिराशीभिश्च परिवर्द्धयामि। जनतायन्त्रालयाध्यक्षः ठाकुरश्रीत्रिभुवननारायणसिंहोऽपि सुखी चिरं जीव्यादिति मे शुभाशंसनम्।

अपि च, आनन्दकाननावासी विद्यापीठधुरंधरः।
गृह्णात्विदं स्वकं वस्तु तस्मै सम्यक् समर्पये॥
देववाणीं समुद्धर्तुं विश्वविद्यालयं द्रुतम्।
जीव्याच्चिरं स्थापयित्वा सम्पूर्णानन्दवाक्पतिः॥

रामाज्ञापाण्डेयः
आ० शु० ५, २००७

## संस्कृतानुवादस्य सम्बन्धे ग्रन्थकर्तुः वक्तव्यम्

चिद्विलासं संस्कृतभाषायामनूद्य विद्वद्वर पं० रामाज्ञाशर्मणा माम् प्रति स्वकीयासाधारणानुग्रहस्य परिचयो दत्तः। संस्कृतमाध्यमेन दर्शनाभ्यासशीलेषु महानुपकारश्च कृतः अस्मिन् ग्रन्थे किमप्यनुपज्ञातपूर्वमस्तीति न ममाग्रहो वर्तते किन्तु प्रतिपादनसरण्यां किञ्चित् कालपात्रानुसारि नवत्वमस्त्येव येन विज्ञानपरिपोषिततर्कहृतबुद्धिस्थैर्याणाम् लोकानाम् कासाञ्चित ग्रन्थीनामुन्मोचनंभविष्यतीति मम आशा विद्यते। यदि सा साफल्यं भजते तर्हि आत्मानं धन्यं मंस्ये।

सम्पूर्णानन्दः

लखनऊ
२१ भाद्र, २००७

# विषय-सूची

## आधार-खण्डम्

## ज्ञानखण्डम्

## धर्मखण्डम्



# मुद्रणत्रुटयः

आधारखण्डस्य तृतीयोध्यायः ( पृष्ठे १५ ) निःशीर्षक एव दृश्यते। तत्र प्रमाणम् इति शीर्षकं कृपया संयोज्यम्। प्रमादात् अन्या अपि काश्चित् त्रुट्यो यत्र तत्र वर्तन्ते। ता दयालुभिः पाठकैः सम्मार्जनीयाः।

———

# प्रथमोऽध्यायः।

## दर्शनशास्त्रस्य विषयः।

### १ मं पुरुषार्थाधिकरणम् ।

श्रीः

मनुष्यश्चेतनोऽस्ति। प्रत्येकं मनुष्य आत्मानं चेतनं जानाति। अहं चेतनोऽस्मि न वा, अस्मिन् विषये (सम्बन्धे) कोऽपि मनुष्यः, कस्यापि साक्षिण आवश्यकतां न सम्बुध्यते। स्वानुभूतिरेव अस्मिन् क्षेत्रे प्रामाण्यपदं प्राप्ताऽस्ति। वयं चेतनाः स्म इत्यतोऽस्मासु अनेकप्रकारा इच्छाः, आकाङ्क्षाः, वासनाः, एषणाः, प्रतिसमयम् उत्तेष्ठीयन्ते। एते इच्छादयः शब्दास्तत्तच्छास्त्रकारैः समानेऽर्थे प्रयुक्ताः सन्ति। राग एकां दिशमाकर्षति द्वेषश्चापराम्, सुखम् उपरि उत्थापयति, दुःखं च नीचैर्व्रीडयति। चित्तस्य एतत्परिणामफलस्वरूपा विभिन्नप्रकाराश्चेष्टाः शरीरेण वयं कुर्मः। चेष्टासादृश्येन आत्मनो बहिश्चेतनाया अस्तित्वस्यानुमानं वयं कुर्मः यस्य शरीरस्य चेष्टायाम् अस्माकं शरीरस्य चेष्टायाः सादृश्यं यावदधिकं दृश्यते तस्मिञ् शरीरे तावदधिकां चेतनां तद्विकासं वा वयं मन्यामहे।

अस्माकम् एषणासु एका ईदृशी एषणाऽस्ति, या यावज्जीवनं विद्यमाना तिष्ठति। 'अहं न म्रियेय' इत्येव अस्या रूपमस्ति। कीटाणुमारभ्य मनुष्यपर्यन्तेषु इयं प्राप्यते, प्रतिक्षणं विद्यमाना च तिष्ठति। साधुर्भवतु राक्षसो वा, कोऽपि इदं न चिन्तयति यन्मम जीवनेन को लाभोऽस्तीति, केवलं जीवितमात्मानं वाञ्छति। जीवनप्रदीपस्य सातत्येन

ज्वलनं केषांचिदुपकरणानामुपरि निर्भरमस्ति । एषु भोजनं, वस्त्रं गृहं च मुख्यानि सन्ति एतानि सामूहिकरूपेण धनशब्देन सम्पत्तिशब्देन वा कथयितुं शक्यन्ते । सम्पत्तिरागत्या-प्याच्छिन्ना भवितुं शक्नोति, अतः 'सामाजिकी व्यवस्था ईदृशी भवतु यस्यां जीवनस्य सम्पत्तेश्च रक्षा भवतु, सम्पत्तेश्चोपार्जनं कर्त्तुं शक्येत " इति स्वभावत इच्छा जायते । स्वा-स्थ्यं, सम्पत्तिः, सामाजिकसुव्यवस्था एषामधिकादधिकमुपयोगमुपभोगं च अहं कुर्याम् इति मनुष्यमात्रस्य प्रबलतमा इच्छा भवति । सम्पत्तेर्व्यवस्थायाश्च रूपे परिवर्तनं भवति परन्तु इच्छाया मूलं रूपं यादृशमासीत् तादृशं यथावस्थितमेव तिष्ठति । अयं पुरुषार्थः–पुरुषस्य अर्थः लक्ष्यं वा—अर्थपदेन कथ्यते ।

मनुष्ये प्राय एतावत्प्रबला एका द्वितीया एषणा वर्तते। अस्याः पूर्णरूपेण अभिव्यक्तिः प्रायश्चतुर्दशं वर्षमारभ्य अष्टादशवर्षात्मके वयसि जायते । इयं रत्येषणा कामवासना वा कथयितुं शक्यते । प्राप्तवयस्कः पुरुषः स्त्रियं, प्राप्तवयस्का स्त्री च पुरुषमन्विष्यतः । इयं वासना प्रभूतेषु पशुपक्षिकीटादिष्वपि प्राप्ता जायते अपरं कदाचित् कदाचित् जीविते-च्छातोऽपि प्रबला भूत्वोत्तिष्ठति । एतत्संलग्ना संतानैषणा भवति । पुरुषस्य पुरुषादप्यधिकं स्त्रियाः सन्तानस्य स्पृहा जायते । पुरुषं विना स्त्री अपूर्णा स्त्रियं विना पुरुषश्चापूर्णस्तिष्ठति । खाद्यं पेयं सर्वमपि भवतु नाम परम् एकलस्य पुरुषस्य एकलायाः स्त्रिया वा आत्मनि किमपि शून्यशून्यमिव लगति । स्त्रियाः पुरुषस्य च मेलनं केवलं द्वयोः शरीरयोरेव मेलनं नास्ति किन्तु चित्तद्वयं मिलित्वा एकं भवति, एकस्य न्यूनता अपरतः पूर्यते । द्वयोर्मेलनेन एकोऽपूर्वो योगः प्रस्तुतो भवति । यदि वरवध्वोः अवचयनं युक्तमभूत् तर्हि तयोर्दम्पत्यो-र्यादृशस्य सुखस्य अनुभवो भविष्यति तत् सुखं तादृशावचयनं विना तयोः कदापि न मिलेत् । खादनं, पानं; विश्रमकरणं, घूर्णनोपघूर्णनं, गृहस्य प्रबन्धकरणम्, इत्यादिषु सर्वेषु कर्मसु एको विलक्षणो रसो मिलति । परन्तु यदि दम्पत्योः क्रोडः शून्यो भवति, गृहे वत्सा न स्युस्तदा गार्हस्थ्यं नीरसमेवावतिष्ठते । मनुष्यस्य, विशेषतः स्त्रियाः स्वभावे कतिचिद् ईदृशा गुणाः सन्ति ये वत्सानामभावे विकसन्ति एव नहि । सन्ताने मातापितरौ स्वत्वस्य संवृद्धं रूपं पश्यतः, सन्तानस्य सुखदुःखयोः,जयपराजययोश्च स्वात्मनो विकासः संकोचश्च तयोः प्रतीतौ भवतः । येन प्रकारेण आत्मनः कृते स्वास्थ्यस्य संपत्तेश्च अभिलाषः क्रियते तेनैव प्रकारेण सन्तानस्यापि कृते क्रियते । अयमेव पुरुषार्थः कामपदेन कथ्यते ।

मनुष्यः सामाजिकः प्राणी वर्तते । केचन व्यक्तिविशेषाः कासुचिद् विशेषावस्थासु वादं

कंचित् कालं समाजाद् दूरमपसर्पन्तु नाम, परन्तु सामान्यतः समाजे निवासो मनुष्याय रोचते। एतेन कश्चन प्रत्यक्षो लाभो भवति। सर्वेषां स्वहितं स्वकीय एवार्थः स्वकीयः कामो वा बाढम् अभीष्टानि भवन्तु नाम परन्तु अस्या इच्छायाः पूर्त्तिरपि समुदाय एव साधु भवति। शत्रूणामुपरि आक्रमणं तेभ्य आत्मनस्त्राणम् जङ्गलं कर्त्तित्वा क्षेत्रस्य गृहस्य च निर्माणं, महावन्यपशूनां भञ्जनम् एतानि सर्वाणि कर्माणि मिलित्वैव कर्त्तुं शक्यन्ते। एतदतिरेकेण मनुष्यस्य ईदृश्यः स्वाभाविक्यः कतिचित् प्रवृत्तयः सन्ति याः समाज एव सफला भवितुमर्हन्ति। यदि तासां प्रस्फुटीभावस्यावसरो न लभ्येत तदा मनुष्यस्य चरित्रम् अपूर्णमेवावतिष्ठेत। दया, करुणा, सहानुभूतिः, उदारता, त्यागः, क्षमा, सहिष्णुता च मनुष्यं मनुष्यमकार्षुः। परमेतेषां गुणानां विकासः समाज एव भवितुमर्हति। यदा बहवो मनुष्याः सार्थाः सन्तो वसेयुस्तदा इत्येतदसंभवि यत् सर्वे केवलं स्वयोः स्वयोः अर्थकामयोर्वार्त्तां विचारयेयुः। प्रत्येकं फलस्य कृते कलहो भविष्यति। एकां स्त्रियमुद्दिश्य विंशतीनां पुरुषाणाम् एकं पुरुषमुद्दिश्य विंशतीनां स्त्रीणां प्राणाः प्रयाताः स्युः। समाजे वातूलालयस्य सूनागारस्य च सम्मिलितं दृश्यं द्रष्टुमापद्येत। एतेन सर्वेषां स्वार्थस्य हानिर्भविष्यति। अत आरम्भकाल एव कतिचिद् व्यावहारिका नियमाः सम्पन्नाः यत्परिणामः सामाजिकजीवनस्य सम्भवोऽभूत्। एतत्कथनस्य नेदं तात्पर्यं यन्मनुष्या आरम्भकाल एव पञ्चायतनं कृत्वा एतान् नियमान् समपादयन्। एषां नियमानां बीजं मनुष्यस्य प्रकृतौ वर्तमानमासीत्। प्रभूतास्तिर्यञ्चः प्राणिनः समाजं सम्पाद्यैव वसन्ति। तेष्वपि केचन व्यावहारिका नियमा दृश्यन्ते। यश्च बौद्धिको विकासः समाजेऽवस्थितिं प्रैरयत् स एव अपरैः सहावस्थानमप्यशिक्षयत्। अनन्तरं मनुष्या आभ्यः प्रवृत्तिभ्योऽधिकमुन्नतरूपं ददुः अपि च समाजं सभ्यं संस्कृतं च सम्पादयामासुः।

समाजे सर्वोऽपि मनुष्यः स्वं स्वम् अर्थं कामं च सिद्धं कर्त्तुं वाञ्छति, अतोऽधिकाराणां कर्त्तव्यानां च शृङ्खलाः सम्पद्यन्ते। यत् किंचित् अन्येषामस्माभिः सह कर्त्तव्यमस्ति, यच्च अपरेभ्योऽस्माकं प्राप्तव्यमस्ति स सर्वोऽस्माकमधिकारोऽस्ति; यच्चान्यैः सहास्माकं कर्त्तव्यमस्ति, यच्चास्मत्तोऽन्येषां प्राप्तव्यमस्ति तदस्माकं कर्त्तव्यमित्युच्यते। यदि च सम्भवोऽभविष्यत् तदा मनुष्यः स्वाधिकारस्य मात्रामवर्धयिष्यत् कर्त्तव्यस्य च मात्रामह्रासयिष्यत्। परंतु कर्त्तव्यान्येव अधिकारस्य रक्षां कुर्वन्ति, अतो यस्य यावानधिकारोऽस्ति तस्य कर्तव्यमपि तावदेव भवति। प्रायो लोकाः स्वाधिकारान् अपरेषां कर्तव्यानि च सदा ध्याने रक्षन्ति। एतेन दौर्मनस्यं प्रसरति संघर्षश्च सम्पन्न एव तिष्ठति। अच्छा लोका एतद्विपरीतं

कुर्वन्ति । ते स्वकर्त्तव्यविचारमेव समक्षं रक्षन्ति । यदि प्रत्येकं मनुष्यः आत्मनः कर्त्तव्यस्य पालनं कुर्यात् तदा आत्मन आत्मनोऽधिकारोऽनायासेन सर्वैः प्राप्तो भवेत् । यो हि कर्त्तव्यस्य पालनं कर्त्तुं वाञ्छति तत्कृते कर्त्तव्यस्य परिचयनं परमावश्यकमस्ति । कर्त्तव्यस्य क्षेत्रं संकुचितं नास्ति । समाजशब्दस्य संकीर्णोऽप्यर्थो लातुं शक्यते, परन्तु वस्तुतः ते सर्वे प्राणिनः येषां सहयोगेनास्माकं जीवनयात्रा निर्वहति अस्माकमर्थः कामश्च सिद्धौ भवतः, ते सर्वेऽस्माकं समाजस्याङ्गानि सन्ति । तेषां सर्वेषाम् अस्माकमुपरि उपकारोऽस्ति, तेषां सर्वेषाम् अस्मान् प्रति अधिकारोऽस्ति, तान् प्रति अस्माकं कर्त्तव्यमस्ति । यावत्पर्यन्तं वयम् एषां कर्त्तव्यानामभिज्ञानस्य यत्नं न कुर्मः, तावत्पर्यन्तमस्माकं कृतघ्नता वर्तते, वयं च चौर्यापराधिनः स्मः । यदि एकवारम् अयं भावो दृढो भवेत् तदा बुद्धौ अधिकाराणाम् आत्मनः अर्थस्य कामस्य च स्थानं गौणं जायते अपरं कर्त्तव्यानां पूर्णरूपेण सर्वतोमुखकर्त्तव्यपालनस्य च स्थानं श्रेष्ठं भवति । कर्त्तव्यपालनम् अधिकारप्राप्तेः साधनस्य पदात् उत्थाय स्वतः साध्यं सम्पद्यते । अस्माकं सम्बन्धः कीट-पतङ्ग-पशु-पक्षिभिः, मनुष्यैः, आत्मकुटुम्बिभिः, यदि यं कंचन प्रकारं प्राप्तो देवशरीरी वर्तते तेन च सह वर्तते । ते सर्वे स्वस्वरीत्याऽस्मान् प्रभावितान् कुर्वन्तः सन्ति । तेषां सर्वेषां विविधप्रकारकम् ऋणम् अस्माकम् उपरि वर्तते, अतः सर्वैः सह प्रत्युपकारः सर्वेषां सेवाप्रकारो वा सदृशो न भवितुं शक्नोति । परन्तु यदि आत्मकर्त्तव्यस्य सम्यग्रूपेण परिचयः कर्त्तुं शक्येत अपरं तस्य सम्यग्रूपेण पालनं च क्रियेत तदा जगति निःसीमसुखसमृद्धिराज्यं भवेत् । अपि च प्रत्येकं व्यक्तेः अनायासेन सर्वतोमुखोऽभ्युदयश्च स्यात् । यः आत्मनोऽर्थं कामं च यावदेव विस्मर्तुं शक्नुयात् स स्वकर्त्तव्यस्य परिचयने तस्य पालनकरणे च तावदेव सफलो भविष्यति । अतः कर्त्तव्यस्य परिचयकरणं तस्य पालनं च जीवनस्य प्रधानं लक्ष्यं भवितुं युज्यते । अयं पुरुषार्थो धर्मपदेनोच्यते ।

दृष्टचरमस्माभिः यद् धर्मस्याङ्गद्वयं वर्तते, तस्य परिचयः परिज्ञिस्य परिपालनं च । अथ प्रथममङ्गं गृह्यताम् । एवं तु लोकाचारात्, शिष्टाचारात्, कुलाचारात्, शास्त्रोपदेशाच्च व्यवहारार्थं मार्गो मिलत्येव अथ च एतन्मार्गोपरि चलत्सु लोकेषु प्रायो मनुजाः प्रसन्ना अपि भवन्ति परन्तु गम्भीरविचारकः एतावता सन्तुष्टो नहि भवितुं शक्नोति । स आचरणविषये 'कथम्' इति प्रश्नं विना स्थातुं न शक्नोति । स एतद् ज्ञातुं वाञ्छति यत् तस्य अस्मिन् विश्वस्मिन् केन केन सह कीदृशः सम्बन्धोऽस्ति । तदैव धर्मस्य स्वरूपं स्थिरं भवितुं शक्नोति । परन्तु जगति अन्यैः सह आत्मनः सम्बन्धस्य, विश्वस्मिन् आत्मनः स्थानस्य ज्ञानं वस्तुतः जगतः स्वरूपस्य परिज्ञानमस्ति । एतत्स्वरूपस्य परिचये कतिचित् शास्त्राणि सहायतां ददते ।

गणितं, भौतिकविज्ञानं, ज्योतिषं, प्राणिशास्त्रं, मनोविज्ञानं च विश्वस्य भिन्नानां भिन्नानामङ्गानामुपरि प्रकाशं क्षिपन्ति। अयं प्रकाश उपयोगी वर्तते परंतु पर्याप्तो नास्ति। जगत् अयुतसिद्धावयवं वस्तु वर्तते। अयुतसिद्धावयवमीदृशं वस्तु कथ्यते, यस्यावयवाः पृथक् स्थिताः सजीवाः स्थातुं न शक्नुवन्ति, तेषामुपयोगिता अङ्गाङ्गिभावे, अंशांशिभाव एवास्ति। अस्मदीयं शरीरमीदृशमेव वस्तु वर्तते। तस्यैकोऽवयवो हस्त एव दृश्यताम्। हस्तः शरीरात् पृथग् भूत्वा जीवितुं न शक्नोति। तस्य सार्थकता शरीरे तत्स्थित्यैवास्ति, स पृथग् भूत्वा व्यर्थं मांसपिण्डमात्रमेवास्ति।

अनेन प्रकारेण इदं विश्वम् अयुतसिद्धावयवं वर्तते। अस्य प्रत्येकम् अङ्गम् अपराङ्गैः सह मिलित्वा सार्थकतां प्राप्नोति। वयं सुविधायै अंशानाम् बाढम् अलग्नमलग्नमध्ययनं कुर्याम, परन्तु खण्डस्य ज्ञानं तावत् पूर्णं भवितुं न शक्नोति यावत् इदं न ज्ञायेत यत् समुदाये तस्य किं स्थानमस्ति। विभिन्नविज्ञानसम्बन्धिक्षेत्राणां विभाजनमपि वस्तुतः कृत्रिममस्ति। एकां पिपीलिकां पश्यन्तु भवन्तः। तस्याः शरीरं पार्थिवतत्त्वनिर्मितमस्ति, अतो रसायनस्य भौतिकविज्ञानस्य च विषयः। अनेनैव शरीरेण पिपीलिका धावति, भारम् उत्थापयति तस्याः तापमानस्य ह्रासो वृद्धिश्च भवतः एतत्सर्वं गणितस्य विषयः। सा जीवितास्ति, तस्या देहस्य इन्द्रियाणां च विशेषप्रकारेण विकासोऽभवत्। एतत् सर्वं जीवविज्ञानस्य विषयः। सा क्वचित् प्रसीदति क्वचिच्च न प्रसीदति, क्रुध्यति, एतत्सर्वं मनोविज्ञानक्षेत्रे वर्तते। पिपीलिकायाः पूर्णतया सम्यग् बोधार्थम् एषां पृथक्शास्त्राणां ज्ञानं त्वावश्यकमेव, परं सा बुद्धिरप्यपेक्ष्यते या एषां सर्वेषां समन्वयमपि कर्तुं शक्नुयात्। किञ्चिदप्ययुतसिद्धं वस्तु भवेत्, तस्य वास्तविकं रूपम् आत्मनोऽवयवानां योगात् बृहत्तरं भवति। अवयवी प्रत्येकमवयवं व्याप्नोति अवयवानतिक्रम्यापि वर्तते। कर्णाक्षिहस्तपादादीनां समूहस्य मनुष्यनाम नास्ति। हस्तो मनुष्यस्य हस्तः अक्षि मनुष्यस्य अक्षि वर्तते। मनुष्यः प्रत्येकमवयवे विद्यमानोऽस्ति, एतेभ्यो बृहत्तमश्च वर्तते। एवमेव विश्वम् आत्मनो जडचेतनावयवानामभ्यन्तरेऽपि वर्तते, बहिश्च वर्तते, विश्वस्य पूर्णरूपेण परिचयाय तत्तच्छास्त्राणां ज्ञानं त्वपेक्ष्यत एव परं तेन सह सा बुद्धिरप्यपेक्ष्यते या खण्डेषु सम्पूर्णतां द्रष्टुं शक्नुयात्। यदि तत् सूत्रं दृष्टं न भवेत्, यत् अनेकम् एकीकरोति, तदा इदं जगत् भग्नगृहखण्डानां समूहो भविष्यति। यदा वयम् एतत् सूत्रं ग्रहीतुं प्रयत्नं कुर्मः तदा स्वाज्ञानस्य रूपं परिचीयते। अज्ञानस्य कतिपयानि रूपाणि सन्ति। अनया दृष्ट्याऽस्माकमज्ञानं बृहदस्ति। यावदिदं दूरं न गच्छेत् तावत् धर्मस्वरूपपरिचयः कर्तुं न शक्येत।

एकमपरं काठिन्यमस्ति । यः कश्चन स्तोकः परिचयो भवेदपि तदनुसारं कर्मकरणं सुकरं न भवति । धर्मस्य पालनं दुष्करं भवति । पदे पदे विघ्नः बाधा चापततः । वयं इयद् दुर्बलाः स्मो यद् एतैर्विघ्नैः प्रतिहन्यामहे अपरंच अनिच्छद्भिरप्यस्माभिरधर्मः कृतो भवति । अस्या अशक्तेर्मूलेप्यज्ञानमस्ति । यथा यथा मनुष्यस्य ज्ञानं वर्धते तथा तथा स परिस्थितीः स्ववशवर्त्तिनीः कर्त्तुं समर्थो भवति । यः पूर्णज्ञानो भवेत् स सर्वशक्तिसम्पन्नोऽपि भवेत् । यथा यथा जगतः स्वरूपज्ञानं वर्धेत तथा तथा धर्मस्यापि ज्ञानं वर्धेत एवं तत्पालन-सामर्थ्यमपि । इदं निश्चितमस्ति यत् यः प्राथमिकं पुरुषार्थत्रयं यावदेव विस्मरेत् स तावदेव ज्ञानसम्पादने सफलो भवेत् ।

अस्माभिरेतद् दृष्टम् यत् मनुष्योऽर्थं कामं चैव लक्ष्यीकृत्य प्रवर्तेत नाम परन्तु यथा यथा तस्य बुद्धावियं वार्ता प्रवेष्टुं प्रारभते यद् धर्मं विनाऽर्थः कामश्च सिद्धौ न भवेताम् तथा तथा तस्य ध्यानमाभ्यामपसृत्य धर्मदिशि लग्नं भवति । अथच क्रमशो धर्मः साधनतां परित्यज्य साध्यत्वेन परिणमति । संस्कृतबुद्धेरयमेव परिचयः एवमेव यदा इयं वार्ता सम्यग् बुद्धौ प्रविष्टा भवति यद् अज्ञानान्मुक्तिप्राप्तिमन्तरा धर्मसम्पादनस्य सम्भावना नास्ति तदा क्रमशोऽज्ञाननिवृत्तिः स्वयं साध्यतां भजति । अस्याः स्थितेरुत्पत्तिविषयेऽपरा वार्त्ता अपि सहायिका भवन्ति । जिज्ञासाऽस्माकं चित्तस्य स्वाभाविको धर्मः । कोहं, किञ्च जगत् ? मदतिरिक्ता अपरा अपि चेतनव्यक्तयः सन्ति नवा ? एवंविधाः प्रश्नाः चित्ते उत्तिष्ठन्ति । एतदुत्तरं ज्ञातुमुत्कटा इच्छा भवति । वैयक्तिकस्य सामूहिकस्य वा धर्मस्य परिपालनं तस्य व्यावहारिकः परिणामः परन्तु अज्ञाननिवृत्तिः अर्थात् ज्ञानाद् यदेकस्यापूर्वस्य आनन्दस्य शान्तेश्च प्राप्तिर्भवति तत्तस्य सर्वतोऽपि बृहत्तमं फलमस्ति । यस्य कस्यचित्पुरुषस्य विज्ञानाध्य-यनद्वारा स्तोकोऽपि परिचयो लब्धो भवेत् तेन तस्य अस्य आनन्दस्य शान्तेश्चैका आभा दृष्टा भवेत् । अतोऽज्ञानान्मुक्तिलाभः अपरं ज्ञानद्वारा जगतः आत्मनश्च स्वरूपस्य परिचयनं मानवस्य श्रेष्ठं लक्ष्यं भवितुमर्हति । अयमेव पुरुषार्थो मोक्ष इत्युच्यते ।

## २ यं शास्त्रक्षेत्राधिकरणम् ।

यत् शास्त्रं सम्पूर्णं विश्वं निखिलं जगच्च एकं मत्वा तस्य स्वरूपं, तस्यावयवानां पारस्परिकं सम्बन्धम्, समूहे तेषां स्थानम्, अपिच तस्य संकोचविकासौ आत्मनो विषयं सम्पादयति, तदेव अध्यात्मशास्त्रं, दर्शनशास्त्रं वा उच्यते । दर्शनशास्त्रं विभिन्नैरेकदेशीयैः शास्त्रै-

निष्पन्नां सामग्रीं स्वसाध्यकार्यकरणार्थमपेक्षते, परन्तु सा सामग्री दर्शनस्य कृते पर्याप्ता नास्ति। विविधानां सामग्रीणामेकत्र संग्रथनं तस्यावश्यकं कार्यं भवति। तदैव सार्वदेशिकं चित्रं सम्पद्येत। इदं समन्वयकार्यं दार्शनिकस्य स्वकीयं क्षेत्रं वर्तते। सर्वज्ञतैवाज्ञाननिवृत्तिरस्ति, अत एव दर्शनं मोक्षशास्त्रपदेन व्यवह्रियते। मुमुक्षुणा दर्शनशास्त्रमवश्यमेवाध्येतव्यम्।

यदि विश्वोपरि दृष्टिः पातिता भवेत् तदा तस्य द्वौ मुख्यौ भागौ कर्त्तुं शक्येते—(१) अस्मत् (अहम्) ज्ञाता द्रष्टा वा। युष्मत् (त्वम्) ज्ञेयः, दृश्यो वा। युष्मदस्मदोर्योगेन ज्ञानमुत्पद्यते। एतत् स्मृतिपथे स्थापनीयं यदयं विभाग एकया रीत्या काल्पनिकोऽस्ति। वास्तविको विभागः स एवास्ति यत्र प्रत्येकं खण्डं परस्परं पृथक् प्रतीयेत पूर्णतयाऽलग्नं च भवेत्। पत्रस्य खण्डद्वयं कृत्वा अलग्नमलग्नं प्रक्षिप्यताम् तदा तु विभाजनं जातम्, परं यदि पत्रे एकां रेखामुल्लिख्य खण्डद्वयं क्रियते तदा स एव विभागः काल्पनिको भवेत्। रेखायां गणितपरिभाषानुसारं विस्तारो (चतुष्कता) न भवति, किन्तु दैर्घ्यमेव। अत एवास्या विभाजकरेखायाः प्रत्येकं विन्दोरुपरि द्वौ भागौ परस्परं स्पृशतः अथ च पत्रस्य सत्ता अखण्डिता एव सम्पन्ना तिष्ठति। ईदृशी रेखा यत्र क्वचन अङ्कयितुं शक्यते। तेनैव प्रकारेण भागद्वयं भवेत् परं पत्रं तद्वदेव अविभक्तं सम्पन्नं भवेत्। रेखाया अङ्कनमनङ्कनं वा अस्माकं सुविधाया उपरि निर्भरमस्ति। इयमेव वार्ता विश्वविषयेऽप्यस्ति। मदर्थं मत्तोऽतिरिक्तं यत् किञ्चदस्ति तत् सर्वं युष्मत्पदवाच्यं, ज्ञेयं, दृश्यं च मत्तो बहिर्वर्तते। भवतः सत्ता मदर्थं युष्मत्पदवाच्यास्ति। परन्तु भवान् अस्य विश्वस्य विभागमन्येन प्रकारेण करोति। भवान् आत्मार्थमस्मत्पदार्थोऽस्ति अन्यत् सर्वं भवत्कृते युष्मत्पदवाच्यं वर्तते। युष्मदस्मदात्मकं जगत् उभयतो याथातथ्येन अविभक्तमखण्डितं च तिष्ठति। द्रष्टारं विना दृश्यं न भवेत्, दृश्यं विना द्रष्टा च न। द्रष्टा तावदेव द्रष्टा यावत् तस्य समक्षं दृश्यमस्ति, दृश्यं तावदेव दृश्यं यावत् तस्य कोऽपि द्रष्टा भवेत्। द्रष्टृहीनं दृश्यं दृश्यहीनो द्रष्टा चास्मत्कृतेऽचिन्त्ये स्तः। यत्र बिन्दौ द्रष्टा दृश्यं च मिलतः, यत्र च युष्मदस्मदोः संस्पर्शो भवति, तदेव ज्ञानं दर्शनं वा कथ्यते।

यदा दर्शनशास्त्रस्य विषयः सम्पूर्णं विश्वं वर्तते तदा तु तेन त्रिप्रकारकप्रश्नोपरि प्रकाशः पातनीयः, यथा—

(क) युष्मदर्थः एकः अनेको वा? यदा एकोऽस्ति तदा अनेकवत् कथं प्रतीयते?

तस्य एकस्य पदार्थस्य स्वरूपं किमस्ति ? यदि अनेकोऽस्ति तदा तस्य स्वरूपं तदेवास्ति यत् प्रतीयते अथवा अपरं किञ्चित् ? रूपान्तरेण प्रतीतिः कथं भवति ?

(ख) अस्मदः स्वरूपं किमस्ति ? तदेकमस्ति अनेकं वा ? यद्येकमस्ति तर्हि अनेकवत् कथं प्रतीयते।

(ग) युष्मदस्मदोर्योगः कथं भवति ? अस्य तृतीयस्य प्रश्नस्य रूपत्रयं भवितुमर्हतिः—

(१) ज्ञानज्ञात्रोः सम्बन्धः कः ?

(२) ज्ञानज्ञेययोश्च कः सम्बन्धोऽस्ति ?

(३) ज्ञातृज्ञेययोश्च कः सम्बन्धः ?

आसां सर्वासां समस्यानां ग्रन्थिभेदे ज्ञातृज्ञानज्ञेयात्मकस्य विश्वस्य स्वरूपविषयकः सम्यग् बोधो भवितुमर्हति। अयमेव बोधो दर्शनाध्ययनस्य प्रयोजनं वर्तते।

एषां प्रश्नानां विविधप्रकारेणोत्तरं दातुं शक्यते। उत्तरविषये कथं भेदो भवति, एतत् सम्बन्धे भाविन्यध्याये विचारो भविष्यति। एतदर्थं दार्शनिकविचारेषु कतिचिद् धारा भवन्ति। एता एव विभिन्नवादपदेनोच्यन्ते। विश्वस्य स्वरूपं विभिन्नदृष्टिकोणैर्द्रष्टुं शक्यते अत एव इदं शास्त्रं दर्शनशास्त्रमुच्यते प्रत्येकं वादश्च दर्शनं कथ्यते। इदं भवितुमर्हति यत् कोऽपि वादो नितान्तं निराधारोऽस्ति परन्तु अधिका सम्भावना अस्या वार्ताया वर्तते यत् सर्वेषु वादेषु सत्यस्य यः कश्चनांशः वर्तत एव। हस्ती हस्ती एवास्ति परन्तु यस्तस्य कर्णौ शुण्डादण्डं पादान् पुच्छमेव वा जानाति सोऽपि नितान्तमन्धकार एव पतितो नास्ति। कश्चनावयवः पूर्णतया हस्ती नास्ति परन्तु प्रत्येकमवयवे हस्ती वर्तते।

# द्वितीयोऽध्यायः

## ज्ञानं तथा सत्यम्

### १ मं नयभेदाधिकरणम्

यैर्विभिन्नदृष्टिकोणैर्विश्वस्वरूपाध्ययनं कर्तुं शक्यते ते नयपदेन कथ्यन्ते। मयाऽधस्त-नाध्याये पिपीलिकायाः शरीरस्योल्लेखः कृतः। साधारणमनुष्याणां कृते इदं शरीरं त्वग्-लोमरक्तसदृशधातुभिः सम्पन्नमस्ति। रासायनिकविश्लेषणद्वारा एषां धातूनामभ्यन्तरे जलं लवणं बहुविधोऽम्लः क्षारः तथा सत्त्वमूलम् (प्रोटोप्लाज्म) प्राप्यन्ते। यदा शुद्ध-रासायनिकदृष्ट्या निरीक्ष्यतां तदा पिपीलिकायाः शरीरं हाइड्रोजनः, नाइट्रोजनः, आक्सिजनः, गन्धकः, फास्फरसः, कार्बनः, इत्येतेषां परमाणूनां समूहो वर्तते। भौतिक-विज्ञानवादी तत् प्रथमं धनऋणात्मकविद्युत्कणानां पुञ्जं, ततः शुद्धवायुतत्त्वभेदं साधयति। एकमेव वस्तु विभिन्नदृष्टिभिर्विभिन्नप्रकारेण द्रष्टुं सम्बोद्धुं सम्बोधयितुं च शक्यते। प्रभूता विचारका जगतस्तदेव रूपं विज्ञानसामग्रीं सम्पादयन्ति, यज्जाग्रदवस्थायामस्माकमनुभव-पथमायाति। इदमेव जगत्, सत्यं जगत्, वास्तविकं जगद् वा सम्बुद्ध्यते। परमेतादृश-मननस्य किमपि पुष्टं कारणं नास्ति। जगतः सम्पूर्णतान्तर्गता स्वप्नावस्था निद्रावस्था च ग्रहीतुं युज्येते। स्वप्नः स्वानुभूतिकाले सत्यं भवति सोऽपि स्मृतिं परित्यज्य याति। सर्वेषां दृष्टिपथमेकविधः स्वप्नो नायाति। स्वप्नभेदश्चरित्रस्य बुद्धिभेदस्य च तेनैव प्रकारेण सूचको भवति येन प्रकारेण अस्माकं जाग्रदवस्थायां विचारः कार्यं च भवतः। यदि जाग्रद्दृष्ट्या स्वप्नो मिथ्या मन्यते तदा स्वप्नदृष्ट्या जाग्रदपि मिथ्यैवास्ति, यतो हि यावत्पर्यन्तमेकावस्था तिष्ठति तावदपरा नात्मस्वरूपं प्राप्नोति। अल्पकालस्य स्वप्नस्य मध्ये वयं प्रभूतानि एता

दृशानि कर्माणि कुर्मः, येषां करणाय बहूनि वर्षाणि अपेक्षितानि भवेयुः । परमेतेनापि स्वप्नस्योपेक्षणीयता न सिध्यति, इयं वार्ता तु कालस्य सापेक्षतादिशि संकेतं करोति । स्वाप्नकालिककालस्य प्रवाहो जाग्रत्कालिककालप्रवाहाद् भिन्नो भवेदिति सम्भवेत् । कालस्य सम्बन्धे वक्ष्यमाणसप्तमाध्याये विचारो भविष्यति परमियं वार्ताऽस्माकं सामान्यानुभवस्य वर्तते यत् आन्तरिककालस्य गतिः कदाचित् कदाचित् बाह्यकालस्य, घटिकाकालस्य, गतेरपेक्षया भिन्ना प्रतीयते । सुखस्य दिनानि शीघ्रं व्यतियन्ति, दुःखस्य रात्रयो दीर्घा भवन्ति । स्वप्नस्य मिथ्यात्वपक्षे सर्वतो महत्तमस्तर्कोऽयं वर्तते यत् स्वप्नानुभूतिर्वस्तुशून्या भवति । इयं वार्ताऽस्मिन्नर्थे सत्या भवितुमर्हति यत् ये विविधाः प्राणिनो दृश्यन्ते अथवा या घटना घटमानाः प्रतीयन्ते तेषां स्वतन्त्रमस्तित्वं मा भूत् परं जाग्रदवस्थायाः कतिपयेऽनुभवा एव विकृतरूपेण समक्षमायान्तु नाम किन्तु रागद्वेषकामक्रोधलोभमोहादयो भावाः, ये तस्मिन् समये जागरिता भवन्ति ते मिथ्या न सन्ति । विश्वविषयकविचारे स्वप्नावस्थाया उपेक्षा कर्तुं न शक्यते । तृतीयावस्था सुषुप्तिरस्ति । सुषुप्तौ बाह्यवस्तूनां ज्ञानं न भवति, वासनाः स्मृतयश्च नहि उत्तिष्ठन्ति, सर्वं प्रज्ञानं घनीभूय सान्द्रमिव भवति परन्तु चेतना कर्म कुर्वती तिष्ठति। जागरानन्तरं तस्य स्मृतिः सुखनिद्रारूपेण दुःखनिद्रारूपेण वाऽवशिष्यते । स्वप्नं सुषुप्तिं च विहाय विश्वस्य यद्रूपं ज्ञास्यते तदेकाङ्गं भविष्यति। केवलजाग्रत एको दृष्टिकोणोऽस्ति, तिसृणामवस्थानां ध्यानेऽरक्षणेऽपरो दृष्टिकोणो जायते । परन्तु अस्मद्वाच्यस्य एका चतुर्थी अवस्थाऽप्यस्ति या तुरीयावस्थेत्युच्यते । अस्या अवस्थाया अस्तित्वस्यास्वीकारः कर्तुं न शक्यते । सर्वेष्वपि देशेषु ईदृशा लोका अभूवन् सन्ति च यैरियमवस्था प्राप्ता भवति । अस्या अपरं नाम समाधिरस्ति । अस्यामवस्थायां तेषां जगतः शुद्धरूपस्य प्रतीतिर्भवतीत्युच्यते तैः । निष्पक्षविचारार्थमयमप्येको दृष्टिकोणो वर्तते । प्रत्येकं दृष्टिकोणः प्रत्येकं नयश्चास्मभ्यं विश्वस्वरूपस्य पृथग् ज्ञानं दास्यति । इमानि ज्ञानानि परस्परं विरोधीनि न भवितुं शक्नुवन्ति ।

## २ यं सत्यभेदाधिकरणम्

सत्यं ज्ञानं प्रमा उच्यते । यथावस्तु यथार्थं ज्ञानं सत्यं ज्ञानं कथयितुं युज्यते । तदेव ज्ञानं सत्यं भविष्यति । परन्तु वयं दृष्टवन्तः स्मः यद् वस्तु अर्थात् विश्वं कतिभिर्नयैः कतिभिर्दृष्टिकोणैर्द्रष्टुं शक्यते । कयाचिदेकया दिशा दर्शने हस्तिनः शुण्डाऽस्माकं समक्षं भविष्यति, अपरया दिशा कर्णः, तृतीयया पादः । हस्तिन एकत्वेऽपि त्रिभिर्दृष्टिकोणैस्त्रयो

भिन्ना भिन्ना अर्थाः प्रतीता भविष्यन्ति, अतः स्वरूपज्ञानमपि भिन्नं-भिन्नं भविष्यति, भिन्नं भिन्नं सत्यं च मेलिष्यति। यद् वस्तु व्यावहारिकदृष्ट्या मत्स्याण्डिकायाः खण्डमस्ति तदेव रासायनिकदृष्ट्या कार्बनस्य हाइड्रोजनस्य आक्सिजनस्य च चञ्चलपरमाणूनां चयः, भौतिकविज्ञानदृष्ट्या पिण्डीभूतो वायुरस्ति। एकमेव वस्तु दृग्बिन्दुभेदेन वस्तुत्रयमस्ति अथ च तेन सम्बद्धं यथावस्तु, यथार्थं ज्ञानमपि त्रिप्रकारकं भविष्यति। एतज्ज्ञानत्रयं सत्यं भविष्यति। अनेन प्रकारेण विभिन्ना विचारका जगतः सम्बन्धे आंशिकसत्यानां प्रतिपादनं चेक्रियमाणाः सन्ति। एषु सत्येषु कानिचित् सत्यानि अपरस्य सत्यस्य पूरकाणि सन्ति, अपराणि च कानिचित् परस्परमन्तर्गतानि सन्ति। यथा हस्तिनो हस्तपादज्ञानमेकम् अपरस्य पूरकमस्ति परन्तु मत्स्याण्डिकाया व्यावहारिकस्वरूपं तस्या रासायनिकस्वरूपस्यान्तर्गतमस्ति। यो मनुष्यो विश्वस्य स्वरूपं सम्बोद्धुं वाञ्छति तस्मिन् इयती उदारता भवितुं वाञ्छ्यते यद् विभिन्नदर्शनानां सत्यांशान् परिचेतुं शक्नुयात्। एतेन सह तस्मिन् एषां सत्यांशानां समन्वयकरणस्य तथा स्वयं व्यापकसर्वग्राहिदृष्टिकोणेन निरीक्षणस्य च क्षमता अपेक्ष्यते। एवं यथार्थज्ञानस्य, परमसत्यस्य च अनुभवो भवितुं शक्यति।

## ३ यं सत्याधिकरणम्

अधस्तनप्रकरणेषु मया कतिवारं सत्यशब्दस्य प्रयोगः कृतः। अस्य शब्दस्यार्थ-संबोधनमुचितमस्ति। वस्तुतोऽस्य शब्दस्यार्थद्वयं वर्तते। मुख्यतः स एव पदार्थः सत्यपदे-नोच्यते यस्य सत्ता सत्या भवेत्, अर्थात् यः अभावप्रतियोगी न स्यात्। अभावश्चतुर्विधः, कस्यचिद् वस्तुनः स्वोत्पत्तेः पूर्वं योऽभावः स प्रागभावः। यथा यावद् दुग्धं शुक्तभावापन्नं न भवेत् तावत्तत्र दध्नोऽभावो भवति एतादृशोभावः प्रागभावपदेनोच्यते। अनादिः सान्त-श्चाभावो वा प्रागभावः। यस्मिन् स्थले घट आगामी स्यात् तत्र घटस्य प्रागभावः। कस्यचिद् वस्तुनो विनाशानन्तरमभावो भवति, यथा ज्वलनानन्तरं काष्ठस्याभावो भवति एतादृशोऽभावः प्रध्वंसाभावः। उत्पत्तिशाली अविनाशी चाभावः प्रध्वंसाभावः। अनन्तः सादिश्चाभावः प्रध्वंसाभावः। एकस्मिन् वस्तुनि अपरस्य भेदोऽन्योन्याभाव उच्यते। यथा घटः पटो न ककारः खकारो नेत्यादि। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्या-भाव इत्यर्थः। नित्यत्वे सत्यभावत्वमत्यन्ताभावत्वम्, तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिता-कोऽभावोऽत्यन्ताभावः, अन्योन्याभावप्रध्वंसाभावप्रागभावभिन्नोऽभाव इत्यर्थः। यः पदार्थ

एवंप्रकारकचतुर्विधाभावरहितोऽस्ति, अर्थात् सर्वत्र सदा प्राप्यते तदेव सत्यम्। सत्यस्य द्वितीयं लक्षणम् अविक्रियशीलता वर्तते। सत्यं वस्तु एकरसं तिष्ठति तस्मिन् किञ्चिदपि परिवर्तनं न भवति। एष दर्शनशास्त्रस्य कृते विचारणीयः प्रश्नोऽस्ति यद् एतल्लक्षणानुसारं सत्यपदार्थो विश्वस्मिन् वर्तते नवेति। असत्यवस्तूनां मध्ये यानि स्थानविशेषे कालविशेषे वा प्राप्यन्ते तानि अंशतः सत्यानि कथयितुं शक्यन्ते। येषामत्यन्ताभावोऽस्ति अर्थात् कालत्रये येषां सत्ता नास्ति तानि पूर्णतया असत्यानि सन्ति। यथार्थज्ञानमपि सत्यं कथ्यते। अयथार्थं ज्ञानं चासत्यम्। ज्ञानं यथार्थं भवतु अयथार्थं वा परं स्वसंवेद्यं तद् भवति। एकस्य ज्ञानम-परस्यानुभवविषयो न भवति। अन्यपर्यन्तं प्रापयितुं ज्ञानस्य या व्यञ्जना साऽपि सत्यपदेनोच्यते। यदि ज्ञानमयथार्थं भवेत् अथवा व्यञ्जना ज्ञानानुकूला न क्रियेत तदा साऽपि असत्या भविष्यति। असत्यः पुरुषः यथाज्ञानं न वदति अत एव सः असत्यवादी कथ्यते। कस्यचिद् वादस्य असत्यत्वप्रतिपादनस्य नेदं तात्पर्यं यत् तत्प्रतिपादको यथाज्ञानं न वक्ति प्रत्युत केनचिद् हेतुना तस्य यथार्थज्ञानं भवितुं नाशक्नोत्।

## ४ र्थम् अज्ञानाधिकरणम्

यथार्थज्ञानस्य प्रतियोगी (प्रतिपक्षी) अयथार्थज्ञानम् अज्ञानं वा वर्तते। अज्ञानशब्दस्य बहवोऽर्था भवन्ति। एकोऽर्थस्तु ज्ञानाभावः, ज्ञानस्याभवनम् इत्यर्थः। इममर्थं मत्वा इदं सम्यग् बोधनीयं यत् यदि किञ्चिद् वस्तु मम विचारस्य विषयोऽस्ति तदा तद्विषयकम् अज्ञानं ज्ञानस्य पूर्णाभावो वा मत्कृते भवेदेव न। किंवा तत् मच्चित्तस्य समक्षं नास्ति, ईदृश्यां दशायां मदर्थं तदस्तित्वमेव नास्ति, अत एव ज्ञानस्य प्रश्न एव नोत्तिष्ठति; अथवा तन्मच्चित्ते वर्तते, ईदृश्यां दशायां मम न्यूनात् न्यूनं तदस्तित्वज्ञानं तु वर्तत एव, अत एवाज्ञानं नास्ति। साधारणतः अज्ञानशब्दप्रयोगः अपूर्णज्ञानस्य मिथ्याज्ञानस्य संशयस्य वाऽर्थे क्रियते। ज्ञानसाधनानां विचार आगामिनि अध्याये कृतो भविष्यति। तेषां साधनानां यथावत् प्रयोगाभावेनैव ज्ञानसम्बन्धिन एते दोषा उत्पद्यन्त इत्येतत्स्पष्टीकरणं तु अवश्यमपेक्ष्यते। यदि ज्ञातव्यवस्तुदिशं ज्ञानसाधनानि यथा-शक्ति लगयितुं न शक्येरन् तदा अपूर्णज्ञानं भविष्यति। प्रभूतदूरस्थं वस्तु अस्पष्टं दृश्यते। यदि यद् वस्तु यत्र नास्ति तत्र तस्य प्रतीतिर्भवेत् तदा मिथ्याज्ञानं स्यात्। एका रज्जु पतिताऽस्ति। रज्जोः कानिचिल्लक्षणानि सर्पेण सह मिलन्ति। मम तेषां ज्ञानं जातम् अपितु सर्पस्य तेषां विशेषगुणानां ज्ञानं भूतं ये रज्जौ नहि प्राप्यन्ते। एतावता तत्र मम सर्पज्ञानं

भविष्यति। मिथ्याज्ञानमध्यासपदेन विपर्ययपदेन च कथयामो वयम्। कोऽपि ज्ञानविशेषो यदि मिथ्या भवेत् तदा तस्य मम सञ्चितसामग्र्या सह सामञ्जस्यं न भविष्यति परम् एकलमसामञ्जस्यं पर्याप्तं परीक्षणं नास्ति, यतो हि अयं सन्देहः कर्तुं शक्येत यत् पूर्वार्जितं ज्ञानमेव मिथ्याभूतमासीत्। परिपक्वपरीक्षा तु व्यवहारेणैव भवितुं शक्नुयात्।

यद्येकस्मिन् स्थले द्वयोर्वस्तुनोः सहैव आंशिकं ज्ञानं भवेत् तदा तत्र संशयात्मकं ज्ञानं भविष्यति। अन्धकारे किञ्चिद् दूरं किञ्चिद् उच्चं वस्तु दृष्टिपथमापतेत्। तस्मिंस्तानि लक्षणानि दृश्यन्ते यानि मनुष्येष्वपि प्राप्यन्तेऽथ वृक्षेष्वपि। परं मनुष्यस्य वृक्षस्य च व्यावर्तकानि लक्षणानि यानि एकस्मिन् प्राप्यन्तेऽपरस्मिन्न लभ्यन्ते नापि दृश्यन्ते। अतोऽयं संशयः स्थिरो जायते यद् मनुष्यो वृक्षो वेति। अपूर्णज्ञानमिव विकल्पोऽपि ज्ञानस्य बाधको भवति। विकल्पः स एव निराधारो ज्ञानाभासः कथ्यते यस्य मूलं केवलं शब्दाडम्बरोऽस्ति। अस्माकं प्रौढा विचाराः शब्दात्मका एव भवन्ति। अस्या वार्तायाः सदा दरस्तिष्ठति यद् वयं शब्दानां प्रयोगकरणे वाहीकाः सन्तो वास्तविकतातो दूरं न पतेम। जीवने कल्पनाया अपि स्थानमस्ति परन्तु काल्पनिकरचना वस्तुस्थितिकषकपट्टे परीक्षणीया भविष्यति। अन्यथा वयं स्वीयशब्दजाल एव स्पशिता भवेम। अस्माकं गर्दभस्य शृङ्गस्य चानुभवोऽस्ति परं गर्दभशृङ्गस्यानुभवो नास्ति। एतादृशं शाब्दिकं प्रयोगं श्रुत्वा स्थितस्य पुरुषस्य यदेकप्रकारं ज्ञानं भवति स एव विकल्पः।

## ५ मं विक्षेपाधिकरणम्

यदि ज्ञानं प्राप्तव्यं तदा अज्ञानं दूरीकरणीयम्। अज्ञानस्य कतिचित् कारणानि भवन्ति। एकं कारणमिदं भवितुं शक्नोति यद् इन्द्रियाणि अतिदूराद् व्यवधानाद् अधिष्ठानदोषाच्च कारणात् यथावत् कर्म कर्तुं न शक्नुयुः। मध्ये कस्यचिद् वस्तुन आयानं व्यवधानमुच्यते, अक्षिकर्णादीनां रुग्णता वैकल्यं वा अधिष्ठानदोषोऽस्ति। परन्तु एताभ्यो बाधाभ्यो वृद्धतमा बाधा वर्तते यस्याः स्थानं द्रष्टुः, अस्मत्पदवाच्यस्य, चित्तस्य चाभ्यन्तरे वर्तते। चित्तं कस्यचिद् वस्तुनो दिशं लग्यते परं तत्र तत् चिरं न तिष्ठति अपरवस्तुनो दिशमाकृष्यते। तस्मिन् रागद्वेषौ, प्राचीनस्मृतयः, आधुनिकसमयसम्बन्धिन्य इच्छाश्चेति सर्वं पूर्णं तिष्ठति; अथ च अस्यामेव मलिनपीठिकायां ज्ञानोपार्जनस्य प्रयत्नः क्रियते। भीरुः प्रत्येकं गुल्मे व्याघ्रं पश्यति, मात्रा पत्राणां कम्पने नष्टस्य स्ववंत्सस्य पादस्य आहतिः श्रूयते, बुभुक्षितः सर्वत्र रोटिकामेव पश्यति। चित्तस्य इयमेवावस्था, यस्यां तत् कयापि

विषयस्योपरि स्थिरं न भवति परम् एकस्माद् विषयाद् अपरं विषयं प्रतिक्षिप्तमिव भ्रमति स एव विक्षेप उच्यते। चित्तं निर्मलं नास्तीत्येकम् विक्षिप्तमित्यपरम् अतएव तस्मिन् यथार्थ-ज्ञानस्य प्रतिष्ठानं प्रभूतं कठिनं भवति। प्रत्यक्षज्ञानसाधनानीन्द्रियाणि प्रत्यक्षप्रमाणा-न्युच्यन्ते तज्जन्यं ज्ञानमपि प्रत्यक्षं, विषयोऽपि प्रत्यक्ष इति त्रिषु प्रत्यक्षशब्दप्रयोगः। अनुमित्यात्मकज्ञानसाधनं व्याप्तिज्ञानादि अनुमानप्रमाणमित्युच्यते।

---

# तृतीयोऽध्यायः

## १ मं सेन्द्रियप्रत्यक्षाधिकरणम्

प्रमासाधनानि प्रमाणपदेनोच्यन्ते। शुद्धज्ञानस्य प्रमा नामास्ति। अस्य साधनानि त्रीणि सन्ति। प्रत्यक्षम्, अनुमानम्, शब्दश्चेति। एषां दुष्प्रयोगेण अयथार्थज्ञानं जायते।

प्रमाणेषु सर्वतो महत्त्वस्य स्थानं प्रत्यक्षस्यास्ति। शेषं प्रमाणद्वयमस्योपरि निर्भरमस्ति। साधारणतः एवं कथ्यते यद् विषयेन्द्रियसन्निकर्षेण प्रत्यक्षं भवति। युष्मत्प्रपञ्चस्य, बाह्यवस्तूनां वा ग्रहणस्य अर्थात् बाह्यवस्तुभिः प्रभावितभवनस्य तेषां प्रभावितत्वकरणस्य योग्यतायाः शक्तेर्वा नाम इन्द्रियमस्ति। इन्द्रियाणि बाह्यजगतः सम्पर्कस्य द्वाराणि सन्ति। ज्ञानेन्द्रियद्वारा युष्मत्पदवाच्यस्य प्रवेशोऽस्मत्पदवाच्ये अथ च कर्मेन्द्रियद्वारा अस्मत्पदवाच्यस्याघातो युष्मत्पदवाच्योपरि भवति। कस्यचिद् वस्तुनः प्रत्यक्षार्थमिदमावश्यकमस्ति यत् तस्य केनचिदिन्द्रियेण सह संयोगो भवेत्। वयं किञ्चिद् वस्तु तदैव ज्ञातुं शक्नुमः यदा तद् वस्तु यस्येन्द्रियस्य विषयो भवितुं शक्नुयात् तदिन्द्रियं तस्य सम्पर्के आयायात्। यद् वस्तु रूपरहितमस्ति अर्थात् प्रकाशयुक्तं नास्ति तत् चक्षुरिन्द्रियस्य विषयो भवितुं न शक्नोति अर्थात् द्रष्टुं न शक्यते। रूपवद् वस्त्वपि तदैव द्रष्टुं शक्यते यदा तस्य वस्तुनः चक्षुरिन्द्रियेण सह सम्पर्को भवेत् अर्थात् अस्येन्द्रियस्याधिष्ठानं नाम अक्ष्णः मस्तिष्कस्य च चाक्षुष्कं केन्द्रं तस्य समक्षं भवेत्। परन्तु एतावतैव प्रत्यक्षं न भवेत्। एवमपि भवेत् यत् चक्षुर्नीरोगमस्ति पुष्टमपि भवेत् रूपमपि समक्षं स्यात् पुनरपि प्रत्यक्षं न भवेत्, वस्तु दृष्टं न स्यात्। दृष्टिपथपातार्थमन्तःकरणस्यापि योगेन भवितव्यम्। अन्यमनस्कतादशायाम्, चित्तस्य अन्यत्र लग्नावस्थायाम्, पुरतो वर्तमानमपि वस्तु दृष्टिपथं

नायाति पार्श्वस्थः स्वरोऽपि न श्रूयते। अतः प्रत्यक्षार्थं विषयेन्द्रियान्तःकरणानां परस्परं संनिकर्षः आवश्यकोऽस्ति।

प्रत्यक्षप्रणाल्याः सम्यग् ज्ञानम् आवश्यकमस्ति। शरीरोपरि बाह्यवस्तूनामाघातो बोभूयते अथ च तेषां प्रत्याघातोऽपि तथैव भवति, परन्तु अस्माकम् एतेषां सर्वेषां ज्ञानं न भवति। अक्ष्णः समक्षं तीव्रः प्रकाश आयातः, शिरः परिवृत्तम् अथवा अक्षि मुद्रितम्; शिरोदिशं किञ्चिद् गुरु वस्तु आयातम्, हस्तः तद् रोद्धुम् उत्थितः, कश्चित् क्षुद्रकीटः अन्यद् वस्तु वा क्वचिद् आपतितम्, हस्तः तद् अपासारयत्; मुखस्य समक्षं किञ्चित् खाद्यं वस्तु आयातम्; मुखे रस आगतः। ईदृश्यः कतिचन प्रतिक्रिया निद्रावस्थायामपि बोभूयन्ते। एषां तत्कालं सम्पन्नभवनं शरीरार्थमावश्यकमस्ति। अतो नाडीसंस्थानम् एतानि स्वयं करोति। एतानि कर्माणि एतावत् सरलानि सन्ति यत् एतत्कृते विचारस्यापेक्षाऽपि नास्ति। परन्तु यदा आघातस्तीव्रो भवति तदा विचारस्यावश्यकता आपतति। तस्यामेवावस्थायां प्रत्यक्षस्य कृते अवकाश आसाद्यते। मशकः शरीरोपरि उपविष्टः, सुप्तावस्थायामपि हस्तः तम् अप-नेष्यति। यदि नापि अपसृतः तदा बृहती क्षतिर्न भविष्यति। शिरोदिशं किञ्चिद् भारि वस्तु आगच्छदस्ति, तस्मिन् समये एकैव क्रिया सम्भवति। तदर्थं हस्तः स्वत उत्थितो जायते। परन्तु यदा समक्षं सिंह आपतेत्, तदा कतिप्रकारिकाः क्रियाः परिस्थितिभेदेन सम्भवन्ति। कदाचित् सिंहेन युद्धं युक्तं भवितुं शक्नुयात्, कदाचित्पलायनम्, कदाचित् पादपोपरि तिरोधानम्। एतेषु किं कर्म कर्त्तव्यम् अस्य निश्चयः सिंहस्य प्रत्यक्षत्वे एव भवेत्। अर्थात् तस्य दर्शने, गर्जनश्रवणे तस्य गन्धे एव सम्भवेत्।

अन्तःकरणं येन रूपेण इन्द्रियगृहीतविषयस्य सम्पर्के आयाति तन्मनः कथ्यते। मनसि विषयस्य यद् रूपं प्रतिष्ठितं भवति तत् संविदुच्यते। परन्तु इयमनुभूतिरेकला न भवति। इतः पूर्वमपि अनुभूतयः समागता अभूवन्। अन्तःकरणस्यापरं रूपम् अहंकारोऽस्ति। स इमां नवाम् अनुभूतिं पूर्वानुभूतीनां संस्कारैः सह मेलयति अथ च तस्या वर्गीकरणं कृत्वा अनुभूतिषु यथास्थानं स्थापयति च। अहंकारस्य कर्म नवानुभूतेः अहम्पदवाच्ये मेलनम्। इदानीं स विषयः प्रत्ययः कथ्यते। बाह्यविषयाणां शब्दः, स्पर्शः, रूपम्, रसः अथ च गन्ध इति पञ्च संविदो भवन्ति। तदान्तःकरणस्य तृतीयं रूपं तस्य सम्बन्धेऽध्यवसायं करोति अर्थात् इदं निश्चिनोति यदयं विषयः कीदृशोऽस्ति, एनं प्रति कीदृशो व्यवहारः कर्त्तव्य इत्यादि। अन्तःकरणस्य एतत्तृतीयरूपस्य नाम बुद्धिरस्ति। बुद्धावागमनस्य पश्चात् स विषयो विचारसामग्रीरूपं धत्ते। ततस्तु तमाधारं मत्वा अनेकप्रकारस्तर्कः कर्तुं शक्यते अपरं च

अपरैर्विचारैः सह मेलयित्वा अनेका कल्पना कर्तुं शक्यते । वस्तुतोऽन्तःकरणं चित्तं वा एकमस्ति परं क्रमात् त्रिप्रकारककर्मकरणेन तस्य नामत्रयं दत्तमस्ति । प्रत्यक्षस्य विषये अधस्ताद् यत् कथितमस्ति तत् एकेन उदाहरणेन अधिकं स्पष्टं भविष्यति । एकस्मिन् स्थाने एको विद्वान् एको वनवासी च उपविष्टौ स्तः । तयोः समक्षम् एकं पुस्तकमायाति । तस्य वर्णस्य, आकृतेः, दैर्घ्यविस्तारयोश्च मानं द्वयोरपि समानमेव भवति । द्वयोर्मनसि एकप्रकारः प्रभावः पतिष्यति अतो द्वयोः संवित् सदृगेव भविष्यति । परन्तु वनवासी कदापि पुस्तकं नापश्यत् स पुस्तकस्योपयोगं न जानाति । सम्भवतः तत्पुस्तकं तस्य वनवासिनः कृते शिरसि पातयितुं योग्यम् एकं गुरुवस्तुमात्रमस्ति । परन्तु विद्वांस्तु शतानि पुस्तकानि पठितवानस्ति । पुस्तकानि बृहन्ति क्षुद्राणि स्थूलानि क्षीणानि हस्तलिखितानि मुद्रितानि अनेकप्रकाराणि अनेकस्य विषयस्य च भवन्ति । परन्तु एषु सर्वेषु केचन समाना गुणाः सन्ति येन कारणेन इमानि एकेन नाम्ना आकार्यन्ते । इमान् गुणान् स्वसमक्षवस्तुनि प्राप्य स विद्वाँस्तद् वस्तु पुस्तकं मन्यते । तस्मै दर्शनमधिकं रोचते अन्ये विषयाः क्षामं रोचन्ते । अपि च एकस्य विषयस्य सर्वाणि पुस्तकानि समानकोटिकानि न भवन्ति । एताः सर्वा वार्ता अर्थात् पुस्तकस्य विषयः, तस्य शैली, तस्य कोटिप्रभृतीनां विश्लेषणं कृत्वा अहङ्कारस्तस्य पुस्तकस्य विदुषो भाण्डागारे एकं विशिष्टं स्थानं ददाति । अतो वनवासिनो विदुषश्च प्रत्यययोरन्तरं भविष्यति । पुनश्च बुद्धिर्निर्णयं करिष्यति यदस्य पुस्तकस्य क उपयोगः कर्त्तव्यः । विदुषो बुद्धिर्यद् वस्तु बहुमूल्यं पुस्तकं मत्वा संग्रहाय निश्चयं कुर्यात् तदेव वस्तु वनवासिनो बुद्धिर्निकृष्टमस्त्रं संबुध्य तस्य क्षेपणाय निर्णयं कुर्यात् इति सम्भवेत् । द्वितीयमुदाहरणम् । समक्षमेकमाम्रं रक्ष्यते । वयं तस्य रूपमेव पश्यामः रूपस्यैव संवित् प्रचरति, परन्तु स्मृतिरूपेण तस्य गन्धः स्पर्शः स्वादश्च विद्यमानाः सन्ति । अतोऽस्माकमाम्रस्य प्रत्यक्षं जायते यस्मिन् देशे आम्रं नोत्पद्यते तत्र निवसतः पुरुषस्य रूपमात्रस्य संवित् भविष्यति अधिकादधिकं तस्य एतत्प्रत्यक्षं भविष्यति यत् समक्षमेकं फलमस्ति । अस्तु अन्तःकरणस्य त्रयाणां स्तराणां क्रियासु समाप्तासु पूर्णं प्रत्यक्षं जायते । एतेन इदमपि स्पष्टं भवति यदेकस्य विषयस्य प्रत्यक्षं सर्वस्य कृते सदृशं भवितुं न शक्नोति । यदीन्द्रियबलं समानं भवेत् तदा प्रथमं मानसचित्रमेकसमं भवेत् अर्थात् संविदां सादृश्यं स्यात् । अधिकांशमनुष्याणां, ग्रामात् ग्रामम् अधिकांशसभ्यमनुष्याणाम्, अनुभवाः प्रभूततया समानाकारा भवन्ति, अतः प्रत्ययेष्वपि प्रभूततया सादृश्यं संघटते । परन्तु पूर्णतया सादृश्यं नहि भवति । अथ च बुद्धिभेदात् प्रत्यक्षं तु समानं नैव भवति । तदेव वस्तु कस्यचित् कृते सुन्दरम् , अपरस्य कृते कुरूपम् अन्यस्य कृते भद्रम् कस्यचित्कृते बुडम् , अपरस्योपादेयम् अन्यस्य कृते हेयं भवति । वस्तुनः

उपयोगानुपयोगावपि तस्य प्रत्यक्षस्याङ्गभावं भजेते। एतदपि स्मरणीयमस्ति यत् यद् वस्तु एकस्यां परिस्थितौ एकरूपं प्रतीतं भवति तदेवान्यसमये अन्यप्रकारकं प्रतीतं भवति। एकस्या एव व्यक्तेः कस्यचिद् विषयविशेषस्य प्रत्यक्षं सदा समानमेव न भवति। यः स्वरसमूहः पुत्रजन्मावसरे सङ्गीतरूपेण प्रतीतो भवति स एव पुत्रनिधनावसरे चीत्काररूपेण प्रत्यक्षविषयो भवति।

## २ यं सन्निकर्षाधिकरणम्

वयं दृष्टवन्तः स्मो यत् प्रत्यक्षार्थम् अन्तःकरणम् इन्द्रियं चेत्येतद्द्वयस्य विषयेण सार्धं सन्निकर्षो भवितुमिष्यते। प्रभूतानां दार्शनिकानां कृतेऽयं सन्निकर्षः एकप्रकारकं रहस्यं प्रतीतं भवति। समक्षं किञ्चिद् वस्तु अस्ति। तद् आकाशे एकप्रकारिकां लहरीम् उत्पन्नामकरोत्, या आगत्य अक्ष्णो नाडीजालेनाहताभवत्। नाडीषु एकं विशेषप्रकारकं प्रकम्पनमभवत्, तत् प्रकम्पनं मस्तिष्कस्य तत् केन्द्रं यावत् प्रासरत् यत् चक्षुरिन्द्रियस्य मुख्यमधिष्ठानमस्ति। एतावत्पर्यन्तं या काचित् क्रियाऽभूत् सा भौतिकजगति भूता। लहरी, आकाशम्, नाडी, मस्तिष्कम्, कम्पनम् एतत् सर्वं भौतिकशास्त्राणामध्येतव्यविषयाः सन्ति। अत्र नव्यजगतः परिचयो भवति। अन्तःकरणे रक्तस्य हरितस्य वा रङ्गस्य प्रतीतिर्भवति। कम्पनादीनि भौतिकजगति भवन्ति, रङ्गगन्धशब्दानां प्रतीतिः अन्तःकरणस्य भवति। एतद्विपरीतं तस्मिन् समये भवति यदा चित्ते कश्चन संकल्प उत्तिष्ठति अपरं तस्य फलस्वरूपो मस्तिष्के क्षोभो भवति, नाडीषु कम्पनं भवति, अपरं शरीरस्य कश्चन भागः किञ्चित् कर्म कृत्वोपविष्टोऽस्ति। विदुषां समक्षं प्रश्नोऽयं भवति यत् इदं भौतिकं जगत् आन्तरिकं जगत्, आन्तरिकं जगत् भौतिकं जगत् कथं प्रभावितं कुरुतः। सजातीयं सजातीयं प्रभावितं कर्तुं शक्नोति परन्तु चित्तं भौतिकं जगच्च अत्यन्तं विजातीये स्तः। एकं चेतनमस्ति अपरं च जडम्। अनयोर्द्वयोर्मध्ये गभीरं खातमस्ति। तदुपरि प्रतिक्षणं सेतुः सम्पद्यमानस्तिष्ठति, परन्तु कथम्? इयं प्रत्यक्षज्ञानस्य कठिना प्रहेलिकाऽस्ति।

अनया प्रहेलिकया गह्वरितभवनस्यावश्यकता नास्ति। रहस्यं तु किञ्चिद् वर्तत एव या वार्ता सम्यक् सम्बोधे न ह्यायाति तस्यामेव रहस्यमस्ति—परन्तु प्रभूतानि रहस्यानि स्वतो वृद्धिं गमितानि सन्ति। जडचेतनरूपयोर्विरोधिनोः शब्दयोः प्रयोगं कृत्वा खातो गभीरीकृतोऽस्ति। इदं तस्य विकल्पनामकाज्ञानस्योदाहरणमस्ति यस्योल्लेखः पूर्वाध्यायस्याज्ञाना-

धिकरणे कृतोऽस्ति । यथाहि उपरि गत्वा द्वितीयखण्डस्य पञ्चमाध्याये भूतविस्ताराधिकरणे दर्शितं भविष्यति, चित्तं भौतिकं जगच्च विजातीये न स्तः । सत्त्वगुणरजोगुणतमोगुणनामकपदार्थत्रयेण चित्तभौतिकजगतोर्द्वयोरुत्पत्तिर्जाताऽस्ति । एतद्गुणत्रयं सदा मिलितं तिष्ठति परंतु एषाम् उद्दीप्तौ भेदो भवति । एक उद्दीप्तस्तिष्ठति तदाऽपरं द्वयं दमितं भवति, एकोऽधिकमुद्दीप्तो भवति तदाऽन्यद् द्वयं क्षामम् । अनेन तारतम्येन वस्तुषु भेदो भवति । यदि सुविधार्थं गुणास्तन्नामप्रथमाक्षरानुसारं स,र,त, शब्देन कथिताः स्युस्तदा चित्तमपि स,र, तशब्दवाच्यमस्ति, बाह्यजगतः प्रत्येकं वस्तु-आकाशम्, नाडी, मस्तिष्कम्, अपि स-र-तपदवाच्यं भवति । केवलं सरतानां मात्रास्वेव भेदोऽस्ति । अतो वस्तुचित्तयोर्मध्ये कश्चन गभीरः खातो नास्ति; द्वे अपि सजातीये स्तः; द्वयोर्दिशोः सरताः सन्ति ये परस्परं क्रियाप्रतिक्रिये कर्तुं शक्नुवन्ति ।

एकोऽपरो विचारोऽस्ति य इदं रहस्यं सुरञ्जयति । वस्तुतो विश्वमेकमस्ति । वयमात्मीयसुगमतार्थं तत् अस्मद्युष्मद्रूपयोर्ज्ञातृज्ञेयरूपयोश्च वर्णितं कुर्मः । यदि सम्पूर्णं विश्वं पत्रं मन्येत तदा चित्तं भौतिकं जगच्च तस्य पृष्ठद्वयं स्यात् । पृष्ठद्वयं सममस्ति, द्वयोः पृष्ठयोः सम्पर्को नित्योऽस्ति, द्वयोः पृष्ठयोः पत्रमन्तर्हितमस्ति । सम्पूर्णे पत्रे प्रतिक्षणं परिवर्तनं बोभूयते । एतत् कथनस्य इदं तात्पर्यमस्ति यद् द्वयोः पृष्ठयोः परिवर्तनं युगपद् भवति; पृष्ठद्वयं परिणामि अर्थात् परिवर्तनशीलमस्ति । यद्यस्मासु सामर्थ्यं स्यात् तदा वयम् उभयोः पृष्ठयोः अर्थात् सम्पूर्णपत्रस्य परिणामप्रवाहं द्रष्टुं शक्नुमः । एवमकृत्वा वयं कदाचित् एकस्य पृष्ठस्य अध्ययनं कुर्मः कदाचिच्चापरस्य पृष्ठस्य । यस्याध्ययनं कुर्मः तस्मिन् परिवर्तनं भवत् प्रतीतं भवति । द्वितीयपृष्ठातिरिक्तमपरं तु किञ्चिन्नास्ति अतो वयमेतत् संबुध्यामहे यद् द्वितीयं पृष्ठमेव परिवर्तनस्य मूलं भवेत् । अथ च तदा इदमन्वेष्टुम् आरम्भं कुर्मः यत् एकं पृष्ठमपरं पृष्ठं कथं प्रभावितं करोति । अस्माकमुपमेये यथावत् इयमेव वार्ता घटते । अस्मद्युष्मदात्मकं जगत् प्रतिक्षणं परिणतं बोभूयते । तस्यास्मदंशे, यं वयमत्र चित्तांशं कथयामः, निरन्तरं परिणामः प्रचलन्नस्ति । अपि च सहैव युष्मदंशेऽपि, यं भौतिकमंशं कथयामस्तस्मिन्नपि सततं परिवर्तनं भवति । यद्यस्मासु सामर्थ्यं भवेत् तदा वयम् इदं सकलं परिवर्तनं सहैव पश्येम संबुध्येमहि च । ईदृशमकृत्वा कदाचित्तु वयं चित्तोपरि आत्मनो ध्यान केन्द्रीभूतं कुर्मः । चित्तं परिणतं भवद् दृष्ट्वा अस्माकमेतादृशं प्रतीतं भवति यद् भौतिकं जगत् एषां परिणामानां कारणमस्ति । अनेन प्रकारेण यदि भौतिकजगदुपरि ध्यानं देयं स्यात् तदा तस्य परिवर्तनानां कारणं चित्ते अन्वेषणीयं भविष्यति । पुनर्वयं विचारयितुं

प्रवृत्ता भवेम यत् चित्तं भौतिकं जगच्च, ये परस्परं स्वभावतो भिन्ने स्तः, एकमपरं केन प्रकारेण प्रभावितं कर्तुं शक्नोति। वस्तुतो द्वयोः परिवर्तनं तस्य परिवर्तनस्य पटलद्वयमस्ति यत् समुच्चिते विश्वस्मिन् भवति। अयं प्रश्नः पुनरप्यवशिष्यते यत् समुच्चिते विश्वस्मिन् कथं किमर्थं च परिवर्तनं भवति। अस्य प्रश्नस्योपरि उपरि विचारो भविष्यति, परन्तु अत्र प्रत्यक्षस्वरूपाववोधार्थं स विचारोऽप्रासङ्गिकोऽस्ति।

# ३ यं वस्तुस्वरूपाधिकरणम्

मम समक्षं पुष्पमस्ति। अहं कथयामि यन् मम अस्य प्रत्यक्षज्ञानं बोभूयते। अहमिदं पश्यामि, स्पृशामि, शिङ्घामि। चक्षुरिन्द्रियेण पाटलरागस्य, स्पर्शेन्द्रियेण कोमलतायाः, घ्राणेन्द्रियद्वारा एकस्य विशेषप्रकारकस्य गन्धस्य च चित्ते प्रतीतिर्भवति। पुष्पस्य त्रीणि लक्षणानि त्रयाणामिन्द्रियाणां विषयाः सन्ति। कोमलता चित्तेऽस्ति गन्धोऽपि तत्र, रागोऽपि चित्ते एव वर्तते। एषां त्रयाणां गुणानां योगातिरिक्तं पुष्पमन्यत् किमस्ति ? तर्हि सम्पूर्णं पुष्पं चित्ते वर्तते। पुष्पमेव कथम्, सम्पूर्णं भौतिकं जगत् चित्ते वर्तते, मनसो राज्यमस्ति। परन्तु येन प्रकारेण मह्यमात्मविचार आत्मस्मृतयः चित्ताभ्यन्तरे प्रतीता भवन्ति, तेन प्रकारेण पुष्पमभ्यन्तरे प्रतीतं न भवति। तद् बहिः प्रतीतं भवति अतो वयं कथयामो यत् तद् बाह्ये जगति वर्तते। अस्माकं विचाराः स्थानं नावृण्वन्ति किन्तु पुष्पं स्थानमाच्छादयति, तद् दिशः, आकाशस्य, वा कस्मिंश्चित् प्रदेशेऽस्ति। रागो, गन्धः, कोमलताप्रभृति लक्षणं चित्तेऽस्ति। अथ च एतदन्तरा मत्कृते पुष्पं नान्यत् किञ्चिद् वस्तु वर्तते। इमानि लक्षणानि यदा त्यज्येरन् तदा नान्यत् किञ्चिदवशिष्यते यदहं पुष्पं कथयेयम्। एवमेव जगतः सर्वेषां वस्तूनां विषये कथयितुं शक्नुमः। अस्माभिस्तेषां सत्तायाः प्राप्तिर्लक्षणानां रूप एव लभ्यते लक्षणानि च चित्ते सन्ति। लक्षणातिरिक्तस्य कस्यापि पदार्थस्य परिचयोऽस्माकं न मिलति। परमेतावन्मात्रेण नेदं सिध्यति यत् चित्तं विनान्यत् किञ्चिदस्त्येव न। इदानीमीदृशोऽभ्युपगमः साधु प्रतीयते यत् निःसन्दिग्धं किञ्चिदस्ति यत् अस्माकं चित्ते कोमलतायाः, गन्धस्य, रक्तवर्णस्य च संवेदनं प्रकटयति येनास्माकं पुष्पस्य प्रतीतिर्भवति। अस्ति किञ्चिद् यत् पुष्परूपेण प्रतीतं भवति, अस्ति किञ्चिद् यत् आसन्दीरूपेण प्रतीयते अस्ति किञ्चिद् यत् पत्ररूपेण प्रतीयते। एवंभूतं किञ्चिदस्ति यस्य सत्ता वर्तते। अस्माकं पत्रस्य आसन्द्याः पुष्पस्य च प्रत्यक्षं भवति। एतत् तेषां किञ्चित्पदवाच्यानां व्यावहारिकं रूपमस्ति। परन्तु किञ्चित्पदवाच्यानां यद् वास्तविकं स्वरूपं

तस्य प्रत्यक्षम् अस्माकं न भवति। एतत्सम्बन्धेऽपरस्मिन् खण्डे पुनर्विचारो भविष्यति, तावद् इदं संबोधनीयं यद् वयं किञ्चित्पदवाच्यस्य वस्तुनः स्वरूपम् अर्थात् पारमार्थिकसत्तायाः प्रत्यक्षज्ञानं नहि प्राप्नुमः। प्रत्यक्षस्य विषयस्तस्य व्यावहारिकी सत्ता भवति। अध्यासावस्थायां व्यावहारिकरूपस्य स्थाने किञ्चिद् अन्यत् रूपं दृश्यते। इदं रूपं प्रातिभासिकसत्तां कथयामः। रज्जौ यदा कदा अध्यासेन सर्पस्य प्रतिभासो भवति। वयं यन्त्रद्वारा इन्द्रियाणां शक्तिं कामं वर्धयामहे नाम परन्तु ऐन्द्रियं ज्ञानं वस्तुनः स्वरूपस्य ज्ञानं नहि भवितुं शक्नोति।

## ४ र्थम् अतीन्द्रियप्रत्यक्षाधिकरणम्

ईदृश्योऽपि ज्ञातव्या वार्ता भवन्ति याः कस्यापीन्द्रियस्य विषया न भवन्ति। चित्तं केवलं बाह्यवस्तु एव न जानाति, अपि तु स्ववृत्तीरपि जानाति। स्वस्य संकल्पः, इच्छा, रागः, द्वेषः, आशा, भयम् एतत् सर्वं चित्तस्य परिणामोऽस्ति, अथ च चित्तम् एतत् सर्वं जानाति। एतेषां ग्रहणं कस्यापीन्द्रियस्य द्वारा न भवति। यथा दीपकोन्यद् वस्तु प्रकाशयति, स्वस्वरूपं च, एवमेवान्तःकरणमन्यानि वस्तूनि प्रत्यक्षयति आत्मानं च प्रत्यक्षं करोति। इदं प्रत्यक्षम् अतीन्द्रियप्रत्यक्षं कथ्यते। इदमपि प्रत्यक्षं सुकरं नास्ति। एवं कथनीयं यद् बाह्यवस्तूनामिव चित्तस्यापि प्रत्यक्षं नात्मलाभं प्राप्नोति। बहुविधा वृत्तयो दमिता वर्तन्ते। आत्मनि या दुर्बलताः सन्ति ताः समक्षमागन्तुं न शक्नुवन्ति। यदा कदाचित् स्वप्ने, मानसे रोगे, उन्मादे, अथवा ईदृशे व्यवहारे, यो हि तीव्रभावावेशेन बुद्धिनियन्त्रणाद् बहिर्निःसृतोभवति, एतासां दुर्बलतानां ज्ञानं भवति, अन्यथा इमाः व्यक्तीभवितुं न शक्नुवन्ति। बह्व्यः स्मृतयः सन्ति या अस्माकमन्तःकरणे सुरक्षिताः सन्ति परन्तु ता वयं हठात् पश्चात् कुर्मः। स्वात्मविचारोपरि अस्माभिः कतिचन प्रहरिणः संस्थापिताः सन्ति। अस्यायं परिणामो भवति यत् चित्तं स्वात्मनः पूर्णं रूपं संपूर्णां गम्भीरतां च ज्ञातुं नहि शक्नोति। सेन्द्रियप्रत्यक्षेणैव एतदतीन्द्रियप्रत्यक्षद्वारा या प्रमा उत्पद्यते सापि पूर्णा न भवति, सम्पूर्णं ज्ञे तस्या विषयो भवितुं न शक्नोति।

साधारणतो वयमन्येषां स्वभावस्य परीक्षणं तेषामाचरणेन कुर्मः परन्तु यदा कदा एवमपि भवति यत् न केवलं वयमन्येषां मनुष्याणां स्वभावस्य, अस्मान् प्रति तेषां मैत्र्याः शत्रुत्वस्य भयस्यापि च भावस्य उपलब्धिं कुर्मः प्रत्युत तेषां विचारपर्यन्तस्यापि आभा एकपदेऽस्माकं सविधे समायाति। इदमपि अतीन्द्रियं प्रत्यक्षमस्ति। बाह्यवस्तूनां ज्ञानं तु

अस्माकं सेन्द्रियप्रत्यक्षेण जायते, परन्तु तेषां पारस्परिकसम्बन्धस्य तेषां परिचालकानां नियमानां च ज्ञानं सामान्यतः तर्कद्वारा प्राप्तं भवति । परन्तु यदा कदा वैज्ञानिकस्य अथवा अन्यस्य तत्त्वान्वेषकस्य एतादृशानाम् अपूर्वाणां तथ्यानां ज्ञानं सहसा बुद्धावारोहति । पश्चात् तर्कः अनुसंधानं च अस्य तात्कालिकस्य ज्ञानस्य पुष्टिं कुरुतः । इदमप्यतीन्द्रियप्रत्यक्षमस्ति । उच्चतमानां कलाकाराणां चित्तेऽपि विश्वरहस्यस्य अनेनैव प्रकारेण न्यूनाधिकरूपेण ज्ञानं स्फुरितं भवति ।

# ५ मम अनुमानाधिकरणम्

प्रमाया द्वितीयं साधनमनुमानमस्ति । यद्यनुमानोपरि विश्वासं न कुर्यात् तदा जगतः प्रभूतो व्यवहारो रुद्धः स्यात् । अनुमानस्य तत्रैवोपयोगो भवति यत्र प्रत्यक्षं सुकरं न भवति, परन्तु तस्य सत्यतायाः कषकपट्टं प्रत्यक्षमेवास्ति । अस्माकमयं निश्चयो वर्तते यत् प्रत्यक्षम् अनुमानस्य समर्थनं करोति । अनुमानं स्वतन्त्रं प्रमाणं नास्ति । तदपि प्रत्यक्षमूलकमस्ति । यस्या व्याप्तेराधारोपरि अनुमानं क्रियते सा पूर्वप्रत्यक्षाणामेव निष्कर्षो भवेत् । अथ च एतदनुमानकालेऽपि अनुमेयस्य लिङ्गस्य प्रत्यक्षमपेक्ष्यते, तदैव अनुमानं भवितुं शक्नोति । वयं पूर्वं कतिवारान् इदमपश्याम यत् यत्र धूम आसीत् तत्राग्निरप्यासीत् । इदमस्माकमन्वयि प्रत्यक्षमस्ति । इदमपि दृष्टमासीत् यद् यत्र अग्निर्नासीत् तत्र धूमोऽपि नासीत् । अयं व्यतिरेकी अनुभवोऽस्ति । एतेनास्माभिरस्या व्याप्तेः नियमस्य वा ग्रहणं कृतं यत् यत्र यत्र धूमो भवति तत्र तत्राग्निरप्यवश्यं भवति । अस्माभिः सम्पूर्णस्य जगतः करामलकवत् प्रत्यक्षं तु न कृतं, पञ्चषाणां प्रदेशानामेतादृशोऽनुभवः कृतः । यावदधिकसंख्यायां धूमेन सहाग्नेः प्रत्यक्षं भूतं भवेत् तावदधिकसम्भावना व्याप्तेर्याथातथ्यस्य स्यात् । स्तोकेऽनुभवे भ्रान्तेरधिकोऽवकाशोऽस्ति । एतादृशानि कतिचन स्थलानि सन्ति यत्राग्निसार्थो धूमो भवति परन्तु एतादृशी व्याप्तिर्नास्ति यत् यत्र यत्राग्निर्भवेत् तत्र तत्र धूमोऽपि स्यात् । प्रत्यक्षाधारोपरि कोऽपि व्यापको नियमः संपादितः स्यात्, परन्तु वार्तायाः सम्भावना सर्वदा सम्पन्ना स्थास्यति यत् कोऽप्येतादृशो दृग्विषयो लभ्येत यत्र स नियमो न संघटेत । यद्येतादृशमेकमपि उदाहरणं मिलेत् तदायं नियमो नावतिष्ठेत । अस्तु, यदि वयं कस्मिंश्चित् दूरे स्थानेऽग्नेरस्तित्वस्यानुमानं कुर्मस्तदाग्नेर्लिङ्गस्य अर्थात् धूमस्य प्रत्यक्षमवश्यमपेक्ष्येत । प्रत्यक्षमूलकत्वात् अनुमाने ताः सर्वा भ्रान्तयो भवितुं शक्नुवन्ति याः प्रत्यक्षे भवन्ति । यदि प्रथममेव भ्रान्तिर्भवेत् चेत् तदा व्याप्तिरेव युक्ता न भवेत् । यद्यस्मिन् समये लिङ्ग-

सम्बन्धे भ्रान्तिर्भवति तदाऽपि अनुमानं यथावत् न सिध्येत् । उदाहरणार्थमेतन्मन्यतां यत् कश्चन पुरुषः दूरवर्तिनि पर्वते कुज्झटिकां धूमत्वेन पश्यति । तत्र तस्य लिङ्गसम्बन्धे मिथ्याज्ञानं जातमस्ति, कुज्झटिकायां धूमाध्यासो जातोऽस्ति । अतो यदि पर्वतोपरि अग्नेरनुमानं कृतं भवेत् तदा तदनुमितिज्ञानं मिथ्या सिद्धं भविष्यति, अतोऽनुमानेन यद् ज्ञानमुत्पद्यते तस्य भ्रान्ततायाः संभावना वर्तते अथ च सा सम्भावना प्रत्यक्षापेक्षयाऽधिका भवति ।

# ६ ष्ठम्, शब्दाधिकरणम्

प्रमायास्तृतीयं साधनं शब्दोऽस्ति । व्यवहारेऽस्य परित्यागः कर्तुं न शक्यते । वयं प्रभूता वार्ता अन्येषां कथनस्य आधारोपरि मन्यामहे । सम्पूर्णायाः पृथिव्या भूगोलोऽनेनैव प्रकारेण पठ्यते । अयं विश्वासो वर्तते यद् या वार्ता उद्यन्ते तासां प्रत्यक्षं कर्तुं शक्यते परन्तु प्रत्येकं वार्ताया अनेन प्रकारेण परीक्षणं न क्रियते । कश्चन कथयति यद् अमुकराजपथे मत्तो हस्ती तिष्ठति तद्दिशं मा गमः । सम्बुद्धा लोका इमां वार्तां मंस्यन्ते । यदि कश्चन निश्चयार्थं तद्दिशं गमिष्यति तदा प्रत्यक्षानुभवस्य सुखं तु तस्य मेलिष्यति परन्तु हस्तिनः पादाः प्रभूतं कालं यावत् इदं सुखमुपभोक्तुं नानुमंस्यन्ते । रोगी वैद्यस्य इमां वार्तां मानयति यद् अमुकौषधपानेन व्यथाया उपशमो भविष्यतीति । एतेन तस्य कल्याणं भवति । शब्दद्वारा प्राप्तस्य ज्ञानस्य यथार्थत्वाय द्वे वार्ते आवश्यक्यौ स्तः—कथयिता आप्तो भवेत् अस्माकं तस्या वार्तायाः सम्यग् बोधे भ्रान्तिश्च मा भूदिति । आप्तः स मनुष्यः कथ्यते यो वस्तुनो यथार्थज्ञाता भवेत् , यथाज्ञानं वक्ति सम्यग् बोधयितुं शक्तश्च स्यात् । ज्ञानं येन कारणेन अपूर्णं मिथ्या च भवति तद्दिशि अहमधः कतिपुचित् स्थलेषु संकेतमकार्षम् । यदि एषु केनापि कारणेन स्वयं वक्तुर्ज्ञानं समीचीनम् अर्थात् यथावस्तु नास्ति तदा श्रोतुर्ज्ञानं कथं यथार्थं स्यात् । पुनरपि वक्तुः स्वकीयस्य भावस्य स्पष्टरूपेण व्यक्तीकरणयोग्यता तु अपेक्ष्यत एव, तस्य चित्तं रागद्वेषभयादिरहितमपेक्ष्यत एव, अन्यथा स आत्मनो ज्ञानं यथार्थं न प्रकटयिष्यति किञ्चित्तु छादयिष्यति किञ्चिच्च वर्धयित्वा कथयिष्यति । य एतैस्त्रिभिर्दोषै रहितः स एवाप्तः पुरुषो भवेत् । तस्य वाक्यं प्रमाणं भवेत् । परन्तु अनेन प्रमाणेन तदैव लाभः प्राप्तुं शक्यते यदा श्रोतुश्चित्तं निर्मलं भवेत् । यस्य चित्तं केनचिद् दुराग्रहेण युक्तं स्यात् स शब्दप्रमाणं त्रोटयित्वा मर्दयित्वा च तस्य व्याख्यां स्वकीयाशुद्धपुराणविचारानुसारं करिष्यति । अनेन प्रकारेण यद् ज्ञानमुत्पत्स्यते तदपि असंदिग्धं न भविष्यति ।

# चतुर्थोऽध्यायः

## ज्ञाने तर्कस्थानम्

### १मं तर्कपारतन्त्र्याधिकरणम्

वयमधस्तनाध्याये प्रमाणानाम् अर्थात् यथार्थज्ञानसाधनानां मध्ये तर्कस्य नाम न गृहीतवन्तः स्मः। कदाचिदेतदुपरि कस्यचिदाश्चर्यं भवेत् परन्तु आश्चर्यस्थलं नैतदस्ति। अस्माभिर्येषां त्रयाणां प्रमाणानामुल्लेखः कृतस्तत्तस्तर्कः पृथङ् नास्ति। तर्कशब्दस्य प्रयोगः प्रायोऽर्थद्वये क्रियते। बहुधा यं तर्कं कथयामस्सोऽनुमानस्यैवापरं नाम। दूरे धूमं दृष्ट्वा अग्निसत्तानिश्चयस्य पारिभाषिकं नाम अनुमानमस्ति; इदं तर्कोऽप्युच्यते। अध्यवसायोऽपि तर्कपदवाच्यतां नीयते। अयं बुद्धेर्धर्मः। कदाचिद् बुद्धिः कस्यचित् तात्कालिकप्रत्यक्षजप्रत्यय-सम्बन्धे निर्णयं करोति। कदाचित् कतिचित् प्रत्यक्षजप्रत्ययाः अथवा प्रत्यक्षानुमानशब्दे-भ्यो जाताः प्रत्ययोऽध्यवसायस्य सामग्र्यः सम्पद्यन्ते। तेषां परस्परं सम्मेलनेन ईदृश्यो वार्ताः निष्पद्येरन् याः पूर्वं ज्ञाता नासन्, परन्तु अज्ञाताः सत्योऽपि इमा वार्ताः पुराणप्रत्ययाभ्यन्तरे निहिता आसन्। अध्यवसायः केवलं ताः प्रकटयति। अस्माकं समक्षम् एकं ज्यामितिकं चित्रं सम्पन्नमस्ति। अस्या वार्तायाः प्राप्तिस्तु मम प्रत्यक्षरूपेण भवति यत् स त्रिभुजोऽस्ति। अध्यवसायेन तर्केण वाहं त्रिभुजस्य कतिचन गुणान् ज्ञातुं शक्नुयाम। मापनां विनैव तर्को मां बोधयति यत् त्रिभुजस्य त्रयाणां कोणानां योगः द्वयोः समकोणयोः समोऽस्ति। इदं मत्कृते नवीनं ज्ञानमस्ति। ईदृशं नूतनं ज्ञानं तर्केण जायते। मनुष्यस्य ज्ञानस्य प्रभूततरांशस्तर्कद्वारैव प्राप्तोऽस्ति। मनुष्यस्येदं महत्त्वमस्ति यत् स तर्कं कर्तुं शक्नोति। परं तर्कः स्वतन्त्रं प्रमाणं नास्ति। सः अन्यप्रमाणप्राप्तसामग्र्या बुद्धिद्वारोपयोगस्य नामास्ति।

# २यं, तर्काप्रतिष्ठानाधिकरणम्

तर्केऽयमेको दोषोऽस्ति यत् सोऽप्रतिष्ठितोऽस्ति, अर्थात् तद्द्वारा यज् ज्ञानं प्राप्तं भवति तद् अन्तिमं निर्णायकं च नास्ति। तर्कः पदे पदे प्रत्यक्षेण तोलनीयो मेलनीयः सुधारणीयश्च। क्षुद्रवार्तासु, अर्थात् ईदृशीषु वार्तासु याः स्तोकेन कालेन स्तोके क्षेत्रे वा समाप्ता भवन्ति, तर्को वस्तुस्थितेरनुकूलो भवेत्, परन्तु बृहद्वार्तासु वस्तुस्थितिस्ततो दवीयसी भवेत्। प्राणधारिणां सम्बन्धे तु तर्कः प्रभूतं वञ्चयति। यदि दश श्रमिकाः किञ्चित् कर्म अष्टभिर्दिनैः कुर्वन्ति तदा तर्कानुसारं विंशतिः श्रमिकास्तच्चतुर्भिर्दिनैः करिष्यन्ति। यद्यैवं भवेदपि परं तर्क इदमपि कथयति यत् १,१५,२०० द्वे शते पञ्चदशसहस्राणि लक्षं च श्रमिकाः तत् अर्धतृतीयपलेन ( एकेन मिनिटेन ) पूर्णं करिष्यन्ति। वस्तुतः एवं कदापि न भवेत्। एकस्य सीम्न उपरि श्रमिकाणां वर्धमाना संख्या कर्मणि बाधिका भविष्यति। कंचन मनुष्यं सरलं मत्वा लोका नित्यमुद्वेजयन्ति। तस्य स्वार्थोऽपि कदाचिदस्मिन्नेव वर्तते यत् स उद्वेजकोक्तीः सहेत। परन्तु एकस्मिन् दिवसे न जाने किं संघटते यत् स उद्वेल्लितो भवति, एतादृशं कर्म कृत्वैवावतिष्ठते यदस्माकं सर्वं तर्कं तस्य सर्वाणि हितानि त्रोटयति स्फोटयति च। एतादृशमाननाया आवश्यकता नास्ति यत् काचिद् दैवी दानवी वा शक्तिः तर्कासत्यतां सिद्धां कर्त्तुं कटिबद्धा वर्तते। इयं वार्त्ताऽस्ति यद् बुद्धेर्यादृशी यावती च सामग्री मेलिष्यति तादृशो व्यापको ग्राहकश्च तस्या अध्यवसायो भविष्यति। यदि कश्चित् सर्वज्ञो भवेत् अर्थात् यस्य कस्यचित् समस्तस्य विश्वस्य युगपत् प्रत्यक्षं बोभूयते तर्हि तस्य तर्कोऽपि असंदिग्धपरिणामो भविष्यति। साधारणतोऽस्माकं कस्या अपि परिस्थितेः सर्वेषां पटलानां ज्ञानं न भवति। स्तोकायाः सामग्र्याः बलोपरि वयमध्यवसायं कुर्मः अतस्तस्य परिणामोऽपि नहि यथार्थं निःसरति। प्रत्यक्षद्वारा तस्य वारंवारं संशोधनमापाद्यते। यदि कश्चन नवोऽनुभवो नवो हेतुर्वा मिलति तदा नवोऽध्यवसायः कृतिमापाद्यते। शतानि वर्षाणि यावद् मङ्गलादिग्रहाणां नाक्षत्रगतिविधिं दृष्ट्वा विद्वद्भिस्तेषां चारस्य सम्बन्धे नियमाः संपादिताः। एषां नियमानामाधारोपरि तर्केणायं निश्चयः कर्तुं शक्यते यद् अमुकतिथौ अमुककाले अमुको ग्रहः आकाशे अमुकस्थानोपरि भवेत्। दर्शनेन ग्रहो यथावत् तत्स्थानोपरि न मिलति। यावतो दीर्घस्यावधेः कृते गणना क्रियते तावती एव बृहती भ्रान्तिर्मिलति। कारणं स्पष्टमस्ति। यदि कस्यचित् समीपस्थस्य पिण्डस्याकर्षणविषये अथवा एतादृश्याः कस्याश्चिद् अन्यस्या वार्तायाः सम्बन्धे रक्तिकामात्रमपि भ्रान्तिरवशिष्येत तदा सा कालं प्राप्य वरीवृध्यमाना जायते। एतादृशी त्रुटि-

वारंवारं प्रत्यक्षेण अविसंवादिनीर्विधाय संशोधनमापादिता भवति। एक एतादृशः समय आसीद् यदा विद्वांसो लोकाः खवर्तिपिण्डानां गतिविधिं दृष्ट्वा इदं मन्यन्ते स्म यत् सूर्यादयो ग्रहाः पृथिव्याः परिक्रमणं कुर्वन्ति। नव्येषु हेतुषु लब्धेषु इदं मतं परिवर्तितं जातम्, अथ चैतादृशं मतं परिगृहीतं, यत् पृथिव्यादयो ग्रहाः सूर्यं परिक्राम्यन्ति। अद्यत्वे एतत् कथनमधिकं युक्तं प्रतीयते यत् प्रत्येकं ग्रहः सूर्यस्य आत्मनश्च संयुक्तं यद् गुरुत्वकेन्द्रं तस्य परिक्रमणं करोति। परमिदं केन्द्रं सूर्यपिण्डस्याभ्यन्तरे वर्तते अत एतादृशी प्रतीतिर्भवति यत्सूर्यस्य परिक्रमणं प्रचलतीति। सर्वज्ञस्य परीक्षकस्य तर्कः सदैव युक्तो भवति परन्तु साधारणमनुष्यः सर्वज्ञो न भवति। सर्वोऽपि ससम्भवो हेतुस्तस्य समक्षम् उपस्थितो न भवति, अतस्तस्य तर्कः पूर्णतया सत्यप्रतिष्ठो न भवितुं शक्नोति।

तर्के एकेनापरेण कारणेन बाधा पतति। मनुष्याणां कृते स्ववासनानां परित्यागः कठिनो वर्तते। या वासना अव्यक्ता भवन्ति, ताभ्यो मुक्तिस्ततोऽपि कठिनतराऽस्ति। वासना बुद्धिं कलुषयति तथा ईदृशं हेतुं स्वीकारयति येऽन्यथा अग्राह्याः प्रतीयेरन्। तृप्तबुभुक्षितयोः, निर्धनधनिकयोः, साधुकामिनोश्च तर्के भेदो भवति। या वार्ता एकस्य कृते बुद्धिसंगता भवति सैवान्यस्य तर्कविरुद्धा लगति। या एकस्य कृते सद्व्याति रस्ति सैव द्वितीयस्य पक्षे अव्यातेरतिव्याप्तेर्वा रूपे दृश्यते। निर्दोषस्य तर्कस्य कृते सर्वज्ञतया सह पूर्णवासनाशून्यताप्यपेक्ष्यते।

## ३ यम्, अतर्क्याधिकरणम्

वयं पूर्वाध्यायस्यातीन्द्रियप्रत्यक्षाधिकरणे दृष्टवन्तः स्मः यदेतादृशाः कतिचन विषयाः सन्ति यज्ज्ञानमस्माकमिन्द्रियव्यवधानं विनाऽपि भवति। आत्मनो रागद्वेषक्रोधानां तदवान्तरभेदानां च ज्ञानार्थमस्माभिर्नेन्द्रियमध्यमताऽपेक्ष्यते न च कस्यापि तर्कस्यावश्यकताऽस्ति। अयं तर्कस्य विषय एव न भवति। माताऽऽत्मनः पुत्रेषु स्निह्यति। अयं स्नेहो नहि कमपि तर्कमाश्रितोऽस्ति। मानुषी भवतु सिंही वा द्वयोः कृते मातृस्नेहोऽतर्क्योऽस्ति। सौन्दर्यमपि अतर्क्यमस्ति। समुद्रस्य उत्तालास्तरङ्गाः, अभ्रंचुम्बिनो गिरिशिखराः, निर्झराः, प्रपाताः, आकाशगङ्गायां मणिमालानिभा पिरोपिता तारावली, शरदो ज्योत्स्ना, पुष्करे विकसिता कमलराजिः, कोकिलानां कुहूरवः, कोमलकण्ठविनिःसृता भैरवी रागिणी, एषु सर्वेषु यत् सौन्दर्यं तत् स्वसंवेद्यमस्ति परन्तुतर्कद्वारा नान्यस्य पार्श्वं नेतुं शक्यते। शिवात्मककार्याणामभ्यन्तरे या सहानुभूतिर्भवति साऽपि ईदृश एव

पदार्थोऽस्ति। दह्यमानं निमज्जन्तं वा कंचन दृष्ट्वाऽपरो मनुष्यो यदा तं रक्षितुं कूर्दते तदा तस्य तया विपद्ग्रस्तव्यक्त्या सह यस्य तादात्म्यस्यानुभवो भवति सोऽतर्क्योऽस्ति। प्राणि-हत्याऽवद्यास्तीति वार्ता मनसि समाविष्टा जायते, प्रमाणं न ढुण्ढति। गणितशास्त्रं मूर्तिमत्तर्कः कथयितुं शक्यते परन्तु तस्य इयती बृहती अट्टालिका यत्तथ्या-धारोपरि स्थितास्ति तानि तथ्यानि अतर्क्याणि सन्ति। यदि द्वे वस्तुनी केनचित् तृतीयेन वस्तुना समे भवतस्तदा ते परस्परं समे भवतः, तदभिन्नाऽभिन्नस्य तदभिन्नत्वमिति न्यायोप्ये-तन्मूलक एव। अंशी स्वांशाद् बृहन् भवति यथा द्वौ द्वौ मिलित्वा चत्वार इति २+२=४-इयं वार्ता स्वयं सिद्धा मन्यते। आसां सत्यतायां किञ्चित् पुष्टं प्रमाणं नहि दातुं शक्यते। अस्माकं तु एतल्लगति यदेतानि सत्यान्येव भविष्यन्ति। एतदाधारोपरि तर्कं कृत्वा वयं यथार्थपरिणामोपरि प्राप्ता भवेम। परन्तु इदं ज्ञानं नस्तर्कद्वारा न जातमस्ति। एतादृशानि तथ्यानि अतर्क्याणि सन्ति। सर्वेषामनुभवानां मूलं यत् अहमित्यस्ति, तदपि स्वयमतर्क्य-मेवास्ति। तद् आत्मनाऽऽत्मानं जानाति नहि किञ्चित्तर्कद्वारा।

अहमेतत् पुनः स्पष्टं कर्तुं वाञ्छामि यत् अस्माभिस्तर्कस्यावहेलना न कर्तुं शक्यते। प्रभूतकं ज्ञानं यदन्यथाऽप्रकटितमेवावतिष्ठेत तत्तर्कद्वारैव प्रकटं भवति। तर्कस्याभावेऽस्माकं प्रत्येकं वस्तुनः, प्रत्येकघटनायाश्चानुभवः कर्तुमापद्येत, सर्वस्य कृते पृथक् पृथक् प्रमाण-मन्विष्येत। तर्कोऽस्मान् अस्मात् श्रमात् त्रायते ज्ञानं च प्रगतिशीलं संपादयति। स पर्वतो धूमयुतोऽस्ति, अस्मिन् वाक्ये स पर्वत इति नाम (उद्देश्यम्) अस्ति, धूमयुतोऽस्ति, इति आख्यातं विधेयमस्ति। आख्याते नाम्नः सम्बंधे यत् कथितं तत् अतर्क्यमस्ति। अस्माकं धूमस्य प्रत्यक्षं बोभूयते ईदृशी संवित् बोभूयते। परन्तु तर्कद्वाराऽस्माकम् एतद् विदितं भवति यत् पर्वतोपरि अग्निरस्ति, यतो हि यत्र धूमो भवति तत्राग्निर्भवति। इदं ज्ञान-मस्माकं तत्र गमनोपरि प्राप्तं भवेत् परन्तु तर्कः अस्मात् श्रमात् अत्रायत। प्राचीनाख्या-ताभ्यन्तरान्नवीनमाख्यातं निःसृतम् अथ चाहं कथयितुमपि शक्नोमि 'स पर्वतोऽग्निमानस्तीति' एतादृशेन ज्ञानेन वयमेतन्नियमं कर्तुं शक्नुमो यत् कीदृशो व्यवहारः कर्त्तव्य इति। यदि अस्माकं भोजनं पक्तव्यमस्ति अथवा शीतं लगति तदा वयं पर्वतस्य दिशं यायाम, अन्यथाऽन्यस्मिन् कर्मणि प्रवृत्ता भवेम। तर्कस्याभावे केवलं धूमदर्शनं व्यवहारस्य कृते मार्गदर्शकं भवितुं नाशकत्। यत् प्रत्यक्षं बोभूयमानमासीत् तत् चित्तस्य विकारमात्रं भूत्वा विरमेत्। अत एतत् स्पष्टमस्ति यत्तर्कस्य सहायतयैव वयं स्वज्ञानस्योपयोगं कर्तुं शक्नुमः। परन्तु ज्ञानस्य प्रभूतकः अंशोऽस्ति यो हि अस्माभिः तर्कम् अध्यवसायं च विना प्राप्तो भवति। स तर्कस्य कृते कांचित् सामग्रीं दातुं शक्नुयात् परन्तु स्वयमतर्क्योऽस्ति।

अस्माभिरत्र तज् ज्ञानसामग्र्या अतर्क्यतोपरि ध्यानं दत्तमस्ति या अतीन्द्रियप्रत्यक्षद्वारा प्राप्ता भवति परन्तु वस्तुतः अतर्क्यतायाः क्षेत्रं प्रभूतं बृहदस्ति। सेन्द्रियप्रत्यक्षे शब्देऽपि च तर्कस्य स्थानं नास्ति। यद्येतन्मन्यतां यद् वक्ता आप्तः पुरुषोऽस्ति तर्हि शब्दप्रमाणतो वयं जानीमो यत् स्वर्गस्याधिष्ठाता शक्रोऽस्ति, गायत्र्या जपेन पुण्यं भवति, काश्यां त्रिपुरा-भैरवीनामिका एका प्रतोलिका (वसतिः) अस्ति। इमाः सर्वा वार्ता अस्माकं कृते अतर्क्याः सन्ति। अस्माकं समक्षमेकं पुष्पं वर्तते। इदं पुष्पदर्शनं तर्कस्य विषयो नास्ति। वयं प्राक्तनानुभवाधारोपरि एतत्कालानुभवस्य सम्बन्धे इमं तर्कं तु कर्तुं शक्नुमो यदेतादृशा-नुभवो भवितुं न युज्यते–अयं युक्तिसंगतो नास्ति; अस्य तर्कस्य फलस्वरूपा शङ्का अस्माकं स्वप्रमाणसम्बन्धे उत्पत्तुं शक्नुयात् परन्तु यावत्पर्यन्तमनुभवो बोभूयते तावत् स स्वयमतर्क्योऽ-स्ति। मध्याह्ने आकाशे सूर्यो दृश्यते। यदि कस्मिंश्चिद्दिने कश्चित् चन्द्रमसं पश्येत् तदा तस्य इयं शङ्का भवितुं युज्यते यदिदं भ्रान्तिदर्शनमस्ति। ज्योतिषस्यामुकामुकनियमानुसार-मस्मिन् समये चन्द्रमा दृष्टिगोचरो भवितुं न शक्नुयात्। मम अक्ष्णोः कश्चन दोष आगतोऽस्ति अथवा अन्येन केनचित् कारणेन यथार्थं प्रत्यक्षं न बोभूयते। स पुरुष इमं सर्वं तर्कं कर्तुं शक्नुयात् परन्तु यावत् चन्द्रमा दृश्यते तावत्पर्यन्तं तस्य दर्शनं तावदेवातर्क्यमस्ति यावत् सूर्यस्य दृष्टिपथे आयानम्। प्रत्येकं प्रतीयमाना सत्ता अतर्क्या भवति परन्तु यदि तस्या अस्मदीयान्यानुभवैः सह सामञ्जस्यं न भवेत् तदा अस्मत्कृते एतत् शङ्काकरणस्य स्थलं वर्तते यत् यत्प्रमाणद्वारा तस्या ज्ञानमभूत् तस्य यथावत् प्रयोगो नाभूत्।

---

# पञ्चमोऽध्यायः

## दार्शनिकपद्धतिः

### १ मं, वर्गीकरणाधिकरणम्

दार्शनिकः समुचितस्य विश्वस्य स्वरूपं परिचेतुं वाञ्छति, परन्तु विश्वं तु प्रभूतं बृहदस्ति. अस्य कस्यचिदेकस्याङ्गस्यापि पूर्णपूर्णमध्ययनम् एकस्मिन् जन्मनि नैव भवितुं शक्नोति । एकैकस्य कीटाणोः जीवनचर्यायाः सम्बोधने बहूनि वर्षाणि लगन्ति पुनरपि कर्म पूर्णं न भवति। एतदर्थं प्रथमं कर्म यद् दार्शनिकः करोति तद् वर्गीकरणमस्ति । अन्येष्वपि शास्त्रेषु अनेनैवोपायेन कर्म क्रियते । जीवशास्त्री प्राणिनो वर्गेषु वण्टयति, अनेन सुविधा भवति । प्रत्येकं व्यक्त्या सह ज्ञामः समयो लग्यते अमुकः प्राणो अश्ववर्गीयः, एतावज्ज्ञानेन वयमेतस्य सम्बन्धे प्रभूता वार्त्ता वदितुं शक्नुमः। अमुकं वस्तु त्रिकोणाकृति अस्ति अथवा ताम्रमयमस्ति एतावज्ज्ञानम् अस्मभ्यं तस्य कियतां गुणानां परिचयं ददाति । वर्गस्य कियतीनां व्यक्तीनां विस्तारपूर्वकसम्बोधनेन तत्सवर्गाणां सम्बोधनं सुकरं भवति ।

वर्गस्य सर्वासु व्यक्तिषु यल्लिङ्गं प्राप्यते यत्कारणात् तत् एकस्मिन् वर्गे रच्यते, तत् सामान्यं कथ्यते । प्रत्येकं व्यक्तिस्तस्य सामान्यस्य विशेषोऽस्ति। सर्वे मनुष्या एकसदृशा न भवन्ति । तेषां बले बुद्धौ वैभवादौ च बृहदन्तरं भवति, पुनरपि तेषु सर्वेषु केचन केचन ईदृशा गुणा भवन्ति ये तान् जगतोऽन्येभ्यः सर्वेभ्यो वस्तुभ्यो व्यावर्तयन्ति । तेषां गुणानां समुच्चयो मनुष्यत्वं मनुष्यजातिर्वा कथयितुं शक्यते । मनुष्यजातिः सामान्यमस्ति, प्रत्येकं

मनुष्यस्तस्या विशेषोऽस्ति । प्रत्येकं मनुष्यस्य पृथक् पृथक् आत्मन उच्चता, स्थौल्यं, रङ्गः, आकृतिः, आचारः, विचार एवमादयो भवन्ति, परन्तु मनुष्यत्वे उच्चतादिषु सर्वेषु गुणेषु सत्स्वपि काचन विशिष्टा उच्चता विशिष्टो रङ्गो वा न भवति । तदेकमीदृशं टोपकमस्ति यत् प्रत्येकं मनुष्यस्य शिरस उपरि यथावत् संनिविशति । अनेन प्रकारेण रक्तवस्तुषु रक्तिमा स्थूलेषु वस्तुषु स्थूलता चलेषु वस्तुषु क्रियाशीलतादयः सामान्यानि सन्ति । इदं स्पष्टं भवितुं युज्यते यत् सामान्यं बुद्धिनिर्मितमस्ति । नीलवस्तुभ्यः पृथक् नीलिम्नो लम्बवस्तुषु पृथक् लम्बत्वस्य विडालेभ्यः पृथग् विडालत्वस्य काचित् स्वतन्त्रा सत्ता नास्ति । यदा कतिभ्यो वस्तुभ्य एकप्रकारिकाऽनुभूतिर्भवति तदा बुद्धिस्तामनुभूतिं ताभ्योऽन्याभ्योऽनुभूतिभ्यः पृथक् करोति यास्तेभ्यो वस्तुभ्यो लभ्यन्ते । इयमनुभूतिस्तेषां सर्वेषां वस्तूनां परिचायिकास्ति यानि वस्तूनि अन्यविषये परस्परं भिन्नानि सन्ति । इमामनुभूतिं तेषां मुख्यं गुणम् अपि च अन्यान् गुणान्, यत्कारणात् तेषां व्यक्तित्वेषु भेदः प्रतीतो भवति, आकस्मिकान् गुणान् मन्यन्ते । अनेन प्रकारेण तेषां दर्शनेन बुद्धौ सुविधा भवति । परमिदं सामान्यं, येषामाधारोपरि वर्गीकरणं क्रियते, वस्तुगतं नास्ति किन्तु बुद्धिनिर्मितमस्ति ।

इयत्तु सदा ध्याने रक्षणीयं यदिदं वर्गीकरणमात्मनः सुविधायै क्रियते । वर्गभेदः कृत्रिमो भवति । तेषामेव वस्तूनां नयभेदेन अनेकप्रकारैर्वर्गीकरणं कर्त्तुं शक्यते । यद् वस्तु एकया दृष्ट्या एकस्मिन् वर्गे पतति तदेवान्यया दृष्ट्याऽन्यस्मिन् वर्गे पतिष्यति । स एव मनुष्यो यो हि राजनीतिकविचारेण अविचाल्यो राष्ट्रवादी अस्ति धार्मिकविचारेण खिष्टीयमतनिभान्ताराष्ट्रीयसंस्थायाः सदस्यो भवितुं शक्नोति ।

एता वार्त्ता ध्याने रक्षित्वा वर्गीकरणं कर्त्तव्यम् । अन्यथा अस्या वार्ताया आशङ्का स्थास्यति यत् सामान्यानां स्वतन्त्रा सत्तास्तीति, अथ च प्रकृतौ वस्तूनि स्वतन्त्राणि मिथो व्यावृत्तानि, अर्थात् परस्परं सदा पूर्णतया पृथग्धर्मवत्सु वर्गेषु वण्टितानि सन्ति । इदं विकल्पनामकमज्ञानं भवेत् । एतदाधारोपरि यद् विश्वस्य चित्रं सम्पत्स्यते तत् सर्वथाऽसत्यं भविष्यति ।

दार्शनिकानां कर्म एतेन किञ्चित् लघुकं भवति यत् अपरे लोका अपि वस्तूनां वर्गीकरणं कृतवन्तः स्मः । विज्ञानस्य विभिन्नानि अङ्गानि वर्गीकृतविश्वस्यैवानुशीलनं कुर्वन्ति । वर्गविभागस्तावद् यादृशस्तादृशो वा भवतु, एकं वस्तु कतीनांचन विज्ञानाङ्गानां क्षेत्रे पतति एव विश्वं सम्बोद्धुं वयं वस्तूनि वर्गेषु विभजामः परंतु किमप्येकं वस्तु सम्बोद्धुं

सर्वेषां वर्गाणाम् अर्थात् समुचितविश्वस्य सम्बोधनमावश्यकमस्ति। प्रत्येकं पिण्डे सर्वं ब्रह्माण्डं भरितमस्ति । तथापि विज्ञानकृतो विभाग उपयोगी वर्तते। विज्ञानस्य विभिन्नेषु अङ्गेष्वपि गणितं भौतिकविज्ञानं, जीवविज्ञानं, मनोविज्ञानं च मुख्यानि सन्ति। शेषतः एतासामेव विद्यानां विस्तरो विनियोगश्च भवतः । दार्शनिकानां विशेषविवरणाभिज्ञानस्यावश्यकता नास्ति, तेषामेषां शास्त्राणामध्ययननिष्कर्षेषु एषां सिद्धान्तेषु च तात्पर्यमस्ति । सर्वे स्वस्वदृष्टिभेदानुसारं विश्वं व्यभजन् । दार्शनिकैरेतद् द्रष्टव्यं यत्तैः स्वस्वपद्धत्यनुसारम् एषां जीवाजीव-जडचेतन-भौतिकाभौतिकादिविभागानां सम्बन्धे किं कथनीयमस्ति ।

## २यं समन्वयाधिकरणम्

दार्शनिकानां कर्म एतान् प्रतिशास्त्रसिद्धान्तान् मेलयित्वा तेषां समन्वयं च कृत्वा समन्वितानां तेषां स्थिरीकरणमस्ति, ये विश्वस्य सत्यं स्वरूपं द्योतयेयुः । यथा द्वयोर्द्वयोर्योगेन चत्वारः सम्पद्यन्ते तथैव एषां विभिन्नानां सिद्धान्तानां योगं कर्त्तुं न शक्यते, यदि शक्येतापि तथापि एषां मेलनेन जगतः स्वरूपं नहि सम्पद्येत । यथा वयं प्रथममेवाकथयाम यद् विश्वम् अयुतसिद्धावयवपदार्थोऽस्ति तदवयवानां स्वतन्त्रं जीवनं नास्ति। सम्पूर्णं विश्वम् आत्मनः क्षुद्रात् क्षुद्रतरे त्रुटितके वर्तमानमस्ति । एकः क्षुद्रः प्राणी गृह्यताम् । तस्य नखानां दन्तानां च आकृतिः तस्य खाद्यस्यानुकूलमस्ति, खाद्यस्य सम्बन्धो जलेन वायुना च सह वर्तते, जलवाय्वोः पृथ्वीसूर्ययोः सम्बन्धेन, सूर्यतापस्य तदभ्यन्तरपरमाणूनां त्रोटनेन नवानां निर्मित्या, परमाणूनां निर्मितिः त्रोटनं च वायुतेजसोः सम्बन्धेन भवति । अस्मिन् समये यो हि विचारो भवतो मनसि उत्थितोऽस्ति तस्य सम्बन्धस्तया सभ्यतया संस्कृत्या च सह वर्तते या वर्षसहस्राद् विकसिता भवती सती शिक्षारूपेण भवन्तं प्रोञ्छति, द्वितीयतस्ताभिरिच्छाभिर्वासनाभिः स्मृतिभिश्च वर्तते यासामादित्वस्य ज्ञानं भवतो नास्ति, तृतीयस्यां दिशि ताभीराजनीतिकीभिरार्थिकीभिः सामाजिकीभिश्च परिस्थितिभिरस्ति, यासां कारणानि शतानि क्रोशान् दूरं शतानि वर्षाणि पूर्वं च प्रस्फुटितान्यासन्, तुरीयायां दिशि ताभिः प्राकृतिकघटनाभिः सह वर्तते यासां रश्मिः चन्द्रं सूर्यं नक्षत्राणि च यावत् प्रोञ्छति । अतः प्रति त्रुटितकं समूहो वर्तते । प्रत्येकं शास्त्रम् आत्मनः क्षेत्रं यथासम्भवम् अपरेभ्यः सर्वेभ्यः क्षेत्रेभ्यः पृथक् मत्वा चलितुं प्रयत्नं करोति । एवं प्रभूता विवरणस्य वार्ता ज्ञानपथं यातुं शक्नुवन्ति, परन्तु आसां विवरणस्य वार्त्तानाम् एतादृशः पाषाणसमूहः समापतति येन एकतायाः सूत्रं व्यवहितं दायतेज। ार्शनिकानां दस्तिकर्मे

यत् स सततम् इमां वार्तां ध्याने रक्षेत् यत् स विश्वस्य स्वरूपं परिचेतुं वाञ्छति। एतल्लक्ष्यं समक्षं निधाय विभिन्नशास्त्रमूलनिष्कर्षाणां मेलनं कृतं भविष्यति। परन्तु एवं प्रयत्ने कृते इदं प्रतीतं भविष्यति यत् त्रुटितकानि नहि मिलन्ति, कश्चनांशः क्षपितोऽस्ति। नद्यां घटा बालघटिका लोटाश्च रक्ष्यन्ताम् एषु जलं भरितं भविष्यति। तज्जलं नद्या एव भविष्यति, अथ च प्रत्येकं वर्तनस्य पानीयं तदाकारं भविष्यति। परन्तु एषु पात्रेषु नदी नायाति पात्राणां मध्ये मध्ये यानि छिद्राणि सन्ति तेभ्यः पानीयं वहदस्ति। तत् कस्मिंश्चित् पात्रे नायाति। यः स्थितो भूत्वा तत् द्रष्टुं प्रभवेत् स एव प्रवाहमय्या नद्याः साक्षात्कारं कर्तुं शक्नुयात्। एवमेव विश्वस्वरूपस्य ईदृशोंऽशोऽप्यस्ति यः कस्यापि विज्ञानस्य विषयो नास्ति। तन्मेलनं विना अपराणि त्रुटितकानि विकीर्णानि भविष्यन्ति विश्वस्य चित्रं च न सम्पद्यते। अस्यांशस्य ज्ञानं दार्शनिकस्य कस्मिन्नपि शास्त्रे न मिलेत्। अयं तस्य मननस्य परिणामो भविष्यति। तस्य समक्षं विभिन्नशास्त्राणां सिद्धान्ता भविष्यन्ति; तेन चैतद् विवेचनीयं स्यात् यदेतान् कथं मेलयेयम् येन समुचितं चित्रमविकृतं सम्पन्नं भवेत्। रिक्तस्थानानां पूर्तिस्तेन तैरतर्क्यैस्तत्त्वैः कृता भविष्यति येषां तस्य अतीन्द्रियः साक्षात्कारो जातो भवेत्। यो यावन्मेधावी भवेत्, यस्य बुद्धिर्यावन्निर्मला सर्वग्राहिणी च भवेत् सोऽस्मिन् कर्मणि तावदेव समर्थः स्यात्, यतोहि तस्यातीन्द्रियोऽनुभवस्तावानेव विशदो व्यापकश्च भवेत्। इयमेव हि समन्वयप्रक्रियाऽस्ति। एतेनैव यथार्थज्ञानं भवति।

अत्र एकमधिकरणं विश्लेषणस्य सम्बन्धेऽपि दातुं शक्यते स्म। समन्वयकरणसमये लब्धसामग्र्या उपरि विचारं कृत्वा तासां मध्ये कासांचित्, या मिथ्या गौण्यः अनावश्यक्यो वा प्रतीता भवेयुः, त्यागं कृत्वा शेषाणां संग्रहः कर्त्तुमापद्यते। समन्वयस्य प्रक्रिया जहदजहत्स्वरूपा भवति। केषांचित् त्यागः केषांचित् ग्रहणम च जहदजहत्शब्दार्थोऽस्ति। या सामग्री लाता भवति, तस्याः यदा कदा मीमांसाप्यपेक्ष्यते। सत्यं तु एतदस्ति यत् समन्वयस्य फलस्वरूपम् एतादृशीनां सर्वासां सामग्रीणां मीमांसा स्वतो जायते। कस्यचित्तत्त्वस्य मीमांसायाः तात्पर्यमस्ति तस्यार्थस्य यथावल्लापनम्। व्यष्टेः समष्टिपीठिकायां दर्शनम्, प्रत्येकं पृथग् वस्तुनः स्थानस्य समूहे परिचयो मीमांसापदेनोच्यते। विश्लेषणं मीमांसा च समन्वयस्य अङ्गभूते स्तः अतोऽस्माभिरेतयोः सम्बन्धे पृथग् विचारो न कृतः। समन्वयेन यः सिद्धान्तो निष्कृष्टः स वस्तुस्वरूपस्य प्रकाशकोऽस्ति, न कल्पनामात्रम्। अस्य परीक्षणमनया वार्त्तया भवति यत् स सर्वान् प्रतिशास्त्रसिद्धान्तान् एकस्मिन् सूत्रे ग्रथितुं शक्नोति न वा अपि च सर्वेषां सेन्द्रियातीन्द्रियानुभवानां चोपरि प्रकाशं दातुं शक्नोति न वा। यो दार्शनिकसिद्धा-

तोऽस्यां वार्त्तायां यावत् सफलो भविष्यति तावदेव स सत्यो भविष्यति अथ च मुमुक्षुभ्य-स्तावत् परितोषं च दास्यति ।

# ३ यं निदिध्यासनाधिकरणम्

अस्माभिर्दृष्टं यत् समन्वये प्रभूतं काठिन्यमनुभूयते। एकत आत्मनोऽतीन्द्रियानुभवस्य अथवा कस्यचिदाप्तपुरुषस्यातीन्द्रियानुभवस्य आश्रयग्रहणं विना कर्म न प्रचलति। पुनरपि पृथक् शास्त्राणां सिद्धान्तानां यथार्थतायाः पूर्णा निर्भरता च नास्ति। तेषां सिद्धान्तानाम् आद्यद्रष्टृणामपि स्वकीयशास्त्राणां विवरणानां समन्वयकरणे यत् किञ्चिदतीन्द्रियप्रत्यक्षस्याधारो ग्राह्यो भवत्येव। इतोतिरेकेण इन्द्रियाणां तद्ग्राह्योपकरणानां च अल्पशक्तता बाधां ददाति। दूरवीक्षणयन्त्रसाहाय्येनापि चक्षुरिन्द्रियं सर्वाणि रूपवन्ति वस्तूनि ग्रहीतुं न शक्नोति। पुनरपि चित्तं पारदर्शकं यन्त्रं नास्ति। तद् वस्तुभिरुपरक्तं तु भवति परन्तु आत्मनः पुराणं भाण्डागारं, वासनाः, स्मृतीश्च त्यक्तुं न शक्नोति, अतो वयं तद्द्वारा वस्तुस्वरूपस्य यथार्थज्ञानं प्राप्तुं न शक्नुमः। आसां सर्वासां वार्तानां निच्युतिरियमस्ति यत् अनया सामग्र्या यः ज्ञानराशिः सम्पद्यते सः अपूर्णः अथच अयथार्थश्च भविष्यति । यः केवलं चित्तविलासमिच्छति स तेन सन्तुष्टो भवितुं शक्नोति। परन्तु सत्यस्य गवेषकस्य कर्म तेन न प्रचलेत्। तस्य प्रकाशोऽज्ञा-नस्य सर्वमन्धकारं दूरीकर्तुं न शक्नुयात् ।

सकलस्यानर्थस्य मूलजटा चित्तचञ्चलता सततं स्वकीयसंस्कारभारनतता च स्तः। तत् स्वकीये रङ्गे वस्तुस्वरूपं क्षपयति। बुद्धेः समक्षं वस्तुस्वरूपम् अहङ्कारद्वारेण प्रत्ययो भूत्वा आयाति, अतो बुद्धौ शुद्धवस्तुनो नहि प्रत्युत अहंकारवेष्टितस्य वस्तुनो ज्ञानंभवति । शुद्ध-वस्तुनो ज्ञानं तदा भवेत् यदा अहंकारेण मुष्टीमुष्टि विना साक्षात् बुद्ध्या संभेदो भवेद्, अथवा अहंकारः स्वयं किञ्चिन्न कुर्यात् । प्रथमः पर्यायः सम्भवेन्नहि। बुद्धिमनसोर्मध्येऽहंकारः स्थास्यत्येव अतोऽहंकारो यदि निश्चेष्टः कर्तुं शक्येत् तदा शुद्धवस्तुनो ज्ञानं भवितुं शक्नोति। एकापरा बाधास्ति। वयं दृष्टवन्तः स्मः, यत् इन्द्रियाणि यथावत् कर्म कर्तुं न पारयन्ति। तेषामुपकरणानि पर्याप्तं बलवन्ति न सन्ति। उपकरणेषु अपरं किंचिद् बलं नापेक्ष्यते, भवतु, केवलं एतावदपेक्ष्यते यत् शरीरं यां बाधां ददाति तां तानि क्षामां कुर्युः। शरीरम् इन्द्रियाणां कृते प्रणाली अस्ति परन्तु तानि बद्ध्वा तिष्ठति। इदं साधारणव्यव-हाराय अच्छमस्ति । यदि मनुष्यस्येन्द्रियाणि निर्बाधं कर्म कर्तुं लगेयुः तदा दैनन्दिनो व्यवहारः साधयितुं न शक्येत। परमिदं बन्धनं सूक्ष्मज्ञानस्य विरोधि वर्तते। यदि केनापि

प्रकारेण शरीरस्य बन्धनं श्लथं कर्तुं शक्येत तदा इन्द्रियाणि शरीरस्य समक्षं प्रभूता यथावद् ज्ञानसामग्रीरुपस्थापयितुं शक्नुयुः ।

एकापरा महत्त्वपूर्णा बाधास्ति । यद् ज्ञानं प्रतिभासितं भवति तद् यदि अस्माकं विचारैः वासनाभिश्च सह सामञ्जस्यं न लभते तदा चित्तं तस्य स्वीकारं कर्त्तुं नेच्छति । मूढग्राहात् कारणात् सत्यस्य प्रकाशोऽस्मभ्यं न रोचते अथ च वयं ततो मुखं परावर्त्य एतादृशस्य ज्ञानाभासस्य कल्पनां कुर्मः येनास्माकं जीवनक्रमे बाधा न पतेत् । आत्मनः चिराभ्यस्तस्वत्वक्षयभयं बुद्धिं मुग्धां करोति ।

प्रभूता दार्शनिका आसां वार्तानामुपरि ध्यानदानस्यावश्यकतां न सम्बुध्यन्ते । ते तावत्या सामग्र्या कर्म चालयितुं पर्याप्तं सम्बुध्यन्ते याऽस्माभिः साधारणावस्थायां प्राप्तुं शक्येत । परन्तु यः पूर्णज्ञानं बुभुत्सुर्भविष्यति सः अधस्तात् कथितवार्तानां महत्त्वं संभोत्स्यते सोऽस्या वार्त्तायाः प्रयत्नं कर्तुं वाञ्छिष्यति यत् शरीरस्य ज्ञानबाधकत्वसंपत्ती रुद्धा भवेत् अथच चित्तस्य तासां वृत्तीनां शमनं कृतं भवतु यत् कारणात् स विश्वस्वरूपस्य उपलब्धिं कर्त्तुं न शक्नोति । एतत्प्रकारकः प्रयत्नो निदिध्यासनं कथ्यते । निदिध्यासनं विना सत्यस्य साक्षात्कारो भवितुं न शक्नोति । उपरिष्टादध्याये एतदुपरि विचारो भविष्यति ।

## ४ म् कस्मादधिकरणम

अस्या वार्तायाः सम्बोधे काठिन्यं भवितुं न युज्यते यत् विश्वस्वरूपेऽवगते सति कस्मादिति प्रश्नस्यावसरो नावशिष्यते । अस्मद्युष्मदात्मकजगतः स्वरूपं यादृशं किञ्चिद-प्यस्ति तादृशमस्त्येव, तादृशं कथमिति प्रष्टुं न शक्यते । यतोहि तदन्तिमं तथ्यमस्ति, परमं सत्यमस्ति, तत् केनचित् किञ्चिदुद्दिश्य न समपादयत् संकल्पपूर्वकम् । तद् आत्मनाऽऽत्मानं बिभ्रदस्ति । वस्तुतः अस्तित्वे सत्तायां वा कस्मादिति प्रश्नस्यावकाशो न भवति । शास्त्रात् कथमिति प्रष्टुं शक्यते । विज्ञानमपि कथमित्यस्योत्तरं ददाति । विज्ञानं यस्याः कार्यकारण-शृङ्खलाया निम्नाधारोपरि दण्डायमानं भवति तस्याः प्रत्येकम् भागः कस्य नु कस्यचित् कथमित्यस्योत्तरमस्ति ।

## ५ मम् विनियोगाधिकरणम्

सम्बद्धत्वाद् वयमत्र संक्षेपतोऽस्यापि प्रश्नस्योपरि विचारं कृत्वावतिष्ठामहे, यद् दार्श-निकज्ञानस्य विनियोगः कोऽस्ति, तत् कस्मै कर्मणे प्रभवेत् । ततोऽर्थस्य कामस्य च

सिद्धिस्तु नान्वेषणीया यतः अनयोरन्तर्भावो विभिन्नविज्ञानाङ्गानां क्षेत्रेषु वर्तते। दर्शनाद् वयं तदेव याचितुं शक्नुमः यदर्थं तस्यानुशीलनं कृतमासीत्। धर्मोऽस्मान् दर्शनदिशं नीतवानासीत्। दार्शनिकज्ञानम् विश्वस्य सत्यस्वरूपस्य ज्ञानम् धर्मज्ञानस्य साधनं भविष्यति। अस्माकं ततो ज्ञातं भविष्यति यत् जगति अस्माकं किं स्थानमस्ति, केन केन सह कीदृशः सम्बन्धोऽस्ति, अनेन सम्बन्धेन अस्माकं कीदृशानि कर्त्तव्यानि समुत्पद्यन्ते अथच एषां कर्त्तव्यानां कथं पालनं कर्तुं शक्यते। अनेन सह अज्ञानात् कारणाद् य इच्छाभिघातो भवति सोऽपि नष्टो भविष्यति। कर्त्तव्यपालनकरणाय क्षमता आयास्यति। ज्ञानस्य इयमेवावस्था धर्ममेघसमाधिः कथ्यते। एतत्प्रकारकं ज्ञानं व्यक्तिविशेषस्यैव भवतु नाम परं तस्य लाभः तद्व्यक्तिं यावत् परिसीमितो न भवेत्। स यत् सत्यं घोषिष्यति तत् अपरोऽपि लोको ग्रहीष्यति। तावदुच्चानुभवाभावरूपकारणात् सर्वेषां लोकानां कृते तत् साक्षात्कृतं माभून्नाम तथापि स्वीकार्यं तु भवेदेव यतोहि तस्य प्रकाशे ते आत्मनो ज्ञानम्, आत्मनोऽनुभूतीः, आत्मभिः साक्षात्कृतानां सत्यानां सामञ्जस्यं द्रष्टुं शक्ष्यन्ति अथच आत्मधर्माणां न्यूनाधिकभावेन परिचयं च कर्तुं प्रभविष्यन्ति। तदाधारोपरि समाजस्य ईदृशी व्यवस्था प्रतिष्ठिता कर्त्तुं शक्यते यस्यामधिकाधिका मनुष्या अर्थस्य कामस्य चोपभोगं कर्तुं शक्नुयुः आत्मधर्मं च पालयेयुः। पूर्णज्ञानस्य निम्नाधारोपरि समाजस्य यत् सङ्घटनं भविष्यति तद् निर्दोषं भविष्यति। कालगत्या जगतो विस्तारस्य सम्बन्धे ज्ञानस्य वृद्धिर्भवितुं शक्नोति, प्राकृतिकशक्तीनामुपयोगस्य नवीनाः प्रकारा आविष्कृता भवितुं शक्नुवन्ति, अतः समुदायस्य राजनीतिकस्य, आर्थिकस्य, सामाजिकस्य वा जीवनस्य नव्या व्यवस्था आवश्यक्यः प्रतीता भवेयुः, परन्तु पूर्णप्रज्ञसंपादिताः सिद्धान्ताः सदैव श्रेयस्कराः स्थास्यन्ति। एते सिद्धान्ताः तन्निदिध्यासनद्वारा परिशोधितचित्तद्वारा साक्षात्कृता भविष्यन्ति अतो वैज्ञानिकप्रगत्या तदुपरि प्रभावः पतितुं न शक्नोति। आम्, इदं निःसन्देहमावश्यकमस्ति यद् देशकालपात्रानुसारं तन्मीमांसाप्रयोगकर्त्तारोऽपि धर्मज्ञा अर्थात् सत्यं दार्शनिका भवेयुः। यद् दार्शनिकं मतं निदिध्यासनं विना स्थिरं कृतं भविष्यति तदित्थं सत्यं भवितुं न शक्नोति। तदुपरि दार्शनिकस्य आत्मनश्चित्तस्य संस्काराणां मुद्रा भविष्यति अथच तस्य यथार्थता तत्सामग्र्या उपरि अपि निर्भरा भविष्यति यस्यास्तेन उपयोगः कृत आसीत्। इयं सामग्री तात्कालिकवैज्ञानिकोन्नतेः परिणामो भविष्यति। परन्तु पुनरपि आसु सर्वासु त्रुटिषु सतीष्वपि, ईदृशं मतं सत्यांशेन सर्वथा विहीनं न भवेत्। अव्यवस्थायां प्रत्येकं व्यक्तेः आत्मनो मार्गम् आत्मनः स्वार्थम् आत्मनः अर्थकामौ प्रधानं लक्ष्यं मत्वा अवचयः कर्त्तव्यो भवति। स्वार्थानां तात्कालिकसङ्घर्षानुसारं वैयक्तिकस्य सामूहिकस्य जीवनस्य नियमनं भवति।

कस्यापि दार्शनिकस्य सिद्धान्तस्य आधारोपरि व्यक्तेः समुदायस्य च जीवनस्य सङ्घटितत्व करणम् (संघटनम्) अव्यवस्थातो लक्षगुणं श्रेयस्करमस्ति ।

ज्ञानस्यायं प्रभूतं बृहन् विनियोगोऽस्ति, परन्तु ज्ञानिनः कृते सर्वतो बृहत्तम उपयोगोऽज्ञानस्य निवृत्तिरस्ति । अज्ञानं बन्धनमस्ति, ज्ञानं तस्य बन्धनस्य कर्तनमस्ति । बन्धनस्य कर्तनम्, अज्ञानस्य छोटनम्, मोक्षः, स्वतो लक्ष्यमस्ति । तत् स्वयं परमश्रेयः, परमानन्दस्वरूपं चास्ति ।

---

# षष्ठोऽध्यायः

## निदिध्यासनम्

### १ मं योगस्वरूपाधिकरणम्

निदिध्यासनप्रक्रियाया योगेति नामास्ति। योगस्योद्देश्यम स्त यत् स चित्तम् ईदृश्याम-वस्थायामानयेत् यस्यां तद् ज्ञानस्य निर्बाधं साधनंसम्पद्येत। चित्तस्य ताः शक्तयो, या इन्द्रियाणि उच्यन्ते, ताः शरीररूपस्थूलयन्त्रद्वारा कर्मकरणाय बाध्याः सन्ति, अतः प्रभूतान् विषयान् ग्रहीतुं न शक्नुवन्ति। इन्द्रियाणामियं विवशता पूर्णदार्शनिकज्ञानमार्गे बाधिका भवति, परन्तु जगतो व्यवहारस्य दृष्ट्या उपयोगिनी अस्ति। शरीरमेतदर्थं निर्मितमस्ति यत् तद्द्वाराऽस्माकं बुभुक्षा पिपासा कामवासनादीनां तृप्तिर्भवतु। एतत्कर्मणः कृते परिमितेन्द्रियशक्तिरेवोपयुक्ता-ऽस्ति। यदि वासना शारीरिक्य आवश्यकताश्च इमा एव भवेयुः इन्द्रियाणि च निर्बाधानि स्युस्तदा जीवननिर्वाहाऽसम्भवो भवेत्। यदि स्त्रीपुरुषौ आत्मन अक्षिभ्यां प्रत्येकं शरीरा भ्यन्तरे भवन्तीः क्रियाः सततं पश्येयुः किं तदा कदापि यौनसंबन्धं कर्तुं प्रवृत्तौ भवेताम्? यो मनुष्यः खाद्यपेययोरभ्यन्तरं तत्कलेवरे च वर्तमानान् जीवाँश्च द्रष्टुं शक्नुयात् स किम् कदाचिदपि आत्मनो बुभुक्षां पिपासां च शमयितुं शक्नुयात्। ये विषयाः संविद्रूपेण मनसि प्रवेशं कर्तुं पारयन्ति तेषां यथार्थज्ञानं भवितुं न शक्नोति यतश्चित्तं स्वयं तान् रञ्जयति। कस्मिंश्चिद् विषये चिरं चित्तनिरोधो दुष्करो भवति। परिणामश्चित्तस्य स्वभावोऽस्ति। यथा समुद्रे लहर्य्य उत्तिष्ठन्त्यः सन्ति तथैव चित्ते प्रज्ञानानि उत्तिष्ठन्ति। एकमायाति अपरं याति। एकस्याभिभवः अपरस्य प्रादुर्भावो निरन्तरं बोभूयते। अस्मिन् प्रवाहे कोऽपि विषयः स्थातुं न शक्नोति। प्रत्येकं प्रज्ञानं पृथक् पृथक् विषयो भवति; यदि

बहिर्विषयादटित्वा चित्तं स्वस्वरूपस्य, आत्मान्तःसञ्चितानां वासनानां संस्काराणां स्मृतीनां च प्रत्यक्षं कर्तुं वाञ्छति तदापि महत् काठिन्यमापतति। अमुतो बाह्या विषया इन्द्रियद्वाराणि खटखटायन्ते, इतश्चित्तप्रवाहः कस्यचिद् आभ्यन्तरस्य विषयस्योपरि रोद्धुं न प्रभवति। वासनाः सत्योपरि यवनिकां ददते। नग्नस्य सत्यस्य दर्शने भयं लगति। चित्तस्यैवंभूतो विकासः साधारणजीवनयात्रायाः अर्थकामयोः भोगस्य अनुकूलोऽस्ति। य एतदुपरि उत्थातुं वाञ्छति तदर्थमस्मिन् बन्धनं प्रतीयते। योगस्योद्देश्यमेषां काठिन्यानामुपरि विजयप्राप्तिरस्ति। तस्याभ्यासेन इन्द्रियाणि शरीरस्य स्थूलबन्धनात् उन्मुच्य विषयाणां सम्यग् ग्रहणे समर्थानि भवन्ति; चित्ते एकतानताऽऽयाति अर्थात् यद्यपि तत् स्वस्य परिणामनशीलतां न त्यजति परन्तु एकविषयोपरि यथेच्छकालपर्यन्तं लगयितुं शक्यते, एवं भवितुं शक्नुयात् यद् येषां प्रज्ञानानाम् अभिभवप्रादुर्भावौ भवेताम् तेषां विषये समानता भवेत्, तस्मिन्नेकाग्रताऽऽयाति अर्थात् सर्वार्थताया अवस्थायाः, यस्यां सहैव कतिचन वषया उपस्थिता भवन्ति, क्षये जाते एकार्थताया अवस्था आयाति, यस्याम् एकदा एक एव विषयश्चित्ते तिष्ठति, प्राथमिकसंस्काराणामेवं निरोधो भवति यत् अर्थमात्रनिर्भासो भवेत् अर्थात् अहंकारस्य तूलिकयाच्छुपितं वस्तुस्वरूपं बुद्धेः समक्षम् आयात्। तुच्छविकृतभोग लिप्साया वासनायाश्च उपरि विजयः प्राप्तो भवति, निकृष्टाभ्यामर्थकामाभ्यां लिप्तस्य स्वत्वस्य मोहो विगलितो भवति अथ च दृढतया सत्यसाक्षात्कारकरणस्य शक्तिरपि प्राप्ता भवति। चित्तस्येयमवस्था, यस्यां तद् अभिजातमणिरिव दृश्यपारं भवति, समाधिरुच्यते।

## २ यं वैराग्याधिकरणम्

इयं साधारणस्यानुभवस्य वार्ताऽस्ति यद् यदा किञ्चिद् बृहत् कर्म करणीयं भवति तदा चित्तस्य अपरवार्त्तातः आकर्षणमापादनीयं भवति। यावद् बृहद् कर्म भवति तावद् अपरवार्त्तातोऽसम्बन्ध आवश्यको भवति। विद्यार्थी, कलाकारः, वैज्ञानिकः, प्रयोक्ता, एते सर्वे जगतः प्रपञ्चात् यावदेव अलग्नान् आत्मनः कर्त्तुं पारयेयुः आत्मनाम् उद्देश्ये तावदेव सफला भवन्ति। दार्शनिकजिज्ञासूनां कृतेऽपीदमेव विधानमस्ति। य आत्मनोऽर्थं कामं चानुधावति स सत्यान्वेषणं कर्त्तुं न शक्नोति। ये च स्वर्गादिविषये लोभिनः सन्ति तेषां कृतेऽपीदं द्वारं पिहितमस्ति। एषां सुखानां जटायां रागोऽस्ति। रागाद् द्वेष उत्पन्नो भवति यतोहि सुखान्वेषिणां यस्मिन् नु कस्मिन् रूपे सङ्घर्षोऽवश्यम्भावी वर्तते। अत यो ज्ञानस्य सत्यान्वेषी अस्ति तेन विरक्तिशीलताऽवश्यमेव संपादनीया भविष्यति। किञ्चिद् वैराग्यम्

अर्थात् अर्थस्य कामस्य च दिग्भ्योऽभिरुचेरभावस्तु भवेदेव अन्यथा चित्तं ज्ञानान्वेषणदिशि प्रवणमेव न भवेत् ; किञ्चिद् वैराग्यमनवकाशमुत्पादयति, क्षामात् क्षामम् एतावत्तु भवत्येव यद् विद्यार्थिन इव शोधकर्त्तुरिव च दर्शनाध्येतुरपि सुखोपभोगस्यावकाशः क्षामं मिलति, अपरम् अरुचिरपि काचित् जायते। परन्तु एतावत् पर्याप्तं नास्ति । ईदृशव्यक्तिभिश्चित्तम् हठात् ईदृशसुखेभ्यः पृथक् करणीयम्। पुराणा अभ्यासाः संस्काराश्च वारं वारं विषयदिशम् आकृदयन्ति परन्तु तैः सह योद्धव्यम्। पतनाद् न क्षोभणीयम्। पुनरुत्थाय अग्रे गन्तव्यम्।

# ३ यं चित्तप्रसादाधिकरणम्

सकलस्य कालस्य तत्त्वचिन्तने व्यत्यायनं सम्भवेन्नहि। जिज्ञासोः किञ्चिन्नु किञ्चित् अगत्या करणीयं पतिष्यत्येव। जाग्रदवस्थायां क्षणमपि निष्क्रयस्थितेः सम्भवो नास्ति। यत् कर्म कृतं भविष्यति तत् स्वकीयं संस्कारं चित्तोपरि त्यक्ष्यति अथ च अयमेव संस्कारोऽग्रे गत्वा ज्ञानोपलब्धेर्मार्गे कण्टकः संपत्स्यते। एतदर्थम् इदमुचितमस्ति यद् ईदृशानि कर्माणि कर्त्तव्यानि येषां संस्कारः क्षामात् क्षामां हानिं कुर्युः। एवं कर्मकरणेन, अर्थात् यस्मिन् कर्मणि स्वार्थसिद्धिस्थाने परहितसिद्धिः लक्ष्यभूता भवति, ये संस्काराः सम्पद्यन्ते तेषु बन्धन-शक्तिः प्रभूतं क्षामा भवति। कर्मकरणस्यायं भावो नैष्कर्म्यं कथ्यते। नैष्कर्म्यस्य चतस्रो मुख्या अभिव्यक्तयो भवन्ति, अर्थात् तत् चतुर्भिः प्रकारैः प्रकटं भवति । इमाः मैत्री, करुणा, मुदिता, उपेक्षेत्येवं कथ्यन्ते । संसारे सुखमात्रायाः परिवर्धनं मैत्रीकरुणा-पदेनोच्यते। सुखिनः सुखस्य वृद्धेः करणं मैत्री, दुःखितस्य सुखितत्वसम्पादनं करुणा चोच्यते । नहि निष्क्रयोपविष्टस्य आशीर्वाददानं मैत्री नापि निष्प्रयत्नोपविष्टस्य अश्रुपातनम् करुणा च कथ्यते । मैत्री करुणा च प्रयत्नापेक्षिण्यौ क्रियासाध्ये च स्तः। ये लोका अच्छे कर्मणि, लोकसंग्रहे, आत्मनो धर्मपालने च लग्नाः सन्ति तेषां मार्गस्य निष्कण्टकत्वसम्पादनं, तेषां साहाय्यकरणं, तेषां प्रोत्साहदानं च मुदिता कथ्यते, अथ च ये लोकाः कुमार्गगामिणः सन्ति, लोकोत्पीडने रताः सन्ति तेषां गर्हणाम् अकृत्वा तेषाम् अपरेषां च हितस्य इच्छ्या विपथगमनाद् रोध उपेक्षा अस्ति । मुदितोपेक्षे केवलं भावने न स्तः, एतदर्थमपि सक्रियताया अपेक्षाऽस्ति । आसां चतसृणामपि कृते विवेकबुद्धेरपेक्षाऽस्ति। विवेकेनैव सत्यस्य, असत्यस्य, सुखस्य, दुःखस्य, पुण्यस्य अपुण्यस्य च परिचयो भवति। मद्यपो मदिरापानेन सुखी भवति, रोगी कटुकौषधपानेन दुःखी भवति। अतो लोकानां प्रवृत्त्यैव सुखदुःखयोः परिचयो भवितुं नहि शक्नोति। एवं स्यात् यत् प्रेयो भवेद् तत् श्रेयो न भवेत्। मैत्र्यादीनां यथावत् पालनं तु तदा स्यात् यदा आसाम् अनु-

सरणकर्त्ता स्वयं पूर्णज्ञानो भवेत् । जिज्ञासुस्तु ज्ञानस्य मार्गेऽधुना चलन्नस्ति । अतः स स्खलिष्यति, आसां त्रुटीनां परिणामश्च त्रुडो भविष्यति, तथापि यदि तस्य भावना शुद्धाऽस्ति अथ च स सन्ततं बुद्ध्या कर्म कुर्वन् व्यवहरति तदा त्रुटयः संशोधिता भवेयुः अथ च तेषां संस्कारा त्रुडा न भविष्यन्ति । यथा यथा च ज्ञानं वर्त्स्यते बुद्धिरपि तथा तथा शुद्धा भविष्यति अथ च धर्माधर्मपरीक्षणशक्तिश्च वर्धेत । एवं ज्ञानपथमारूढव्यक्तीनाम् इयं साधना लोकहितस्य साधनं सम्पत्स्यते ।

नैष्कर्म्यात् सर्वतो बृहत्तमोऽयं लाभोऽस्ति यत् तत् त्वंकाराहंकारयोः स्वकीयपरकीययोः तां भित्तिं निःसारां करोति या स्वार्थसङ्घर्षस्य कृते उर्वरायाः भूमेः कर्म करोति । यावदेव आत्मनो वासनानां दमनं कृत्वा परार्थः कर्मनोदकत्वेन संपाद्यते तावदेव चित्तस्य विक्षेपः क्षामो भवति अथ च तत् वस्तुस्वरूपसम्बोधे समर्थं भवति । युष्मद्वाच्यस्य ज्ञेयस्य प्रभूतं वृहन्नंशः अपरे प्राणिनः तेषां चित्तानि चेष्टाश्च सन्ति । वयं तानि आत्मीयाहंकारजवनिकाभ्यन्तरतः पश्यामः । मैत्र्यादिभावनाचतुष्टयस्य सतताभ्यासेन इयं जवनिका क्रमशः क्षीणा भवितुमारभते । अथ च वयमपरेषां यथावज्ज्ञानस्य पार्श्वमुपतिष्ठामः । चित्तस्येयं दशा प्रसादपदेनोच्यते ।

## ४ र्थम् व्रताधिकरणम्

शुद्धं चरित्रमाचरणं च व्रतशब्दार्थः । एवं तु प्रत्येकं मनुष्यो व्रती भवेत् परन्तु योगिनः कृते तु व्रताचारोऽनिवार्योऽस्ति । अव्रती योगी भवितुं शक्नोत्येव न । सत्यम् अहिंसा ब्रह्मचर्य्यं त्यागश्च योगिनो महाव्रतानि सन्ति । एषां पालनं सुकरं नास्ति । चित्तं व्याजम् अन्विष्यति, पदे पदे प्रलोभनानि मिलन्ति, स्खलनम् एवं शनैः शनैः भवति यत्तस्य प्राप्तिरपि न गोचरीभवति । एतदर्थं सततं सतर्कतया स्थितिः आवश्यिकास्ति । व्रतानामनुष्ठानेनासीमो लाभो भवति । इदानीमस्माकं प्रभूता दैहिक्यश्चैत्यश्च शक्तयः असदाचरणेन नष्टा भवन्ति । चित्तं बहिर्मुखं सम्पन्नं वर्तते अतो विक्षिप्तं तिष्ठति । यदि तस्य नियमनं कृतं भवेत् तदाऽस्याः शक्तेः संचयो भवेत् अथच चित्तम् अन्तर्मुखं कृत्वा तस्य काग्रतासम्पादने स लगयितुं शक्येत

महाव्रतानामनुष्ठाने बुद्धेः सहयोग आवश्यकोऽस्ति । कस्मादपि उपदेष्टुः पुस्तकाद् वा अहिंसात्यागसत्यब्रह्मचर्याणां सर्वाङ्गीणा शिक्षा प्राप्तुं न शक्यते । रोगिणः समक्षम् कथनं यत् तव व्याधि वैद्यः असाध्यप्रायं संबुध्यते इति सत्यं नास्ति अथच शस्त्रप्रयोगात्

हस्तम् आकृष्य उदासनम् अहिंसा नास्ति । क्वचित् क्वचित् आततायिनो हननमपि अहिंसा भवितुं शक्नोति । इदमुद्देश्यं तत्र भवेत् यत् अन्यैः साकं तस्याततायिनोऽपि कल्याणं भवेत् ।

महाव्रतानां तुल्यप्रायं स्थानम् उपव्रतानामप्यस्ति । श्रद्धातपसी उपव्रतानां प्रतीके स्त. । यश्च तपस्वी श्रद्धालुश्च नास्ति स योगे सफलतां प्राप्तुं न शक्नुयात् । तपसो बहवो भेदा सन्ति । पानखादनयोर्नियमनम् अर्थात् मांसस्य, मादकानां तथा नाडीनामुत्तेजकानां द्रव्याणां वर्जनन्, मिताहारः, मितनिद्रा, मितभाषणम् , अवहासापहासयोः परित्यागः, तितिक्षा अर्थात् शीतोष्णस्य क्षुधातृष्णयोश्च सहनं, पठनपाठनयोरपि ईदृशस्य वाङ्मयस्याध्ययनं यत् श्रेयस्करम् अर्थात् ज्ञानलब्ध्यनुकूलमानसवातावरणस्योत्पादकं भवेत् एतत् सर्वं तपसो रूपमस्ति ।

श्रद्धाया अर्थो नान्धविश्वासोऽस्ति । योगी विश्वस्य रूपं साक्षात् कर्तुं प्रस्थितोऽस्ति स शब्दप्रमाणोपरि निर्भरो भूत्वा नोपविशेत् , अतस्तस्य एवं (कस्यचिदुपरि एवं) विश्वास-करणस्यावश्यकताऽपि नास्ति । परन्तु एतावान् विश्वासोऽपेक्ष्यत एव यत् विश्वस्वरूपं ज्ञेयमस्ति तज्ज्ञानाय अस्थगितः परिश्रमश्च करणीयोऽस्ति । यो ज्ञानलवोऽद्य यावत् प्राप्तोऽस्ति सः अभिमानहेतुभावस्थाने नम्रताया विनयस्य चाङ्गभूत एकः पाठोऽस्ति । श्रद्धाया एकं बृहदङ्गम् इदमप्यस्ति यद् विश्वम् आत्मनः स्वरूपं तस्या व्यक्तेः समक्षमावृणोति या केवलं भोगस्य इच्छुकाऽस्ति परन्तु तदेव स्वरूपं तस्यसमक्षं उद्घाटयति यः ज्ञानस्यान्वेषको ऽस्ति । इयं भावना अन्वेषकस्य पन्थानं सुगमं सम्पादयति ।

यो रोग्यस्ति स योगित्वसम्पादनात् पूर्वं स्वस्थः सम्पद्येत । यस्य भोजनं न परिपच्यते, प्रतिवार्त्तां शिरो व्यथितुं लगति, अल्पेन खट्कारेण निद्रा भज्यते, तुन्दं निःसृतमस्ति, मासं लम्बते, स आत्मनश्चिकित्सां कारयेत् । एवम् या व्यक्तिः चिन्तायाः संशयस्य भयस्य च लक्ष्यभूता संपद्यते साऽव्यक्तिर्योगदीक्षाया अधिकारिणी नास्ति । लोका मृत्योर्भिया योगिनो नहि संपद्यन्ते, योगो दुर्बलानां कृते नास्ति । यस्तपः कर्तुं न शक्नोति स पूर्ण-ज्ञानस्याधिकारी नास्ति ।

## ५ म् प्राणाधिकरणम्

तत्त्वचिन्तनं, गम्भीरो विचारश्च शान्तवातावरणे शान्त्या उपविश्य स्थितस्यैव जायते । योगिना एकान्तं तथा स्वच्छम् एवं कीटमशकादिरहितं कलकलरहितं च स्थानं सेव्यम् ।

स आत्मनश्चित्तं नियन्त्रणे आनीतुमिच्छति। बलवतः शत्रोः सहायकान् पङ्गून् कृत्वा तदुपरि विजयप्रापणं सुकरं जायते। योगी इमां युक्तिमाश्रयते। शरीरे मेरुदण्डस्याभ्यन्तरे या नाडि-रज्जुरस्ति सा सुषुम्ना कथ्यते। तत्र स्थाने स्थाने नाडिकोष्ठकानिसन्ति येभ्यो नाडितन्तवो निःसृताः सन्ति। एषु केचन तु शाखाप्रशाखारूपेण वण्टित्वा शरीरस्य बहिर्भागे प्रसृताः सन्ति केचन च कण्ठमनुयान्ति। एवमेव शिरोऽभ्यन्तरे मस्तिष्कमस्ति यन्नाडिकोष्ठानां तन्तूनां च गुच्छकोऽस्ति। मस्तिष्कस्य सुषुम्नायाश्च यत्र संगमो भवति तद् ब्रह्मरन्ध्रं कथ्यते। सुषुम्ना तु तत्रैव समाप्ता भवति परन्तु तस्यांस्थितनाडिकोष्ठेभ्य आयातास्तन्तवः मस्तिष्कं यान्ति। तत्र तेषां विशेषकेन्द्रैः सह सम्बन्धो भवति। नासाक्षिकर्णजिह्वा आयातानां तन्तू-नामपि मस्तिष्केण साक्षात् सम्बन्धोऽस्ति। बाह्य वस्तूनामाघातेन नाडितन्तवः प्रकम्पिता भवन्ति। इदं प्रकम्पनं तन्मूलनाडिकोष्ठं यावत् गच्छति। यदि तत् कोष्ठं सुषुम्नायामस्ति तदा उपरि यान्तस्तन्तवः क्षोभं मस्तिष्कं यावत् प्रापयन्ति, अक्षिकर्णात् आयातास्तन्तवस्तेषां कोष्ठकानि च मस्तिष्कं साक्षात् क्षुब्धं कर्तुं शक्नुवन्ति। यदि क्षोभो लघुको भवेत् तदा चित्तोपरि प्रभावो न पतति परन्तु यदि बाह्य आघातस्तीव्रः स्यात्तदा मस्तिष्के उग्रः क्षोभो भविष्यति पुनश्चित्तोपरि प्रभावश्च पतिष्यति। आघातप्रापकाणां वस्तूनां मनसि संविद्रूपेण प्रवेशो भवति। संविदः प्रत्ययः सम्पत्स्यते ततो बुद्धिरध्यवसायं करिष्यति। अध्यवसायस्य फलस्वरूपेण यदि कश्चन संकल्पो भूतस्तदा स पुनर्मस्तिष्के क्षोभरूपेण प्रकटो भविष्यति। अथ च मस्तिष्कात् नाडिकोष्ठतन्तुद्वारा मांसपेशीः यावत् प्राप्स्यति। इत्थम् सुषुम्नां मस्तिष्कं च मेलयित्वा यद् नाडीसंस्थानमस्ति तद् बाह्यजगता सह सम्बन्धस्य साधनं भवति। तद्द्वारा बाह्य वस्तुनः क्रिया चित्तोपरि ज्ञानरूपेण, चित्तप्रतिक्रिया च बाह्यवस्तूपरि शरीरस्य चेष्टाविशेषरूपेण, भवन्ती अस्ति। यावत् पर्यन्तं नाडिसंस्थानं कर्म कुर्वदस्ति तावत् चित्तस्य विक्षिप्तताभावः स्वाभाविकोऽस्ति। या शक्तिर्नाडीषु धावति या च ताः परिचालयति सा प्राणपदेन कथ्यते। चित्तप्राणयोरन्योन्याश्रयोऽस्ति। द्वौ सहभावेन चञ्चलौ निश्चलौ च दृश्येते। योगी इमां वार्तां जानाति, अतः स चित्तं निश्चलं सम्पादयितुं प्राणं निश्चलं कर्तुमुपायं करोति। चित्तस्थैर्यापेक्षया प्राणस्थैर्यं सुकरमस्ति यतः प्राणस्य शरीरेण सह साक्षात् संबन्धोऽस्ति। प्राणनियन्त्रणकरणार्थं उपायः प्राणायामः कथ्यते। एवं तु कतिचन ईदृश्य औषधयः सन्ति यासामुपचारेण नाडिसंस्थानं निष्क्रियं सम्पादयितुं शक्यते परन्तु औषधयो नाडी रोगिणीः सम्पादयन्ति यद् योगिनोऽभीष्टं नास्ति। अथ च तासामयं प्रभावो भवति यत् चित्तं मूढावस्थां प्राप्तं भवति यद् योगपक्षेऽनुपयोज्यमस्ति। अतो योगी

अपरविधीनामाश्रयं गृह्णाति । प्राणायामाभ्यासेन अयं प्रथमं सुषुम्नाया नीचभागे, स्थितनाडीकोष्ठेभ्यस्तत्संबद्धनाडीतन्तुभ्यश्च प्राणाकर्षणे समर्थो भवति । एतस्येदं तात्पर्यमस्ति यत् नाडिसंस्थानस्यास्मिन् भागे योगस्याभ्यासकाले प्राणसञ्चारो न भवेत् अर्थात् शरीरस्य येन भागेन एते तन्तवः सम्बद्धाः सन्ति तत्रत्यः कश्चन विषयाघातो मस्तिष्कं क्षुब्धम्, एतद्द्वारेण चित्तं च विक्षिप्तं कर्तुं न शक्नुयात् । तावान् भागोऽभ्यासकालं यावत् शून्यो जडश्च जायते । शनैः शनैः सुषुम्नाया एकस्माद् भागादपरं भागं यावत् वर्धमानः अयं क्रमः मस्तिष्कं यावत् प्राप्नोति । इदमेव सुषुम्नानाडीतः प्राणस्य ब्रह्माण्डे आरोहणं कथ्यते । अभ्यासे दृढे सति बाह्यविषयाणां चित्तोपरि क्रिया चित्तस्य बाह्यविषयाणामुपरि प्रतिक्रिया चेत्येतद्द्वयं स्तम्भितुं शक्यते । प्राणस्य यथायथा नीचात् प्रदेशात् प्रवाहो रुध्यते तथा तथा सा सञ्चिता-शक्तिः-इन्द्रियाणां सेवायां लगति, इन्द्रियाणि स्वस्वविषयग्रहणाय अद्भुतं बलं प्राप्तं कुर्वन्ति अथ च विक्षेपकारिणामाघातेषु क्रमशः क्षामतायां यातेषु चित्ते एकतानताया आनयनं सुकरं भवति । तत् येषां विषयाणामुपरि स्थिरीभवति तदुपरि चिराय स्थैर्यं लभते । एवं युष्मत्पदवाच्याध्ययनम् तत्स्वरूपज्ञानंच अशेषं मर्मस्पर्शि च भवतः । यदा ऐन्द्रियनाडितन्तुषु कोष्ठेषु प्राणस्य गतेरवरोधो जायते अथ च तस्य सञ्चारो मस्तिष्कमात्रेऽवशिष्यते तदा चित्तस्य बाह्यजगता सह सम्बन्धविच्छेदो भवति । तत् आत्मनः संस्कारान् वासनाश्च विषयीकरोति । यथा यथा चित्तम् एषामुपरि उत्तिष्ठति तथा तथा अस्मत्स्वरूपस्य अधिकाधिकं विशदं च ज्ञानं जायते । एवं प्राणस्य नियमनं योगिनश्चित्तस्य नियमने सहायकं भवति । कस्यचिद् विशिष्टस्य तदभिज्ञस्य अध्यक्षत्वे प्राणायामस्याभ्यासः कर्तुं शक्यते, अन्यथा तेन कतिधा व्याधय उत्पन्ना भवेयुः अथ च कतिधा मानसविकाराणांच उत्पत्तेराशङ्का तिष्ठति ।

## ६ ष्ठं समाध्यधिकरणम्

योगिनो मुख्यं लक्ष्यं चित्तस्य संयतीकरणमस्ति । तस्य कस्मिंश्चिदेकस्मिन् विषये लगनं ततोऽटनानन्तरं पुनरपि तत्राकृष्य आनयनं च धारणा कथ्यते । धारणायां दृढायां सत्यां याऽवस्थाऽऽयाति सा ध्यानं कथ्यते । ध्यानं क्रमशः समाधिरूपेण परिणतं भवति । समाधौ चित्तं निश्चलप्रायं जायते । निश्चलताया एकं रूपं शून्यीभवनमस्ति । इदं पूर्वावस्था-मात्रमस्ति, परन्तु प्रभूताः साधका अत्रैव रुद्धा जायन्ते । यावत् समाहितचित्तस्य विषयः स्थूलस्तिष्ठति अर्थात् यावत् विश्वस्य इन्द्रियग्राह्यांशस्य स्वरूपं ज्ञेयं तिष्ठति तावत् समाधिं वितर्कसमाधिं कथयन्ति । यदा स्वयम् इन्द्रियाणि चित्तस्य प्रत्ययः संस्कारश्च विषयो भवितु-

मारभते तदा विचार समाधेरारम्भो भवति। ईदृशोऽपि समय आयाति यदा ह्यात्मानम् अन्येभ्यो बाह्यान्तरविषयेभ्यः पृथक्कृत्य आत्मस्वरूपम् , अस्मदा वाच्यम् अन्तस्तमं, च विषयी करोति। तस्या अवस्थाया अपि पारं गत्वा यस्यां दशायां युष्मदस्मदात्मक विश्वस्य सकलं रहस्यम् उद्घटितं भवति, यस्यामवस्थायां विश्वस्वरूपस्य सम्पूर्णः साक्षात्कारो जायते, या ज्ञानस्य पराकाष्ठाभूमिरस्ति स समाधिः असम्प्रज्ञातसमाधिः कथ्यते।

समाधिः हासखेला नास्ति। यच्चित्तं विक्षिप्तमासीत् तदेव समाहितं कृतं भवति। तत् सहसा आत्मनः पुराणस्य कलेवरस्य त्यागं कर्तुं न शक्नोति। वासनाः स्मृतयः, पुराणविकल्पा अध्यासश्च तत्र सम्भृताः सन्ति। तैरवच्छिन्नं भूत्वैव तत् नवानां विषयाणां ग्रहणं करोति। अतो यज्ज्ञानं जायते तत् शुद्धं नहि भवितुमर्हति। उद्योगमनन्तरा केवलम् आसीनतयैव अनुभूतेर्दोषा नहि म्रियन्ते। योगाभ्यासः शैलूषकृत्यं नास्ति। योगी तदेव कर्म नियमितरूपेण कर्तुं वाञ्छति यत् स्वस्वव्यवसायेषु कविः, वैज्ञानिकः, व्यापारी चेति सर्वे स्तोकं स्तोकं कुर्वन्ति। अतो वितर्कसमाधिः साधारण ज्ञानात् किञ्चिदेव शुद्धो भवति। विचारसमाधिस्ततोऽधिकं शुद्धो भवति। यथा यथा अन्तःकरणस्य पुराणाः संस्कारा दमिता भवन्ति, यथा यथा तत् अन्तःकरणम् स्वभावशून्यमिव भवदस्ति तथा तथा वस्तुस्वरूपस्य अधिकमधिकं बोधकं जायते। एतल्लाभदृष्ट्या योगाचार्याः वितर्कस्य सवितर्कनिर्वितर्कौ, विचारस्य च सविचारनिर्विचारौ, भेदद्वयं कृतवन्तः। यदि साधकः स्वयं सावधानो न स्यात्, यदि तस्य देशिकः सावधानो न भवेत् अपि च अभ्यासस्यारम्भकाले सततं मननं स्वाध्यायश्च न कृते स्याताम्, तदा योगिनः कृतेवितर्कसमाधेपरि उत्थानं असम्भवं भविष्यति। अथ च स आत्मनो नवान् अनुभवान्, येषां मात्रा अतिस्तोका स्यात , पुराणानां संस्काराणां गर्भे पातयित्वा सत्यस्य विकृतं रूपं सम्पादयेत्।

समाधिरतीन्द्रियप्रत्यक्षस्य परमावधिरस्ति। समाधिजं ज्ञानं कस्यापि प्रमाणान्तरस्य अनुमानस्य, शब्दस्य तर्कस्य वा अपेक्षां न करोति। तत् स्वयं प्रमाणान्तराणां तर्कस्य च निकषोऽस्ति। अन्येभ्यः सर्वेभ्यः साधनेभ्यः प्राप्तस्य ज्ञानस्य तस्मिन्नन्तर्भावो भवति। तस्य प्रकाशे सर्वेषां ज्ञानांशानां परस्पर सम्बन्धः स्पष्टो जायते अथ च एतानि मेलयित्वा विश्वस्वरूपस्य सम्बोधे यास्त्रुटयः अवशिष्टा भवन्त्य आसन् ता दूरीभवन्ति। अतर्क्याणां निःशेषं प्रत्यक्षं जायते। अतीतमनागतंच सीमितं भूत्वा वर्तम नबिन्दूपरि आयाते भवतः।

वस्तुतो यावत् प्रत्यक्षं न भवति परं बुद्ध्या श्रमः करणीय आपद्यते तावदेव प्रश्ना-

स्तिष्ठन्ति समस्याश्च। किञ्चित्प्रत्यक्षीकृतेषु केषुचिद्वस्तुषु तेषां मध्ये चित्तम् आत्मपक्षतः सम्बन्धनिर्माणं करोति। पूर्णप्रत्यक्षाभावे तर्ककरणमापद्यते। तावत्पर्यन्तं संशयादेः स्थानमवशिष्यते। साक्षात्कारे जाते संशयस्य क्षयो जायते, शङ्कायाः कृते स्थलमेव नावशिष्टं भवति, समस्यानां लोपो जायते।

इदं ज्ञानं स्वसंवेद्यमस्ति। एतस्य भाषाद्वारा पूर्णरूपेण व्यक्तीकरणमसम्भवमस्ति। परन्तु यज्ज्ञानं केवलम् ऐन्द्रियानुभवतः तर्काच्च प्राप्येते अथ च भाषाद्वाराव्यक्तं कर्तुं शक्यते तज्ज्ञानमपूर्णं भवति। यो हि दर्शनस्य सत्यो विद्यार्थी सत्यस्य सत्यो गवेषकोऽस्ति तस्य कृते निदिध्यासनमन्तरा उपायान्तरं नास्ति। यो योगी नास्ति स दार्शनिकज्ञानविषये आप्तो मतो न भवितुं शक्नोति। अज्ञाननिवृत्तिः स्वयं तु आनन्दस्वरूपाऽस्त्येव, ज्ञानोपलब्धेरयं राजमार्गः कठिनः सन्नपि आनन्दमयोऽस्ति।

शक्तिर्ज्ञानस्य रूपान्तरमस्ति। यथा यथा योगिनो ज्ञानं वर्धते तथा तथा तस्य शक्तिरपि वर्धते। धर्मस्यान्वेषणं मोक्षदिशिमनयत्। योगी धर्मं परिचिनोति अथ च तस्याचरणे समर्थो भवति। तस्य वाङ्मनसाभ्यां शरीराच्च धर्मस्य स्वाभाविकी धारा निःसरति, अतस्तस्य संसर्गो लोकस्य कृते सततं कल्याणकारी वर्तते।

---

# सप्तमोऽध्यायः

## दिक्कालौ

### १ मं सत्कार्याधिकरणम्

विश्वस्य नामकरणं येन जगदिति कृतं तेन गम्भीरबुद्धिमत्तायाः परिचयो दत्तः। अर्थतो जगत् चलनशीलं गतिशीलंच। साधारणतो गतेस्तात्पर्यमस्ति एकस्मात् स्थानात् स्थानान्तरगमनम्। परन्तु जगतो विषये इयं मीमांसा न भवितुं शक्नोति। समुचितं जगत् स्थानपरिवर्तनं कर्तुं न शक्नोति यतो हि यावन्ति स्थानानि सन्ति सर्वाणि तदन्तः सन्ति। निखिलं जगद् आत्मनोऽभ्यन्तरे चलितुं न शक्नोति, तद्बहिर्गमनाय किञ्चित् स्थानं नास्ति। परन्तु जगत् कदाचिदपि स्थिरं न तिष्ठति। तस्मिन् तस्यापरस्य प्रकारस्य गतिरस्ति यः परिणामः कथ्यते। तस्य दृश्यं रूपं सततं परिवर्तितं बोभूयते। यः पदार्थः परिणतो भवन्नस्ति स धर्मी उच्यते अथ च तस्य विभिन्नानि रूपाणि तस्य विभिन्ना अवस्थाः कथ्यन्ते। कुण्डलं, कटकः, अङ्गुलीयकं, पदकं, कटोदरी, पात्रीत्यादयोऽवस्थाः सन्ति, सुवर्णं धर्मी वर्तते। विश्वस्य स्वरूपं धर्मिपदेनोच्यते यद् दार्शनिकोऽन्विष्यति। विश्वस्य येषां येषां रूपाणामस्माकं प्रतीतिर्भवति तानि सर्वाणि तस्य विभिन्ना विभिन्ना अवस्थाः सन्ति। अवस्था धर्मी च परस्परं पृथक् कर्तुं न शक्येते। सर्वा अवस्थास्तस्यैकस्य धर्मिणः सन्ति अतः काचिदेका-ऽवस्था तस्य स्वरूपं न मन्येत। सर्वावस्थानां यस्य प्रत्यक्षं भवेत् स एव कथयितुं शक्नुयात् यदहं धर्मिणं जानामि। इदमस्माकमन्तःकरणस्य तस्योपकरणानां च निर्मितेः परिणामोऽस्ति यदस्माकं धर्मिपरिचयो युगपद्भूत्वा उत्तरोत्तरं जायते। या अवस्था प्रथमं गता तां केवल

कारणं या चोपरि आगमिष्यति तां च कार्यं कथयन्ति। यदा कदा एवं प्रयोगमकृत्वा धर्मिणं कारणम् तस्य सर्वामवस्थां च कार्यं कथयन्ति। केचन लोका एवं मन्यन्ते यत् सुवर्णं कारणं कुण्डलादीनिच तस्य कार्याणि सन्ति। यदि सुवर्णं गालयित्वा प्रथमं कुण्डलं सम्पादितं पुनस्तत् गालयित्वा कटकः पुनरपि कटोदरी तर्हि इदं मतं स्यात् यत् सुवर्णस्य पिण्डरूपं कार्यं नष्टं कुण्डलरूपं चोत्पन्नं पुनरपि कुण्डलस्य विनाशोऽभूत् अङ्गुलीयकस्य चोत्पत्तिः। एवमुत्पादविनाशयोः क्रमश्चलितो भवति। सुवर्णनामकस्य द्रव्यस्यात्मनः केचन विशेषा गुणाः सन्ति ये एषु कार्येषु अनुस्यूता वरीवृत्यन्ते। अस्मिन् मते स्वीकृते कियन्ति काठिन्यानि आपतन्ति। यद्येवं मन्येत यत् अपरिणामिद्रव्यरूपात् कारणात् कार्याणि उत्पन्नानि नष्टानि च भवन्ति तदा इदमपि मतमापद्येत यत् आत्मन उत्पत्तेः प्रथमं कार्यस्य अनस्तित्वम् अभावश्चासीत्। तद् अभावात् भावोत्पत्तिः। दुग्धनामके द्रव्ये दधिनामकस्य कार्यस्य सुवर्णनामकद्रव्ये कुण्डलनामकस्य कार्यस्य प्रागभाव आसीत्। यदा असत सञ्जायते तदा पुनः कदाचित् ईदृशमपि भवेत् यद् दुग्धमध्यात् कुण्डलं सुवर्णमध्याद् दधि च जायताम्। परमीदृशं न भवति। दुग्धादेव दधि जायते अतः ईदृशं मननमापतिष्यति यत् केनचिद्रूपेण दुग्धे दधि प्रथमत एवासीत्। अनया रीत्या स्वर्णे कुण्डलं, कटकं, कटोदरीत्यादि सर्वं चिदासीत्। कार्यस्याभावो नासीत् तद् असन्नासीत् कारणे बीजरूपेणैवासित्, सदासीत्। अतः स्थिरगुणककारणद्रव्यसंबन्धिकार्योत्पादविनाशयोः कल्पनाकरणापेक्षया इदं मननमधिकं युक्तिसङ्गतं प्रतीतं भवति यद् धर्मी परिणामशीलोऽस्ति, तस्मिन् सर्वा अवस्था बीजरूपेण विद्यमानाः सन्ति, परन्तु तासां क्रमागतसाक्षात्कारो भवति अथ च प्रत्येकम् अवस्थायाः परिचायकलक्षणानि गुणा वा पृथग् भवन्ति। यत् कार्याणाम् विनाश उत्पत्तिश्च कथ्यते तद् वस्तुत एकस्या अवस्थायाः प्रत्यक्षस्य शान्तता अपरस्याप्रत्यक्षस्योदयोऽस्ति। यथा समुद्रे एकस्तरङ्गोऽवतिष्ठते अपरश्चोत्तिष्ठति तथैव चित्ते वृत्तीनां तिरोभावाविर्भावौ बोभूयेते। अवस्थानां क्रमिकाभिव्यक्तिर्विकासपदेनापि कथयितुं शक्यते।

## २ यं निमित्ताधिकरणम्

अधस्तादधिकरणे वयं यादृशस्य कारणस्य सम्बन्धे विचारं कुर्वन्त आस्म तद् उपादानकारणं कथ्यते। उपादानं तत् कारणमस्ति यतो यत्र वा कार्यस्योत्पत्तिर्दृश्यते। यथा दध्न उपादानकारणं दुग्धम्, कुण्डलस्य स्वर्णम्, घटस्य मृत्तिकास्ति। परन्तु एकलेनोपादानकारणेन कर्म नहि प्रचलति। यत् किञ्चिन्नु किञ्चिदीदृशबाह्यं वस्त्वपेक्ष्यते यद् उपादान-

मध्यतः कार्य्यमुत्पादयेत् , उत्पत्तौ सहायतां वा दद्यात् । कुण्डलं तदा सम्पद्यते यदा स्वर्णकारः स्वर्णं घट्टयति, कुम्भकारं विना घटो न सम्पद्यते । ईदृशमुत्पत्तिसाधकं वस्तु निमित्तकारणं कथ्यते । अस्माभिरेतद्दर्शितमस्ति यत् यत् उपादानकारणं कथ्यते तन्मध्यात् असत्कार्यस्य, ईदृशस्य कार्यस्य यत् प्रथमतः तस्मिन् विद्यमानं नासीत् , उत्पत्तिर्भवितुं न शक्नोति । एवम् इदमपि सरलतया सम्बोधे आयायात् यत् यन्निमित्तकारणं कथ्यते तदपि असत्कार्यम् उत्पन्नं कर्तुं न शक्नुयात् अन्यथा गोपालः स्वर्णमध्याद् दधि स्वर्णकारश्च दुग्धमध्यात् कुण्डलं सम्पादयिष्यति । परमेवं न भवति । अत इदं स्पष्टमस्ति यद् वयं व्यवहारविषये कारणशब्दस्य सुविधायै बाढं प्रयोगं कुर्याम् , परन्तु प्रथमतो यन्नास्ति तस्य कार्यरूपेणोत्पत्तिर्नहि भवितुं शक्नुयात् । उपादानं तद्धर्म्यस्ति यस्मिन् सर्वे धर्मा विद्यमाना भवन्ति । यदा ते प्रकटा भवन्ति तदा वयं तत् कार्यं बाबधामहे । निमित्तं स्वयं किञ्चित् प्रागभावयुक्तं वस्तु उत्पन्नं न करोति; तत् धर्मिण एकस्माद् धर्माद् अपरस्मिन् धर्मे परिणतत्वभावे सहायतां ददाति । तद् ईदृशीं परिस्थितिम् एकत्र करोति यस्यां वाञ्छितधर्म परिणामो भवितुं शक्नुयात् । मृत्तिकायां घटः कटोदरी, दीपः, भाण्डिका, खर्परः, सर्वाणि बीजरूपेण सन्ति । कुम्भकाररूपं निमित्तं कारणं तेषाम् एतन्मध्यात् कस्मिंश्चिदेकस्मिन् धर्मे अथवा पर्यायेणानेकेषु धर्मेषु वा परिणतौ सहायतां ददाति । यदि स न भवेत् तदापि मृत्तिका परिणता भवेदेव । वायुः, वृष्टिः, आतपः निमित्तं सम्पद्यतां खर्परलोष्टकर्दमधूलिप्रभृतिधर्मेषु, ये सर्वे तस्यां प्रथमतः विद्यमानाः सन्ति, परिणतां सम्पादयेयुः । अविद्यमानधर्मोत्पत्तिसामर्थ्यं निमित्ते न भवति । पवनपानीये स्वर्णं कर्दमं कर्त्तुं न शक्नुयाताम् । निमित्तस्य तदेव कर्म यत् कृषकः क्षेत्रसेचनसमये करोति । जलमुच्चात् नीचैर्भूमेर्दिशं वहति । अयं तस्य आत्मनः स्वभावोऽस्ति । कृषाण इतस्ततो केदारकं कृत्वा तद् आत्मेष्टदिशायां नयति, परन्तु तत्प्रतिकूलदिशायां नहि नेतुं शक्नुयात् । यदि पानीयमुच्चैरासीत्तदा यस्यां कस्यांचिन्नीचैर्दिशायां वहेत् । तासु सर्वासु दिक्षु वहनं तदभ्यन्तरे निहितमासीत् । कृषक एतन्मध्यात् कस्यांचिदेकस्यां दिशायां वहने सहायकोऽभवत् ।

## ३ यं दिगधिकरणम्

प्रत्येकं धर्मपरिणामो दृग्विषयः, एका घटनाऽस्ति । अधिकांशा घटनाः कस्मिन्नु कस्मिन् 'स्थाने' भवन्ति । परीक्षणात् प्रतीतं भवति यत् इन्द्रियग्राह्यधर्मिणां सर्वेषां धर्माणामिदं लक्षणमस्ति यत् ते स्थानम् आवृण्वन्ति । ईदृशान्यपि स्थानानि सन्ति यत्र कापि घटना न घटते, यानि रिक्तानि सन्ति । परन्तु अस्माकमीदृशो विश्वासोऽस्ति यत् तत्र

काचित् घटना घटितुं शक्नुयात् । घटना मा भून्नाम परन्तु घटनस्य सम्भावना स्थानमात्रेऽस्ति । स्थानानां समुच्चय आकाशो दिग् वा कथ्यते दिक् साऽस्ति या घटनानाम् अर्थाद् इन्द्रियग्राह्यविषयाणामवकाशं ददाति, यस्याम् एषां सर्वे धर्मपरिणामाः भवन्ति । ईदृशाः सर्वे दृग्विषया दिशि भवन्ति, अतः एषु सम्बन्धाः प्रतीयन्ते । ते सम्बन्धा वस्तूनाम् अर्थात् धर्मविशेषयुक्तानां धर्मिणां नहि प्रत्युत् दिशो धर्मा लक्षणं च सन्ति । यदि वयं दश विंशतिर्वा वस्तूनि एकस्मिन् दोरके लम्बयामः तदा तानि परस्परं संबद्धानि दृश्येरन् परं स सम्बन्धस्तेषां सहजस्वभावात् कारणान्नास्ति । तस्य हेतुः रज्जौ अस्ति । किञ्चित् कस्यचिद् दक्षिणे, वामे, उपरि नीचैर्वा भवेत् । दोरकगत्यनुसारं तेषु गतिर्भवेत् , एकमपरस्य दिशम् आकृष्टं भवदिव प्रतीतं भविष्यति एकं द्वितीयस्य दिक्तः प्रतिक्षिप्तं भवद् दृश्येत । यदि दोरस्य तस्य अंशानां च गतिः कस्यचिद् विशेषस्य तालस्य अनुसारं भवति, तदा तदुपरि लम्बमानवस्तूनां गतावपि स ता लोऽनुगतो भविष्यति । अयं दृष्टान्तो दिशः तत्रस्थवस्तूनां चानुषङ्गस्य निदर्शनं भवेत् । वस्तूनि सर्वाणि दिशि सन्ति अतः संबद्धानि सन्ति । एतत् कथनस्य नेदं तात्पर्यमस्ति यत् रासायनिकसङ्घटन विघटन प्रभृति क्रियाणां कारणता दिशि अवस्थिताऽस्ति । परन्तु भौतिकपिण्डानामितरेतराकर्षणं तथा वस्तूनां तानि लक्षणानि येषामध्ययनम् रेखागणितस्य तथा तन्मूलकापरगणिताङ्गेषु जायते सम्भवतो दिग्हेतुकानि सन्ति । एतेन सार्धम् इदमपि न विस्मर्तव्यम् यत् लम्बमानवस्तूनां दोरकस्य गतिविवेवितानस्य आकृतेश्चोपरि प्रभावः पतति । इत्थं दिग्वर्तिपिण्डा दिक्ष्वपि परिवर्तनमुत्पन्नं कर्तुं शक्नुवन्ति । वस्तुयुक्ताकाशस्य वस्तुशून्याकाशस्य च लक्षणेषु भेदभावः स्वाभाविकः प्रतीतो भवति । रेखागणितं दिशः शास्त्रं कथयितुं शक्यते ।

दिशासु अस्माकं तिसृणां दिशां प्रतीतिर्भवति । समतले समकोणोपरि परस्परं कर्तनशीले द्वे दिशे स्तः अथ तृतीया एनयोर्द्वयोः समकोणोपरि ( समकोण एव एते द्वे ) कृन्तति । भौगोलिकशब्दैरिमाः पूर्वपश्चिमे उत्तरदक्षिणे ऊर्ध्वाधश्च कथयितुं शक्यन्ते । परन्तु दिशा वास्तविक्यो न सन्ति परं बुद्धिनिर्मिताः । अस्माकं वस्तूनां प्रत्यक्षं भवति । वयं तल्लक्षणेषु दैर्घ्यं, विस्तारम् , उच्चतां च प्राप्नुमः । अतो बुद्धेर्दिशि तिस्रो दिशः प्रतीता भवन्ति । दैर्घ्यविस्तारोच्चतानां परिचयः तदुपरि अङ्गुलिचालनेन अथवा तद्दर्शनार्थं शिरश्चालनेन वाऽस्माकं भवति । पादाभ्यां चलनेनापि अस्माकं तिस्रो दिशो मिलन्ति । यद्यस्मासु चलनं गतिर्वा न भवेत्तदा दिशां प्रतीतिर्न भवेत् । चलनं शरीरनिर्माणस्य परिणामोऽस्ति । अस्माकं शरीराणां विकासोऽनया रीत्याऽभूद् यत् तानि तिसृषु दिशासु चलितुं शक्नुवन्ति अतस्तत

आगतानामनुभवानामाधारोपरि बुद्धेस्तिसृणां दिशां प्रतीतिर्भवति । यादृशो विकासः शरीरस्य भवति तदनुरूप एव चित्तस्य विकासो भवति, अन्यथा चित्तशरीरयोरसामञ्जस्यञ्च स्यात्। अस्यां दशायां प्राणिनो जीवनं, यत् चित्त देहयोर्योगस्य हेतुः परिणामश्चास्ति, असम्भवं भवेत्। परन्तु यदि कस्यचित् प्राणिनः शरीरस्य सम्पन्नता ईदृशी भवेत् यत् स द्वयोर्दिशोरेव चलितुं शक्नुयात् तदा तत्कृते द्वे एव दिशे भविष्यतः । यदि किञ्चिद् वस्तु अस्माकं तद्दिशायां चलेत्, यस्यां तस्य प्राणिनः शरीरं चलितुं न शक्नुयात्, तदा तत्कृते तद् वस्तु अन्तर्हितं भविष्यति। इत्थं कस्यचित् कृते दिक्षु एकैव दिग् भवितुं शक्नुयात् । एतेन वयम् एतं तर्कं कर्त्तुं शक्नुमः यत् दिक्षु चतसृणां ततोऽधिकानां वा दिशां प्रतीतेः सम्भवोऽस्ति । अयं पृथक् प्रश्नोऽस्ति यत् त्रितः प्राणिनाम् ततोऽधिकानां वा दिशां गतियुक्ताः प्राणिनः सन्ति न वा। यदि सन्ति तदा तेषामनुभूतयोऽस्मत्तो भिन्नप्रकारिकाः स्युः । वस्तुतः दिक् एका अखण्डा चास्ति । इयं सर्वव्यापिका अर्थात् सर्वेषु इन्द्रियग्राह्यविषयेषु ओतप्रोताऽस्ति, तेषामभ्यन्तरे बहिश्च व्याप्ताऽस्ति । अस्माकं शरीराद् बहिरस्ति, शरीरस्य एकैकपरमाणोरभ्यन्तरे बहिश्चास्ति। सर्वाणि वस्तूनि तस्याम् सा च सर्वेषु वस्तुषु विद्यते । वयं तस्याः स्वरूपस्य सम्यग्ग्रहणं कर्तुं नहि पारयामः । यद् आंशिकं ग्रहणं भवति तदनुसारं दिशानां कल्पनां कुर्मः ।

दिग्गतोऽनुभवः स्वभावतः सापेक्षोऽस्ति । स्थानपरिवर्तनं दक्षिणवामयोः उपरिनीचयोश्च परिवर्तनं करोति । दक्षिणवामे ऊर्ध्वनीचेच परिवर्तयति । दिशि स्वतः कश्चन स्थिरो बिन्दुर्नास्ति । कंचन बिन्दुं स्थिरं मत्वैवापरेषां बिन्दूनां दिशानां निर्देशः कर्तुं शक्यते। इत्थं शुद्धगतिरपि कस्यचित् स्थिरस्य निश्चलस्य बिन्दोरपेक्षयैव मापयितुं शक्यते । परन्तु वयं यस्याः पृथिव्या उपरि स्मः सा चलाऽस्ति । तया सह वयमपि चलामः । चलबिन्दुतो यो गतेर्मापो भविष्यति स सापेक्षो भविष्यति ।

आकाशेऽसंख्यानि नक्षत्राणि अपरे च पिण्डाः स्थितानि सन्ति । आकाशस्य यथावत्स्वरूपज्ञानाभावात् एषां गतिविधि सम्बन्धे कतिविधानां सिद्धान्तानां निर्माणं कर्तुम् आपद्यते । एते सिद्धान्ता दृग्विषयान् , वस्तूनां प्रतीयमानसम्बन्धान् , गतीश्च यावत्पर्यन्तं दर्शयितुं समर्था भवन्ति तावत्पर्यन्तं गणितशास्त्रम् एतानुपयुङ्क्ते, यद्यपि बुद्धौ एतदाधारोपरि विश्वस्य स्पष्टं चित्रं नहि संपन्नं भवितुं पारयति । गणितस्येमानि सूत्राणि सम्बन्धानां प्रतीकमात्राणि सन्ति । एतानि दिशो लक्षणानां सांकेतिकानि चिह्नानि सम्बोध्यानि । किमपि लक्षणं भवतु तद् धर्मिणः स्वरूपं सम्पूर्णं वर्णयितुं न शक्नोति । अत्र काठिन्यमेतदापतति यत् परोक्षदिग्विषयाणाम् अनुमितसत्ताधारोपरि तत्संबन्धानामनुमितसत्तां संकेतद्वारा व्यक्तां

कर्तुं गणितज्ञः प्रयत्नं करोति। एते सङ्केता दिशोविषये प्रमासाधनकोटिं यावत् नहि प्रोच्छेयुः। वयमेतत् कथितवन्तः स्मः यत् विश्वस्य स एवांशो दिशि विद्यते यो हि इन्द्रियग्राह्योऽस्ति। योंऽशः कस्यापीन्द्रियस्य विषयो नास्ति स दिशो बहिरस्ति। अस्मद्वाच्यस्य प्रतीतिर्दिशि न भवति। संवित्, प्रत्ययः, विचारः, स्मृतिः, संकल्पश्च स्थानं नावृण्वन्ति। अन्तःकरणक्षेत्रे वयं दिशो अतिक्रमणं कुर्मः।

# ४थं कालाधिकरणम्

याटृशमस्माभिरधस्तादधिकरणे दृष्टमस्ति, विश्वस्य धर्मान्तरपरिणामस्यैकोंऽश ईदृशोऽस्ति यो हि दिशः परिधेर्बहिर्विद्यते परन्तु सकलः परिणामः कालावच्छिन्नो भवति। योऽपि परिणामो भवति स कालसीमाभ्यन्तरे भवति। दिक्कालयोः स्वरूपे भेदोऽस्ति। दिशः सत्ताया अनुभूतिः चित्ताभ्यन्तरे न भवति परन्तु कालस्यानुभूतिश्चित्ताभ्यन्तरेऽपि भवति। चित्तस्य सर्वे परिणामाः सहैव न भवन्ति। परिणामः कीदृशोऽपि भवतु प्रमा भवतु, मिथ्याज्ञानं वा स्मृतिर्भवतु संकल्पो वा, परन्तु एकस्मिन् परिणामे गते सति अपरस्य साक्षात्कारो भवति। कदापि ततिर्न त्रुट्यति परन्तु एकस्य परिणामस्य क्षये जात एवापरस्योदयो भवति। ज्ञातुः आत्मनिश्चितस्य परिणामानां यज्ज्ञानं भवति तस्यैव नाम कालोऽस्ति। परिणामानां नैरन्तर्यं कालप्रवाहस्य हेतुरस्ति। यदि प्रभूता विजातीयाः परिणामाः परस्परमधश्चोर्ध्वं चागच्छन्ति तदाऽस्माकं कालप्रवाहे वेगस्यानुभवो भवति। यदा एकविधानामेव परिणामानां परम्पराऽऽयाति तदा प्रवाहस्य गतिः क्षामा भवति। सुषुप्तौ कालप्रवाहो रुद्ध इव जायते। परिणामानां क्षयोदयाभ्यां तद्विषयकज्ञानस्यापि क्षयोदयौ भवतः। ज्ञानस्यैतादृशतिरोभाव प्रादुर्भावक्रमेण काले अतीतवर्तमानानागतविभागो भवति। चित्ते यो विकारः सकृद् जातः स पुनः प्रत्यावर्तितं न शक्नोति। तस्य स्मृतिर्भवेद् तत्सदृशो विकारो वा भवेत् परन्तु तस्यैव विकारस्य पुनर्भवनस्यार्थो भविष्यति, तत्पश्चात् चित्ते या संवित् प्रत्ययादयश्चोत्थितास्तेषां सर्वेषां संस्काराणां विलयः। परन्तु एतदसम्भवं। अतः कालस्य धारा परिवर्तयितुं न शक्यते, अतीतं पुनः वर्तमानं संपादयितुं न शक्यते। असम्प्रज्ञातसमाधौ विश्वस्य सपूर्ण स्वरूपस्य ज्ञानं भवति। तस्यामवस्थायां परिणामक्रमाभावात् वयं कालातिक्रमणं कुर्मः।

अहं कथितवानस्मि यत् चित्तस्य परिणामानां ज्ञानस्य नाम कालोऽस्ति। चित्तस्य संविदादयः परिणामाः बाह्यवस्तूनां धर्मपरिणामानाम् अनुगता भवन्ति। तत इन्द्रियग्राह्यविषयेषु परिणामो भवति इतः सहैव चित्ते परिणामो भवति। एतच्चित्तपरिणामज्ञानं वास्त-

विकः कालोऽस्ति। अतो बाह्यवस्तूनां धर्मपरिणामानाम् अर्थात् दृग्विषयाणां घटनानां च प्रतीतिः काले भवति।

दिग् दृश्यस्याङ्गमस्ति, अतः सर्वेषां सदृशचित्तानां कृते तत्सत्ता सदृशी भवति। सर्वेषां तस्य समाना प्रतीतिर्भवति। अतः कंचनैकं विन्दुं स्थिरं मत्वा तदाश्रयेण अन्यविन्दूनां तत्रस्थवस्तूनां च दिङ् निर्देशकरणं ससम्भवमस्ति। परन्तु सर्वेषां चित्तं पृथगस्ति, अथ च द्वयोर्व्यक्त्योर्ज्ञानधारे नहि मिलतः। अतः एकस्य कालोऽपरकालाद् भिन्नोऽस्ति। अस्य परिणामोऽयं भविष्यति यद् घटनासम्बन्धिकालनिर्देशो द्रष्टृसापेक्षत्वात् असम्भवो भविष्यति। परन्तु केवलं दिङ्निर्देशो घटनां परिचेतुं पर्याप्तो न स्यात्। 'क्व, इत्यनेन सह' कदा, इत्यपि वदनीयम्। एतत्काठिन्यस्य दूरीकरणाय मनुष्यबुद्धिः एकस्य कृत्रिमस्य कालस्य निर्माणं कृतवत्यस्ति। वयं चन्द्रसूर्यौ चलन्तौ पश्यामः। इदं चलनम् आकाशे भवति सर्वेषाम् मनुष्याणां काले च भवति। इदं चाभ्युपगतं विद्यते यत् कालस्य मात्राणाम् अनुपातः दूरताया अनुपाते भवति। ३० ° यद्वा ६० क्रोशं चलने १० ° वा २०क्रोशं चलनस्य द्विगुण, कालो लगति। इदं ग्रहणमस्माकं कल्पनाऽस्ति यतो हि वास्तविके काले काऽपि ईदृशी मात्रा न भवति या मापिता तुलिता वा जायेत। कदाचित् प्रवाहस्य गतिद्रुता, कदाचित् मन्देव लगति परन्तु इमा अनुभूतयो गणनाया विषयीभूताः संपादयितुं न शक्यन्ते। अस्तु कस्यापि वस्तुनश्चलनं कालस्य प्रतीकं मानितं जायते। आत्मनः सुविधाया अनुसारं वयं कस्या अपि ताराया ग्रहस्य उपग्रहस्य वा घटिकायाः, सूच्याः, सूर्यस्य छायाया वा गतेरुपयोगं कुर्मः। यदि क, ख नामक घटनाद्वयस्य अनुभूतिकालानां मध्ये घटिकायाः सूची १ चिह्नात् २ चिह्नं यावत् गता अथ च ग, घ नामक घटनाद्वयस्य अनुभूतीनां मध्ये १ इतः ५ चिह्नं यावद् गता तदा इदं कथितं जायेत यत् पश्चिमस्य घटनाद्वयस्य मध्ये कालः प्रथमद्वयापेक्षया चतुर्गुणोऽस्ति यतो १ चिह्नात् ५ चिह्नं यावत् दूरता १ चिन्हात् २ चिह्नं यावत् दूरतायाश्चतुर्गुणाऽस्ति। एवं लम्बता कालस्य प्रतीकभूता मानिता जाताऽस्ति। लम्बता दिशि भवति अतः अयं कृत्रिमः कालो योहि सार्वजनिकव्यवहारे आयाति वस्तुतो दिशि कालस्य प्रतिच्छाया प्रतिक्षेपो वास्ति। वयं कालनामतो दिश उपयोगं कुर्मः।

कालमापकदिग्वर्त्तिवस्तूनां गतिः एकाकारा संपादयितुं शक्येत। अतस्तस्याः तुल्यानि क्षुद्राणि त्रुटितकानि कर्तुं शक्यन्ते। कला, काष्ठा, मिनिटः, सेकण्डः एवं त्रुटित-

कानि सन्ति। एतानि सर्वस्य कृते सदृशानि सन्ति। परन्तु वास्तविककालस्य प्रवाह एकाकारो न भवति। कालः शीघ्रं धावति, कदाचिच्च पर्वतनिभो जायते। अतो वयं केषुचित् पलेषु स्वप्ने ईदृशीनां घटनानामनुभवं कुर्मः यत्कृते जाग्रदवस्थायां बहूनां घटीनामावश्यकता भविष्यति। यदि अस्य कालस्य सर्वतः क्षुद्रं त्रुटितकं क्षणं कथयामः तर्हि नहि सर्वासां व्यक्तीनां क्षणाः समाः भविष्यन्ति नापि एकस्या एव व्यक्तेः सर्वे क्षणाः समाः स्युः। वास्तविककालस्तु सापेक्ष एवास्ति, कृत्रिमो व्यावहारिकोऽपि कालः सापेक्षोऽस्ति। य एकस्य भूतकालोऽस्ति स एवापरस्य वर्तमानस्तृतीयस्य च भविष्यन्नस्ति। घटनास्थलदिशि गच्छतः घटनास्थलदिक्तोऽपसरतश्च कृते कालक्रमः सदृशो भवितुं न शक्नोति। अङ्कगणितं तथा तन्मूलकं अपराणि वा गणिताङ्गानि व्यावहारिककालविषयकाणि शास्त्राणि सन्ति।

---

# ज्ञानखण्डम्

## प्रथमोऽध्यायः

### विकल्पजालम्

वयं प्रथमखण्डस्य द्वितीयेऽध्याये कथितवन्तः स्मः यत् निराधारशब्दमूलकोऽज्ञानाभासो विकल्पः कथ्यते। गर्दभस्य शृंङ्गं न भवति परन्तु गर्दभशृङ्गम्, इति पदश्रवणानन्तरं यत् एकप्रकारकं ज्ञानं भवति तदेव विकल्पोऽस्ति। शशशृंङ्गम्, बन्ध्यापुत्रः,खपुष्पम्, इत्यादीनि अपराण्यपि कतिचनोदाहरणानि दातुं शक्यन्ते। एतानि सर्वाणि प्रभूतमेव स्थूलानि उदाहरणानि सन्ति। एतत्प्रकारकाज्ञानात् परित्राणं प्रभूतं कठिनं भवितुं न युज्यते। यत् किञ्चिदपि भवतु, ईदृशमज्ञानं कदाचित् कस्यचिदेव भवति। परन्तु विकल्पस्य इतिश्रीः एतावता न भवति। तस्य विस्तृतिः प्रभूतं बृहत्यस्ति अपरं च ततः सर्वथा परित्राणाय प्रभूतायाः सावधानताया आवश्यकता भवति। अस्य विषयस्य विस्तृतं विवेचनमस्माकं कृतेऽप्रासङ्गिकमस्ति। परन्तु किञ्चिन्मुख्यभेदानां दिशि ध्यानमाकृष्टं कर्तुमावश्यकं प्रतीयते। एतदुपरि विचारकरणेन अग्रिमाध्यायस्य सम्बोधे सहायता मेलिष्यति।

### १ मं अभिसिद्धान्ताधिकरणम्

मनुष्यो निरन्तरं दृग्विषयाणांमध्ये वर्तते। प्रत्येकम् आभ्यन्तरी बाह्या च घटना दृग्विषयोऽस्ति। दृग्विषयाणां सान्निमात्रं सम्बद्य स्थित्या तस्य तृप्तिर्न भवति। स दृग्विषयेषु, विशेषतः ईदृशेषु दृग्विषयेषु ये नियतरूपेण परस्परं पूर्वापरीभावेन आयान्ति यद्वा

ये परस्परं सदृशाः प्रतीता भवन्ति, संबन्धमन्विष्यति । यदा संबन्धो निश्चितरूपेण मिलितो भवति तदा स सिद्धान्तः कथ्यते । सिद्धान्तः सत्यं मत्वा प्रतिपाद्यते । यस्तम् उपस्थापयति तस्यायं विश्वासो भवति यद् जगति वस्तुत एवमेव वरीवृत्यते । परन्तु कदाचित् ईदृशमपि भवति यद् दृग्विषयाणां सम्बन्धे या वार्ता सम्बोधे आयाति सा निश्चयकोटिं यावत् नहि प्रोञ्छिता भवति । ईदृशो विश्वासो भवति यद् अस्याः सत्यत्वभावस्य प्रभूता सम्भावनास्ति पुनरपि तस्याः सिद्धान्तत्वेन स्वीकारात् पूर्वम् अपरस्य परीक्षणस्यावश्यकता प्रतीयते । ईदृश्यामवस्थायां सोऽभिसिद्धान्तः कथ्यते । विद्याया उन्नतौ अभिसिद्धान्तात् प्रभूता सहायता मिलति । विद्युत्प्रकाशयोर्गतेः सम्बोधे अस्मादभिसिद्धान्ताद् बृहती सहायता लब्धा यद् दिशि एकः प्रभूतं सूक्ष्मो गुरुत्वहीनः पदार्थः सर्वत्र प्रसृतोऽस्ति यो विद्युत्-प्रकाशतापानां तरङ्गाणां माध्यमः सम्पद्यते । इदमेवाकाशतत्वं कथितम् । ज्योतिषिणां सूर्यचन्द्रमङ्गलगुरुप्रभृतीनां खवर्तिपिण्डानां गतिविधिसम्बोधे अस्माद् अभिसिद्धान्तात् सहायता मिलिता यदेते सर्वं खमध्ये निश्चलं दण्डायमानायाः पृथिव्याः परिक्रमणं कुर्वन्ति । अभिसिद्धान्तानभ्युपगम्य सत्यं च मत्वा इयं परीक्षा क्रियते यत् तत् सर्वं सप्रकरणदृग्विषयाणां सम्बोधनायां कियन्तं यावत् समर्थं भवति। यदि तत् अस्मिन् परीक्षणे निर्दोषमुत्तरति तदा सिद्धान्तपदवीं प्रयाति अन्यथा तस्याः परित्यागः कृतो भवति ।

एतावत्पर्यन्तं काचिदापत्तिर्नास्ति । दोषाः तदाऽऽयान्ति यदा प्रमादात् सम्यक्-परीक्षणमविधायैव अभिसिद्धान्तो झटिति सिद्धान्तत्वेन सम्मतो जायते ।

## २ यं अपसिद्धान्ताधिकरणम्

ईदृशः सिद्धान्तोऽपसिद्धान्तो भवति । स उन्नतेः साधकत्वस्थाने प्रबलो बाधको भवति । धार्मिकविश्वासक्षेत्रे अस्य प्रभूतानि उदाहरणानि मिलन्ति । लक्षाणां मनुष्याणाम् अयं विश्वासोऽस्ति यत् अस्माकं चित्ते याः कुवासना उत्तिष्ठन्ति तासां प्रेरिका एका दुर्दमा बलवती व्यक्तिरस्ति यस्याः शैतान, इब्लीस, अहीमन् प्रभृतीनि अनेकानि नामानि दत्तानि । लक्षं मनुष्या एवं मन्यन्ते यत् अस्माकं यत्किञ्चित् सुखदुःखं वा भोग्यमस्ति तत्सह अस्माकं बुद्धयोवासनाश्च कयाचित् अदृश्यया अनुल्लङ्घनीयया च शक्त्या नियतीकृताः सन्ति । एषु परिवर्तनस्य रत्तिकामात्रमपि स्थानं नास्ति । एतेन सार्धम् इमे लोकाः पुण्यपापयोः स्वर्गनरकयोश्च विश्वसन्ति । इयं शङ्का एषां चित्ते उत्तिष्ठत्येव नहि यत् यदा भाग्यं नियतमस्ति तदा अस्माकं कर्मणां दायित्वं तस्या नियतकारिण्याः शक्ते-

रुपरि भवितुं युज्यते तथा पुरस्कारो दण्डश्च तस्यै एव मिलेताम्। शान्त्या विचारे अप-सिद्धान्तानां निःसारता प्रतीता भवेत् परन्तु बहुधा मूढ़ग्राहः शान्तं विचारं कर्तुं नानु-मोदते। यावत् सत्यसिद्धान्तो न मिलति तावत् चित्ते एकप्रकारकं वैचित्र्यं तिष्ठति अथच बुद्धया श्रमः कर्त्तव्यो भवति। वैचित्र्यात् श्रमाच्च मुक्तिं प्राप्तुम् अपसिद्धान्तस्याश्रयो गृह्यते। तं यथार्थं मत्वा स्थितस्य पुरुषस्य यज्ज्ञानं भवति स एव विकल्पोऽस्ति। शयतानस्य स्वरूपं कीदृशमस्ति, स जीवान् किमर्थमवरुणद्धि, तस्य कार्यशैली कीदृश्यस्ति, स नित्योऽनित्यो वा, यदि अनित्योऽस्ति तदा तस्यान्तः को भविष्यति इत्यादिविषयान् गृहीत्वा यस्य विशा-लस्य वाङ्मयस्य सर्जनमभवत् तद् विकल्पस्य प्रभूतमच्छमुदाहरणमस्ति।

अपसिद्धान्तो वैज्ञानिकोन्नतेर्मार्गं पिहितं करोति। भौतिकपदार्थान् निरीक्ष्याक्षपाद-कणादौ तथा तदनुयायिनश्च एतन्निष्कर्षोपरि उपस्थिता यत् एषां पदार्थानां ये पिण्डा दृश्यन्ते तेषां रचना प्रभूतानां क्षुद्राणां क्षुद्राणां खण्डानां मेलनेन जाताऽस्ति। तेषामेवं प्रतीतमभवद् यद् यदि वयं विभाज्यमानाः स्मः तदा अन्ते अस्माभिरेतादृशानि क्षुद्राणि त्रुटितकानि मिलिष्यन्ति येषां विभाजनं नहि शक्येत्। इमानि अविभाज्यानि त्रुटितकानि परमाणुनाम्ना तैरुद्घोषितानि। अभिसिद्धांतरूपेण परिमाणुवादः सर्वथा श्लाघ्य आसीत्। परन्तु प्रगतिस्तत्रैवरुद्धाऽभवत्। अत्यन्तापरिपक्वपरीक्षणाधारोपरि इदमभिमतमभवद् यद् परमाणुस्त्रसरेणोः षष्ठांशेन समो भवति। अत्र उपस्थाय अयमभिसिद्धान्तोऽपसिद्धान्तः सम्पन्नः। यदाऽधिकं परीक्षणमकरिष्यत तदेयं वार्ता अज्ञास्यत यत् त्रसरेणुर्नाम धूलेरुड्डीय-मानानां तेषां कणानां दीयते ये सूर्यरश्मिषु दृश्यन्ते, तदभिधेयस्य किञ्चित् निश्चित-मायतनं नास्ति। सर्वे त्रसरेणवः समानमाना न भवन्ति। यत्र यादृशी मृत्तिका भविष्यति तत्र तादृशास्त्रसरेणवो भविष्यन्ति। पुनरपि परमाणोरायतनं त्रसरेणोः शततमोंऽशो मानितः स्यात् तदापि सोऽविभाज्यो न स्यात्। रसायनशास्त्रमितः कतिगुणक्षुद्रत्रुटितकानि जानाति। परमाणूनां सम्बन्धे यत् विस्तृतं वाङ्मयं लिखितमस्ति तत् सर्वं विकल्पमयमस्ति।

## ३ यं चिन्त्यास्तित्वाधिकरणम्

प्रभूतानां विकल्पानां मूले इयं भ्रान्तधारणा अस्ति यत् यच्चिन्त्यमस्ति तस्यास्तित्वं वर्तते। प्रौढमनुष्याणां विचारा मुख्यतो भाषात्मका भवन्ति। विचारसमये वयं मनसैव मनसि वदामः। अतो यच्चिन्त्यमस्ति तदभिधेयं वर्तते, तस्य किञ्चिन्नामास्ति, तस्य व्यञ्जकः, कोऽपि नु कोऽपि शब्दो वर्तते। वयमेतन्मत्वोपविष्टाः स्मो यच्छब्दार्थयोरीदृशोऽविच्छेद्यः

सम्बन्धोऽस्ति यत् यत्र शब्दोऽस्ति तत्र निःसंदेहमर्थोऽप्यस्ति । अतो यदा चिंतना कर्तुं शक्यते, यदा शब्दप्रयोगः क्रियते तदा तच्छब्दावल्याः सहवर्तिनाऽर्थेनापि भवितव्यम । इयं धारणा भ्रान्तास्ति, अन्यथा गर्दभशृङ्गवन्ध्यापुत्रयोरप्यस्तित्वं सिद्धं जायेत । परन्तु विचारेण दृष्टिपथमापतति यत् न केवलं जनसाधारणानां प्रत्युत विदुषामपि ज्ञानस्य कियतामंशानामाधारः केवलम् एतावदेवास्ति ।

शब्दः कस्याश्चिदेकस्या व्यक्तेः सम्पत्तिर्नास्ति, परम्परातो लोकास्तान् प्रयुञ्ज्यमानाः सन्ति, अतो व्युत्पत्तिः काऽपि भवतु परन्तु प्रत्येकं शब्दः आत्मना सार्धं प्रभूतानव्यक्तानर्थान् गृहीतवानस्ति । ईदृशोऽर्थो ध्वनिरुच्यते । ये शब्दा न्यूनाधिकभावेन समानार्थका भवन्ति तेष्वपि प्रायो ध्वनिभेदो भवति, अतो बहुधा एकस्य शब्दस्य स्थानमपरो न गृह्णीयात् । यथा स्त्रिया पुरुषस्य विवाहो भवति सा सहधर्मिणी, पत्नी, जाया, कलत्रं वा कथ्येत । एते शब्दा बाढं कस्यचिदेकस्य प्राणिनो बोधं कुर्युर्नाम, परन्तु एषु सूक्ष्मोऽर्थभेदोऽस्ति । प्रत्येकं शब्दस्यानुकूलं ज्ञानं भवेत् । यदि कस्यांचित् स्त्रियां सहधर्मिण्या लक्षणं नास्ति तदा तस्याः कृते अस्य शब्दस्य प्रयोगेण यज्ज्ञानं भविष्यति तत् मिथ्याज्ञानं विकल्पज्ञानं वा स्यात् । प्राणसम्बन्धे वयं प्रथमखण्डस्य षष्ठाध्याये विचारं कृतवतः स्मः । प्राचीनकालात् अस्य प्रयोगः श्वासवाय्वर्थं बोभूयमानोऽस्ति । अयमर्थव्यभिचारो बृहन्तमनर्थं प्रासोष्ट । प्राणं पवनं मत्वा विशालं साहित्यं रचितमस्ति या रचना विकल्पभरिता विद्यते । विद्वांसो लोका अस्या वार्तायाः प्रयत्नं कुर्वन्ति यदेतादृशपारिभाषिकशब्दाः प्रयुज्येरन् ये वार्तालापे प्रयुक्ता न स्युः, यतोहि प्रचलिताः शब्दा आत्मनां पुराणानर्थान् त्यक्तुं न शक्नुयुः अपरं कंचन नु कंचन विकल्पमनुत्पाद्य न तिष्ठेयुः । परन्तु भाषाया आलवालाद् बहिर्यानं कठिनं भवति, सर्वत्र स्थाने क, ख, ग प्रभृतिचिह्नानां प्रयोगसम्भवो नास्ति, अतो विकल्पस्य सम्भावनावशिष्यते । विज्ञानस्येतिहासात् अस्य कतिचन उदाहरणानि लभ्येरन् ।

## ४ थं अलीकसर्जनाधिकरणम् ।

सिद्धान्ताभिसिद्धान्तापसिद्धान्तानामादर एतदर्थं क्रियते यत्ते सत्यं सम्बुध्यन्ति । बाढं तद् भ्रान्तज्ञानं भवतु, परं कोऽपि ज्ञानपूर्वकमसत्यं सिद्धान्तं न रचयति । या वार्ताश्चिन्त्याः सन्ति तासु काश्चन अवस्तूनि भवन्तु नाम, परतु यस्ताः सर्वा असत्यं मनुते सो ज्ञानपूर्वकं प्रतारणां न करोति । तस्य एतादृगेव विश्वासोऽस्ति यद् यच्चिन्त्यमस्ति तदस्ति सत्यम् । सा तस्य दुर्बलताऽस्ति यत् प्रमाणानःमौचित्येन प्रयोगं न कुरुते । परन्तु केषुचिद्

अवसरेषु बुद्धिर्ज्ञानपूर्वकमलीकं सृजति। एतादृशानि निर्माति यानि साऽसत्यं जानाति। यावत् तद् ज्ञानं सम्पन्नं तिष्ठति तावत् काऽपि हानिर्न भवति परं यदेयं वार्ता विस्मृता जायते अथ चेमानि अलीकानि सत्यानि मन्यते तदा एभ्यो विकल्परयाशङ्कोत्पद्यते। अलीकानि बहुषु क्षेत्रेषूपयुज्यते; केषुचित् क्षेत्रेषु एषां प्रयोगेण ज्ञानवृद्धौ बृहती सहायता मिलिताऽस्ति। वयं कैश्चिदुदाहरणैरलीकानां स्थानं स्पष्टं कर्तुं प्रयत्नं करिष्यामः।

## ( ल ) गणितेऽलीकोपयोगः

गणितेऽलीकानां महानुपयोगोऽस्ति। एतद्वार्ताश्रवणे आश्चर्यस्य प्रतीतिर्भवति यद-सत्यमेलनेन सत्यं कथं लभ्येत। परतु यदि यावदसत्यं मेलयेत तावदेव पश्चान्निष्कार्येत तदा वस्तुस्थितौ किञ्चिदप्यन्तरं न पतेत्। वत्सा एकां खेलां कुर्वति; त्वमात्ममनसि कानि-चित् रुप्यकाणि गृहाण, तावदेव कस्माचिन् मित्रात् लभस्व अथ नियतं धनराशिं मन्तः प्राप्नुहि। सर्वं योजयित्वाऽर्धस्य दानं कुरु अपरं मित्रस्य रुप्यकाणि तस्मै देहि, वयं वदि-ष्यामो यत् तव पार्श्वे किमवशिष्टमस्ति। एतदेवं सम्बुध्यताम्। मन्यताम् क-रुप्यकाणि मनसि गृहीतानि; तावन्त्येव मित्रान् मिलितानि अथ खेलादर्शको बालकः स्वपार्श्वतः ख रुप्यकाणि दत्तवान्। इदानीं द्वितीयस्य बालकस्य पार्श्वे सम्पूर्णम् क + क + ख = २क + ख रुप्यकाणि भूतानि। एतदर्धस्य दाने कृते क + $\frac{ख}{२}$ अवशिष्टम्। मित्रस्य रुप्यकाणां परावर्तने $\frac{ख}{२}$ अवशिष्टं स्यात्, अर्थात् यत् तेन बालकेन आत्मपक्षतो दत्तम् तदर्धमवशिष्टं स्यात्, अतः स झटिति वार्तयितुं शक्नुयात् यत् किमवशिष्टमिति। मूलं रुप्यकम् दानेन व्ययितम्, मित्रस्य परावर्तितम्। इयं तु खेलाया वार्ता जाता, परन्तु अधिकगम्भीरासु समस्यास्वपि ईदृशप्रक्रियायाः प्रयोगः क्रियते। वर्गसमीकरणविमर्शस्य पद्धतिर्या श्रीधराचार्येण निष्कासि-ताऽऽसीत् साऽपि एतदुपरि निर्भराऽस्ति। क अ$^{२}$ + ख अ = ग एकं वर्गसमीकरणमस्ति अत्र क, ख अपरंच ग ज्ञातसंख्याः सन्ति। अः अज्ञातोऽस्ति। तदेव ज्ञेयमस्ति। ईदृश-प्रश्नस्य समक्षं तर्केण कार्यं न चलति, परन्तु बुद्धिः पराजयं न मनुते। सा चातुर्येण एकम् उपायं निष्किरति। श्रीधराचार्यो द्वयोर्दिशोः प्रथमं क इत्यनेन भागं ददाति। एतेन किञ्चिदन्तरं नापतति अथ च इदं रूपं जायतेः—

$$अ^{२} + \frac{ख}{क}अ = \frac{ग}{क}$$

पुनः वामदिशि $\frac{ख^2}{४ क^2}$ जोडितम् । एतेन अ ं वामो भागः पूर्णो वर्गोऽभवत् । इदानीम् $अ^2 + \frac{ख}{क} अ + \frac{ख^2}{४क^2}$ $(अ + \frac{ख}{२क})^2$ लेखितुं शक्यते । इदं तु भूतं, परं $\frac{ख^2}{४क^2}$ एतज्जोडनेन समीकरणं विकृतं जातम् । अतस्तावदेव दक्षिणपार्श्वे जोड्यते, यस्य वास्तविकोऽर्थोयं भूतो यन्न किञ्चिज्जोडितं नापि विघटितम् । इदानीं नवं रूपम् इदं जातम्—

$$(अ + \frac{ख}{२क})^2 = \frac{ख^2}{४ क^2} + \frac{π}{क} = \frac{ख^2 + ४ π क}{४क^2}$$ द्वयोः पार्श्वयोर्वर्गमूलनिःसारणेन

इदानीं द्वयोः पार्श्वयो $\frac{ख}{क२}$ हरणेनापि किञ्चिदन्तरं नहि पतिष्यति, अतः

$$अ + \frac{ख}{२क} = \frac{\pm\sqrt{ख^2 + ४ π क}}{\sqrt{४ क^2}}$$

$$अ = -\frac{ख}{२ क} \pm \frac{\sqrt{ख^2 + ४ π क}}{२ क}$$

$$= \frac{-ख \pm \sqrt{ख^2 + ४π क}}{२ क}$$

एवं प्रकारेण अज्ञातः अः निःसृतः । यावन्त्यपि वर्गसमीकरणानि भवन्तु सर्वेषामुत्तराणि पूर्वसूत्रद्वारा निष्कासयितुं शक्यन्ते ।

एकमपरमुदाहरणं गृह्यताम् । अस्मिन्नलीकप्रयोगः अधिकप्रत्यक्षभावेन कृतोऽस्ति । अस्माकं क्षेत्राणाम् अपरेषां वा समतलानां क्षेत्रफलस्य मापनाया वारं वारमावश्यकताऽऽ पतति । एतदर्थम् अस्माभिः वर्ग इञ्च, विस्व बीघादीनि मानानि संपाद्य रक्षितानि सन्ति यदि काष्ठस्य ईदृशं खण्डं गृह्येत यत् एकम् इञ्चं लम्बम् अपरम् एकम् इञ्चं विस्तृत भवेत् तदा तस्य क्षेत्रफलम् एकं वर्गइञ्चं कथयिष्यते । अथच तेन अपरवस्तूनां क्षेत्रफलानि मापयिष्यन्ते । परन्तु इदं मापनस्य कर्म सुगमतया तत्रैव भवेत् यत्र वस्तूनां सीमोपरि सरला रेखाः स्युः । गोलवस्तुनि अयं मापो यथावन्न संघटते । गणितस्य समक्षम् अयं प्रश्न आसीत् यत् गोलतायाः क्षेत्रफलं कथं मान्येत । इतः प्रथमं गोलतायाः परिधेः मापनेऽपि काठिन्यमापतितमासीत्, यतो गोलरेखाया इञ्चादिभिर्मापना सुकरा न भवति । विशेषयुक्तिभिरयं परिणामः निष्कीर्ण आसीत् यद् यदि गोलस्य व्यासार्धं 'व' भवेत् तदा तस्य परिधे लम्बता २ π व भवेत् (π = ३.१४१५...) । इदानीं क्षेत्रफलमापने पुनर्विशेषयुक्तीनामावश्यकताऽऽपतिता । वयम् ईदृशयुक्तीनां स्वरूपम् उदाहरणद्वारा सम्बोधयामः ।

विद्वांसो गोलताया अभ्यन्तरे कतिचन त्रिभुजानि सम्पादितवन्तः । प्रत्येकं त्रिभुजस्य द्वौ भुजौ तु व्यासार्द्धं 'व', समौ भविष्यतः, परन्तु तृतीयभुजस्य लम्बता त्रिभुजानां संख्योपरि निर्भरा भविष्यति । वयं पूर्वं द्वे चित्रे अदाम, एकस्मिन् चत्वारिस्त्रिभुजाः सन्ति, द्वितीये अष्टौ । प्रथमे चित्रे तृतीयो भुजः द्वितीयतो बृहत्तरोऽस्ति, तस्य समक्षं चापोऽपि बृहदस्ति । प्रथमश्चापः समग्रपरिधेश्चतुर्थांशोऽस्ति, द्वितीयोऽष्टमांशोऽस्ति । इदानीं यदि वयम् एषां त्रिभुजानां क्षेत्रफलं निष्कलयामस्तदा तेषां योगः गोलस्य क्षेत्रफलात् ह्रासो भवेत् यतो हि चतुर्दिशं कश्चन भागस्त्यक्तः स्यात् । वयम् एतदपि पश्यामो यद् यथा यथा त्रिभुजानां संख्या वर्धमाना जायते तथा तथा तृतीयो भुजः पार्श्ववर्ति चापसमो बोभूयते अथ च क्षेत्रस्य त्रुटितांशः ह्रासो भवन्नास्ते । यदि दश विंशतिर्वा लक्षाणि त्रिभुजाः संपन्ना जायेरंस्तदा तेषां क्षेत्रफलानां योगो गोलस्य क्षेत्रफलात् किञ्चिदेवं ह्रासो भवेत्, अथ च तेषां तृतीयभुजस्य अपरम् पार्श्ववर्तिचापस्य च लम्बतायां अतिह्रासः अन्तरो भवेत् । गणितज्ञानामेतदभिमतमस्ति यत् त्रिभुजस्याधारभुजः लम्बता वस्तुतः चापस्य लम्बतायाः समोऽस्ति । इदं वृत्तमलीकमस्ति । त्रिभुजानां संख्या यथेच्छं वर्ध्यतां नाम परन्तु आधारभुजचापयोः लम्बतायां किञ्चिन्नु किञ्चिद् अन्तरं भवेदेव अथ च त्रिभुजानां सम्मिलितं क्षेत्रफलं गोलस्य क्षेत्रफलात् सदैव किञ्चिन्नु किञ्चित् न्यूनं भवेदेव । परन्तु व्यवहारे इदमन्तरं प्रभूतं ह्रासं भवेत् । किञ्चित् कालस्य कृते इदं विस्मारितं कर्तुं शक्यते । यदि त्रिभुजानां संख्या 'स' भवेत् तदा परिधेरपि 'स' त्रुटितकानि भविष्यति अतः प्रत्येकं चापस्य लम्बता $\frac{२\pi \text{ व}}{\text{स}}$ भविष्यति ।

यदि तस्य ज्या अर्थात् तदुपरिस्थत्रिभुजस्य आधारभुजस्य लम्बताऽपि इयमेव मता भवेत् तदा प्रत्येकं त्रिभुजस्य क्षेत्रफलं $\frac{\pi \text{ व}^२ \sqrt{\text{स}^२ - \pi^२}}{\text{स}^२}$ भवेत् । अतः सर्वेषां त्रिभुजानां

सम्मिलितं क्षेत्रफलम् अस्य—'स' गुणः अर्थात्

$$\frac{\text{स} \times \pi\,\text{व}^2 \sqrt{\text{स}^2-\pi^2}}{\text{स}^2} = \frac{\pi\,\text{व}^2 \sqrt{\text{स}^2-\pi^2}}{\text{स}}$$ भूतम् ।

इदमेवमपि लेखितुं शक्यते $\text{व}\,\pi^2 \sqrt{\frac{\text{स}^2-\pi^2}{\text{स}^2}}$ अथवा $\pi\,\text{व}^2 \sqrt{१-\frac{\pi^2}{\text{स}^2}}$

$\pi$ अस्य मात्रा नियतताऽस्ति $\sqrt{.०}$ तः किञ्चिन् न्यूनं पतति । यथा यथा त्रिभुजानां संख्यायाम् अर्थात् 'स' इत्येतस्मिन् वृद्धिर्बोभूयते तथा तथा $\text{स}^2$ वरीवृध्येत् अथ च $\frac{\pi^2}{\text{स}^2}$ ऊनितो भवेत् । यथा यथा 'स' अनन्तप्रायो बृहद् भवेद् तथा तथा $\frac{\pi^2}{\text{स}^2}$ अनन्त प्रायः क्षुद्रो भवेत् । यदा त्रिभुजानां संख्या असंख्या भविष्यति अर्थात् 'स' परिन्ध्य अनन्तो भवेत् तदा $\frac{\pi^2}{\text{स}^2}$, ऊनितः सन् शून्यो (०) भविष्यति । तदा $\sqrt{१-\frac{\pi^2}{\text{स}^2}}$ इत्येतस्य $\sqrt{१}$ अर्थात् १ अवशिष्टो भवेत् अथ च त्रिभुजानां क्षेत्रफलानां योगः $\pi\,\text{व}^2\sqrt{१-\frac{\pi^2}{\text{स}^2}}$ तस्यामवस्थायाम् $\pi\,\text{व}^2$ समो भविष्यति । परं वयम् इदं दृष्टवन्तः स्मो यत् यथा यथा स वर्धेत तथा तथा त्रिभुजानां सम्मिलितं क्षेत्रफलम् गोलस्य क्षेत्रफलस्य अन्तरं च न्यूनितं स्यात् । अतः एवं मानयितुं शक्यते यत् यदा 'स' अनन्तो भविष्यति तदा द्वयोः क्षेत्रफलयोरन्तरं शून्यं भवेत् । अतोऽस्माकमेतत्सूत्रं मिलति यत् यदि कस्यापि गोलस्य व्यासार्द्धं 'व' भवेत् तदा तस्य क्षेत्रफलम् $\pi\,\text{व}^2$ भविष्यति । इदं सूत्रं सत्यमस्ति यतोहि गगनचारि पिण्डानां गतीनां गणनायाम्, ग्रहाणां सम्पादने, यन्त्राणां निर्माणे अस्य सततं परीक्षा बोभूयते, परमस्योत्पत्तिरलीकधारणाधारोपरि जातास्ति ।

बिन्दुपरिभाषानुसारं तस्मिन् न लम्बता भवति नापि विस्तारो, नापि स्थूलता, रेखायां नं विस्तारो भवति नापि स्थूलता । जगति न क्वापि ईदृशो बिन्दुर्भवति नापि ईदृशी रेखा भवति । बाढं यादृशः क्षुद्रो बिन्दुः सम्पाद्यताम्, बाढं च क्षीणा रेखा विन्यस्यताम्, किञ्चिन्नु किंचित् परिमाणं भवेदेव, तिसृषु दिक्षु यत्किञ्चित् प्रसरणं च । परन्तु गणितज्ञो वस्तूनां विचारं न करोति । वस्तूनां स विचारोऽन्यशास्त्रस्य विषयो भवति । अथ च स्वयं तेषां व्यक्तित्वस्य केवलम् एकांशोपरि दृष्टिं निक्षिपति । इदं पार्थक्यमलीकमस्ति । यथा लम्बतां विस्तारं स्थौल्यं च विना वस्तु न भवेत्तथैव वस्तुनः पृथक् लम्बता विस्तारोऽपि

च न भवेताम्। पुनरपि गणितज्ञो वस्तुविरहितमापमेव आत्मनो विषयं सम्पादयति। पुनरपि स यत्परिणामोपरि प्रोञ्छति, ज्यामिति, त्रिकोणमिति सदृश शास्त्रेषु च यान् सिद्धान्तान् स्थापयति, ते व्यवहारे वस्तूपरि लग्ना भवन्ति। अथ च व्यवहारे यथावत् अवतरन्ति। द्वे चत्वारि, दश वा वस्तूनि भवन्ति, वस्तु विना एकलायाः संख्यायाः किमप्यस्तित्वं नास्ति परन्तु अङ्कगणिते केवलं संख्या विषयीक्रियते, बीजगणिते तु संख्या अप्यपसार्य तासां स्थाने अक्षराण्येव प्रयुज्यन्ते। व्यवहारे अङ्कगणितबीजगणितयोः सिद्धान्ता उपयोगिनः सिध्यन्ति। एवं गणितमसत्तावतां सहायतां गृहीत्वा सत्तावतां विषये ज्ञानोपार्जनं करोति। कतिचन प्रतीकानि तु ईदृशानि सन्ति येषां कोऽपि युक्तः स्थितकोऽर्थ एव नास्ति। $\sqrt{-१}$ अस्य कोऽपि अर्थो न भवति, कस्या अपि ऋणात्मकसंख्याया वर्गमूलं नहि निःसरेत् परन्तु गणिते इयं संख्या बहुत्र स्थलेषु व्यवह्रियते।

गणिते ईदृशाः प्रयोगाः सर्वथा वैधाः सन्ति। साधारणमनुष्या मा ज्ञासिषुर्नाम परन्तु गणितस्य प्रत्येकं विद्वानेषामलीकतां जानाति ज्ञात्वैव च तान् व्यवहरति। येषामलीकानां समावेशः कुतो जायते तानि अन्तिमनिष्कर्षतः प्रथमं निष्कासितानि भवन्ति अपरं च निष्कर्षस्य सत्यतायाः परीक्षाव्यवहारेण क्रियते। मकरध्वजसम्पादने स्वर्णं निक्षिप्यते। प्रत्येकं वैद्यो जानाति यत् क्रियाया अन्ते स्वर्णं यथातथमवशिष्यते परन्तु तस्य प्रक्षेपं विना सा रासायनिकी क्रिया सम्पन्ना न भवेत्, यत्फलस्वरूपं मकरध्वजं सम्पद्यते। गणितेऽलीकानि एवमेवस्वर्णायन्ते।

## (ख) वर्गीकरणेऽलीकोपयोगः

अस्माभिः प्रथमखण्डे दर्शितमस्ति यत् अध्ययनार्थं वस्तूनां वर्गीकरणक्रियाऽऽपाद्यते। यदि तानि वर्गेषु वण्टितानि नस्युस्तदा वस्तूनां जङ्गलतः पारप्राप्तिः कठिना भवेत्। वर्गीकरणस्याधारभूतानि तद्वस्तूनां कानिचित् विशेषलक्षणान्येव भवेयुः। कानिचिल्लक्षणानि अवचित्य वयं शेषाणि त्यजामः। यदि सर्वाणि लक्षणानि गृहीतानि भवेयुस्तदा वर्गीकरणं भवेदेव नहि यतो हि कयोरपि द्वयोर्वस्तुनोः सर्वं लक्षणं परस्परं पूर्णतया नहि मिलति। प्रत्येकं वस्तु आत्मनो व्यक्तित्वं रक्षति। एकं लक्षणं गृहीत्वा याः व्यक्तिः एकस्मिन् वर्गे पात्यते सैव व्यक्तिरपरलक्षणाधारोपरि अपरवर्गे दातुं शक्यते। योहि भारते जन्मग्रहणात् भारतीयोऽस्ति स एव वर्णेन गौरः सम्प्रदायत्वेन खीस्तीयः व्यवसायित्वेन वैद्यः इत्यादि भवेत्। ये लोका एकया दृष्ट्या एकस्मिन्नेव वर्गे सन्ति ते कयाचिद् अपरया दृष्ट्या

अपरेषु वर्गेषु दृश्यन्ते । अयं वर्गभेदः सुविधायै क्रियते । वस्तुतः प्रकृतौ ईदृशो विभागो नास्ति । अलीकस्य ज्ञानतैव यः प्रयोगः क्रियते स वैधोऽस्ति परतु भयः अस्या वार्ताया विद्यते यद् इमें वर्गभेदाः नित्याः सत्यात्मकाश्च मानिता भवेयुः । तस्यां दशायां विकल्पो भवेत् । सामान्यानां सम्बन्धे प्रथमखण्डेऽस्माभिर्विचाराः कृताः संति तत्सत्तायां अलीकतां मन्यमानैर्यदि तद् व्याजेन वतुस्वरूपसम्बधे विचारः क्रियते तदा तु काऽपि क्षतिर्नास्ति, परतु प्रभूता विद्वांसोऽपि सामान्यानां स्वतन्त्रसत्तास्तीत्यस्मिन् भ्रमे पतिता जायंते । अयं भ्रमः प्रभूतान् विकल्पान् उत्पादयति ।

## (ग) समाधिभाषायामलीकम्

योगिलोका आत्मनोऽनुभवान् यादृश्यां भाषायां व्यक्तान् कुर्वन्ति तां समाधिभाषां कथयन्ति । अस्मिन् स्थले वयमेतद् वार्त्तोपरि विचारं कर्त्तुं नेच्छामो यद् योगिनामनुभवाः कियत्पर्यन्तं विश्वसनीया भवन्ति । प्रथमखण्डस्य षष्ठाध्याये यल्लिखितमस्ति तत्पर्याप्तमस्ति। अहं स्वयं योगानुभवं सत्य मन्ये । एतत्प्रकरणस्य कृते एतावदेव पर्याप्तं विद्यते यद् योगी एनं यथार्थं मन्यते । परंतु स तं यथातथं शब्दैर्व्यक्तं न करोति । किञ्चित्तु तस्य कृते एवं करणमसम्भवं भवति । शब्दद्वारा ता एव वार्ता व्यक्ताः कर्त्तुं शक्यते याः कस्मिन्नु कस्मिन् रूपे श्रोतृवक्त्रोरनुभवविषयाः संति आसन् वा । अहं कुक्कुरैराकृष्यमाणां शकटीं नापश्यम् परं कुक्कुराञ् शकटीश्चाद्राक्षम्, पशुभिराकृष्यमाणाश्चादर्शम् । अतो यदि कश्चन मत्तो रूसदेशीय स्ले नामक कुक्कुरेण युक्तां शकटीं वर्णयेत् तदा तस्य वार्तामहं सम्बोद्धुं शक्नुयाम्। परतु यः शर्करां न खादितवान् अपरंच किञ्चिद्यद् मिष्टं वस्तु च न भुक्तवानस्ति तं मिष्टता सम्बोधयितुमशक्या । योगिनां साधारणलोकानां समक्षमात्मानुभवस्य व्यक्तीकरणे किञ्चिदीदृशमेव काठिन्यं भवति । द्वितीयं काठिन्यमिदं जायते यद् अतर्क्या विषयाः स्वसंवेद्या भवंति, तेषां वर्णनमकरणीयमस्ति । वात्सल्यं, पातिव्रत्यं, सौंदर्यञ्च वाणीगतेर्बहिर्विद्यंते । ये लोका एषां समानरूपेणानुभवं कुर्वन्ति तेऽपि केवलं नाम्नेव निर्दिशन्ति, विस्तरेण परस्परं सम्बोधयितुं न शक्नुवति । तृतीया वार्ता इयमस्ति यद् योगिनो लोकाः कतिभिश्चित् कारणैः काश्चिद् वार्ताः गुप्तां रक्षितुं वाञ्छंति । तेषामयं प्रयत्नो भवति यद् वयं यत् कथयामस्तस्यार्थमधिकारी तु सम्बुध्येत इतरे मा सम्भुत्सत । एतैः कारणैस्ते सध्रीचीं भाषामलिखित्वा ईदृशीं भाषां लिखन्ति वदन्ति च यस्या अर्थो झटिति सम्बोधे नहि आयाति यद्वा एवं कथ्यतां यद् योऽर्थः सम्बोधे समायाति स तस्य वास्तविकतात्पर्यविषयो न भवति । क्वचिद् उपमा लक्षणा लभ्यन्ते, क्वचित् प्रतिपादनार्थं कथायाः क्वचित् कथनोपकथनस्य

च रूपं दीयते। सर्वधर्माणां श्रुतिग्रन्थाः, यथा वेदः, पुराणः, बायबिलः, अवेस्ता, ईदृशैः स्थलैः पूर्णा भरिताश्च सन्ति। एषां मीमांसाकरणाय बृहती सतर्कताऽपेक्ष्यते। सत्यं प्रकटयितुं वक्तुः अर्थवादस्य, कल्पितकथानकस्य, उपमाप्रभृतीनां बहूनाम् अलीकवार्तानां सृष्टिरपेक्ष्यते। यावद् वयमेषामलीकानां परिचयं कृत्वा एषामावरणं च दूरीकृत्याऽर्थमन्विष्यामः तावत्पर्यन्तं स्थितिः साध्वी स्यात्, परन्तु बहुधा एवं भवति यल्लोका अलीकं सत्यं मत्वा सन्तुष्यन्ति। पुनश्च कस्यचित् निहितस्यार्थस्यान्वेषणाय प्रश्न एव नोत्तिष्ठति। दुर्गासप्तशती अस्य प्रभूतमच्छमुदाहरणमस्ति। तस्यास्त्रिषु रहस्येषु तिस्रः कथाः सन्ति। एषु वस्तुतः साधकस्य योगशास्त्रोक्तमधुप्रतीकनाम्न्या द्वितीयभूमिकारूपायाः, शरीरस्य सर्वेभ्यो बाह्यभागेभ्यस्तथेन्द्रियेभ्यश्चाकृष्य जागरितप्राणशक्तिद्वारा साधकस्य रजस्तमोमिश्रितस्याधमसत्वस्य निधनम्, साधकस्य दुर्दमवासनाभिश्च युद्धम्, अपि चान्ते परया विद्याया हस्तैः अस्मितावियोः संहारः, एषां योगानुभवानां वर्णनमस्ति। परन्तु इममर्थं यावत् केचन विरला एव प्रोञ्छन्ति। साधारणतः सुप्तस्य विष्णोः कर्णमलादुद्भूतयोर्द्वयोरसुरयोरुत्पत्तेः तन्मृत्योश्च कथा, महिषसदृशशिरोयुक्तस्यासुरस्य मरणकथानकम्, रक्तबिंदोरुत्पन्नस्यासुरस्य संहारः, तथाऽपरेषां प्रभूतानामसुराणां विनाशनस्य कथानकम् इत्यादीनां बहूनामितिवृत्तानां संग्रहो दृश्यते। योगवार्तया शान्तरसस्य दीप्तिर्भवेत् परमियं पुस्तिका बीभत्सरसं जागरयति। ये लोका इमाः कथा ऐतिहासिकघटना मत्वोदासते, ये च लोका इमाः शिरःपादहीनां भाण्डीं कल्पनां मन्यन्ते ते द्वये विकल्पस्य लक्ष्यभूताः सन्ति।

योगिनामीदृशी अनुभूतिर्भवति यदस्य विश्वस्य मूलमेकमद्वयं परमसूक्ष्मं चिद्घनं परमानन्दमयं तत्वमस्ति। तस्य परतत्त्वस्य शक्तिः, तस्य सत्ता, आद्याशक्तिः परदेवता वास्ति। सर्जन-संहार-पालन-शिक्षण-सम्मोहनोद्बोधनादि यत् किञ्चिद् भवदस्ति, भवद् वा प्रतीतमस्ति तस्य सर्वस्य उद्गमः परतत्वे परदेवतायां चास्ति। अनेकदृष्टिभिः शक्तेः शक्तिमतश्च वर्णनं कृतमस्ति, लाक्षणिकभाषायां तत्स्वरूपं सम्बोधितं वर्तते। इमानि वर्णनानि ध्यानपदेनोच्यन्ते। विष्णुरुद्रप्रजापतीन्द्रकालीशाकम्भर्यादीनां ध्यानानि तत्र ग्रन्थेषु पूर्णतया भरितानि सन्ति। उदाहरणार्थं शक्तेश्चतुर्भुजध्यानं गृह्यताम्। तंत्रकारस्येदं कथनं नास्ति यत् वस्तुतः काचित् चतुर्भिर्हस्तैर्युक्ता स्त्री जगतः संचालनं कुर्वत्यस्ति। ध्येयाया एकस्मिन् हस्ते पाशं दत्वा इदं सूचितं कृतमस्ति यत् मूलशक्तिस्तमोगुणरूपाऽस्ति अथ च जीवं मोहपाशे बध्नाति। द्वितीये हस्ते अङ्कुशः तस्या रजोगुणस्वरूपतां सूचयति। रजोगुणस्य लक्षणं निरन्तरं चञ्चलता क्रियाशीलता च स्तः। यदि तदुपरि रोधो न भवेत् तदा स

भयानकमनर्थं कुर्यात् परन्तु संयतो रजोगुणः समस्ताभ्युदयस्य कुञ्चिकास्ति। एतदर्थं हस्तेऽङ्कुशोऽस्ति। तृतीये हस्ते वरदमुद्रा सत्त्वगुणचिह्नं वर्तते। सत्वगुणस्योदयेन सर्वविध-विद्य'बुद्धीनां प्राप्तिर्भवति। एते त्रयो हस्तास्तस्याः शक्तेर्लौकिकस्वरूपस्य बोधकाः सन्ति। चतुर्थहस्तस्याभयमुद्रा इदमिङ्गितं करोति यत् सा त्रिगुणातीतस्य अलौकिकस्य अभयपदस्य मोक्षस्यापि दात्री वर्तते। इदं सम्भवेत् यत् येषां लोकानाम् ईदृश्योऽनुभूतयः अभूवन् तेषां भ्रान्तिदर्शनं मिथ्याज्ञानं च जातं भवेत् परन्तु ये लोकास्तेषां भाषाणां यथातथमर्थं लगयित्वा एवं मन्यन्ते यद् वस्तुतो विश्वस्य सञ्चालनमनेकाक्षिशिरोहस्तयुक्ताः अनेकपुराण-विधशस्त्रास्त्रग्राहिणः कृष्णगौररक्तपीता नरनारीविग्रहाः कुर्वन्तः सन्ति ते घोरे विकल्पे पतिताः सन्ति।

एवमेव सत्यसदाचाराहिंसा श्रद्धादिसद्गुणानां महत्ताम् उपादेयतां चाकर्षकरीत्याऽव-गमयितुं धर्मोपदेष्टारः कथानकैः व्यवाहरन्। एषां घटनाः कल्पिताः सन्ति, नायको नायिका च कल्पिते स्तः, परन्तु अस्या अलीकरचनाया उद्देश्यं स्तुत्यमस्ति। दोषस्तदाऽऽयाति यदा लोका इमा वार्ता विस्मृत्य इतिवृत्तं सत्यं मन्तुं बद्धपरिकरा भवति। ततः प्रभृति विकल्प आरब्धो भवति।

# (घ) कलायामलीकम्

कविः क्रान्तदर्शी भवति। तस्यातीन्द्रियं प्रत्यक्षम् उच्चकोटिकं भवति, अतो गोप्यं रक्षितुमनिच्छतोऽपि तस्य तादृशीनां कठिनतानां समक्षता कर्तुमापद्यते, या योगिनां समक्षमायाति। बाध्यो भूत्वा तिष्ठितस्तस्यापि तादृशयुक्तय उपयुज्यन्ते। कविर्दृश्यमानजगत-श्चित्रमात्रं नहि चित्रयति, किन्तु तस्य रहस्यमप्युद्घाटयति अथ च शिवेतरक्षतेरुद्देश्यमपि आत्मनः समक्षं रक्षति। स धर्माचार्य इव गुरुपीठात् उपदेशात्मकशैलीं नानुसरति। स श्रोतरि रसमुद्बोध्य तस्य चित्तमनुकूलदशायामानयति। रसं जागरयितुं येषां विभावाना-मावश्यकता भवति तेषामुपयोगं कर्तुं स कथाः कथानकानि च रचयति, नायकानां नायिकानां च सृष्टिं करोति। उपमालक्षणाभ्याम् अपरमेवंभूता नव्यानुपायांश्चात्मसात्करोति, सत्यसौन्दर्य दया प्रभृतीन् हृद्गतान् भावान् मूर्त्तान् सम्पादयति अथ च जडवस्तुभिश्चेतनै-रिवाचरणं कारयति। या वार्ता मया कवेः कृते कथितास्ता अपरेषां कलाकाराणामपि कृते न्यूनाधिक रूपेण लभ्या भवन्ति। कविःअवहित मनसा सम्बुध्यालीकसर्जनं करोति अपि च सर्वे जानन्ति यत् स एवं करोति परन्तु तस्य सफलताऽस्यां वार्तायामस्ति यत् श्रोता

अलीकादुत्पन्नाया रसधारायामेवं वहेत् यत् तस्य श्रोतुस्तस्या रसधाराया उद्गमस्य स्मृतिरपि मा भूत् । नाटकद्रष्टा जानाति यदभिनेतारो राजा राज्ञी वा न सन्ति, रङ्गमञ्चोपरि न कोऽपि म्रियते न वा मारयति परन्तु कवेर्नटस्य च कलायां इयं निकषपट्टी वर्तते यत् प्रेक्षका आत्मनो विस्मरेयुः, ते इदं विस्मरेयुर्यद् वयं खेलां पश्याम इति, अथ च तावत्कालं पात्रैः सह तादात्म्यमपि तेषां भवेत् । एवमलीकद्वारा कलाकारो द्रष्टुः श्रोतुश्चाधमं स्वत्वं शुद्धं करोति, तेषां चित्ते ईदृशान् भावान् जागरयति यत् कदाचित् अन्यरूपेण तेषां जीवने ते नोत्तिष्ठेयुः, तेषां समवेदनाक्षेत्रस्य विस्तारं कारयति अथ चैवमर्थकाममयदैनन्दिनीत उपरि उत्थाप्य रहस्यसौन्दर्यधर्मजगति प्रवेशयति ।

यदि कलाकारतोऽलीकप्रयोगस्याधिकार आच्छिद्येत तदा तस्य कर्मासम्भवं भवेत् । तस्यालीकानामुपयोगो वैधोऽस्ति । यदा तस्य कृतिरैतिहासिकवर्णनात्मिकाऽभिमता भवति तदा तस्योपयोगिता नष्टप्राया जायते । कतीनां प्राचीनानां काव्यानामीदृशी दुर्गतिरभूत् । ये लोकाः काव्यममत्वा इदं सम्बुध्यन्ते यत् कविर्विज्ञानस्येतिहासस्य वा पुस्तकं लेखितुमुपविष्ट आसीत्, अथ च तस्मिन्नैतिहासिकत्रुटीर्दृष्ट्वा तस्य निन्दां कुर्वन्ति तेऽपि विकल्पस्य वशीभूता भवन्ति ।

पुरुषसूक्तमस्या वार्तायाः प्रभूतमच्छं निदर्शनमस्ति । तस्मिन्नादर्शभूतसमाजस्य चित्रं चित्रितं विद्यते । इदं तत्र निर्दिष्टमस्ति यत् सर्वेषु देशेषु कालेषु च समाजसङ्घटनं कथं कृतं भवेत् यत् प्रत्येकं व्यक्तेरधिकादधिकं कल्याणं स्यात् । इदं भवेत् यत् स आदर्शः कस्यचित् साधु न प्रतीयात् परन्तु सूक्ते एतदतिरिक्तं किञ्चिन्नास्ति । परमद्यत्वे तदाधारोपरि द्विविधः विकल्पः प्रसृतोऽस्ति । एकतस्ते लोकाः सन्ति ये एवं मन्यन्ते यद् वस्तुतो विराजो मुखात् अपरेभ्यश्चाङ्गेभ्यो ब्राह्मणादीनामुत्पत्तिरभूत् । एते भद्र मानुषा एतदपि नहि विचारयन्ति यत् सूक्तस्य प्रथम एव मन्त्रे इदं कथितमस्ति यत् सर्वेषां प्राणिनां शिरांसि विराजः शिरांसि सन्ति, पुनश्च ब्राह्मणानामुत्पत्तिः कस्मात् शिरसो भूता ? यदि सर्वेषां शिरसां निच्युतेरभूत् तदा ब्राह्मणानां श्रेष्ठता क्व स्थिता, तस्मिन् शूद्रचाण्डाल म्लेच्छ सिंह वृक श्रृगाल पिपीलिका वृश्चिकप्रभृतीनां सर्वेषां गुणदोषाः प्राप्ता भवेयुः । इयं वार्ता इतरवर्गाणामपि कृते लग्ना भवेत्, अथ च वराकाणां म्लेच्छादीनां नामैव न गृहीतमस्ति । ते किं विराजः शरीराद् बहिः सन्ति ? अपरपक्षे ते लोकाः सन्ति ये इदं सम्बुध्यत यत् सूत्रकारो वस्तुत इदं समबुध्यत यद् ब्राह्मणादयः विराजो मुखादिभ्यो निःसृताः सन्ति अथवा स जन्मगतां वर्णव्यवस्थां प्रतिपाद्य ब्राह्मणान् पूजयितुं शूद्रांश्च मानवाधिकाराद् वञ्चयितुमैच्छत् । एते द्वे धारणे भ्रान्ते स्तः । कवये समाजस्य

यत् रूपं साधु अरोचत तदेव तेनोपस्थापितम् । तस्य समीक्षां कृत्वा स्वीकर्तुमस्वीकर्तुं वा सर्वेषामधिकारोऽस्ति परन्तु तस्मिन् जातिव्यवस्थायामखण्डनदर्शनम् अपि च तदाधारोपरि तस्य प्रशंसा निन्दा वा विकल्पो विपर्ययो वा भवेत् ।

## ५म् चेतोव्यापाराधिकरणम्

व्यावहारिक जीवनेऽस्माकं कतिभिरलीकैः परिचयोऽस्ति । विधानशास्त्रे संस्था व्यक्तयो मन्यन्ते । राजनीतौ राज-लोकमत-सरकारशब्दानां व्यक्तिवाचिनामत्वेन प्रयोगः कृतो जायते । परन्तु एषामभिधेयेषु सत्तायाः प्रयोगः कृतो भवेत् तदा स विकल्पः स्यात् ।

अयं प्रश्नः स्वभावत उदेति यत् चित्तमलीकानां सृष्टिं किमर्थं करोति ? यदि सत्यस्य ज्ञानं न प्राप्येत तदा शान्त्याऽनवस्थाय अभिसिद्धान्तापसिद्धान्तानां रचना किमर्थं क्रियते ? एतदुत्तरमिदमस्ति यदलीकानां रचना तदर्थमेव भवति यदर्थं तर्काध्यवसायौ क्रियेते सिद्धान्ताश्च स्थिरीकृता भवन्ति । विचारेण प्रतीयते यत् एतस्य सर्वस्य चेतोव्यापारस्य एकमात्रं प्रयोजनं द्रष्टुर्भोगोऽस्ति । चित्तस्येमाः सर्वाः क्रिया द्रष्टुर्भोगस्य साधनानि सन्ति । द्रष्टरि अनेकप्रकारा वासनाः सन्ति । एका प्रसुप्ता भवति अपरा च उदारा तिष्ठति । आसां वासनानां तृप्तेर्नाम भोगोऽस्ति । भोगस्तदा भवेद् यदा भोज्येन सम्पर्कः स्थापितः स्यात् । सम्पर्कस्तु इन्द्रियद्वारा भवति परन्तु एकलैरिन्द्रियैः कार्यं न सिध्यति । एतन्निश्चयकरणमावश्यकं भवति यद् भोज्यस्य परिस्थितिः कास्ति, तद्ग्रहणमेतदवसरोपरि कथं क्रियेतेत्यादि । यद्ययमध्यवसायरूपश्चेतोव्यापारो न भवेत्तदा भोज्येषु सत्स्वपि बहुधा तदुपभोगो न भवितुं शक्नुयात् । अतश्चेतोव्यापारः अध्यवसायस्तर्कश्च भोगस्य साधनानि सन्ति । सर्वेषां वासनाः समाना नहि सन्ति । वासना आशयोऽप्युच्यते अतः कश्चन महाशयः कश्चन चाल्पाशयः कथ्यते । कस्यचित्तुष्टिर्हस्तशतभूम्यैव जायते, कस्यचित् कृते तु वसुन्धरायाः साम्राज्यमपि पर्याप्तं न भवति । कस्यचिद् दृष्टिर्महेन्द्रपदोपरि तिष्ठति । कश्चित् केवलमात्मोदरभरणार्थमेव चिन्तयति, कश्चिदैश्वर्यवान् अभिजनस्यार्थकामसम्पादनेन सुखी भवति । आशयभेदेन भोग्येषु प्रकारभेदः तेषां मात्रासु तारतम्यं च भवतः । यद्येतेषां सर्वेषां भोग्यानामुपलब्धिर्भवित्री तदा पुनरेतत्सम्बन्धे व्यापकाध्यवसायकरणमावश्यकमापद्यते । चेतोव्यापारस्य लक्ष्यं द्रष्टुर्भोगमात्रमस्ति, परन्तु भोगस्य कृते ज्ञानस्यावश्यकताऽऽपतति, अतश्चेतोव्यापारो ज्ञानोपार्जनस्यापि साधनं सम्पद्यते । अध्यवसायात् ज्ञानं ज्ञानाच्च भोगो भवति । यस्य ज्ञानं यावद् व्यापकं स्यात् स यथेष्टाचरणे तावदेव कुशलो भवेत् ।

कदाचित् कदाचित् अलीकमपि सज्ज्ञानस्य साधकं सम्पद्येत । अस्य कतिचनोदाहरणान्यहं दृष्टवानस्मि । गृहनिर्माणार्थं स्थपतयः वंशकाष्ठरश्मिभिः पादतटं 'पायटं' बध्नन्ति । अथ निःश्रेणिं लगयित्वा तदुपरि आरोहन्ति । कर्माणि पूर्णे जाते निःश्रेणयः क्षिप्यन्ते पादतटश्च त्रोटितो जायते । यदि कश्चन पादतटं गृहाङ्गं सम्बुध्य तत् सुरक्षितं रक्षितुं चेहेत तदा सोऽवलिप्तः कथ्येत । इत्थं चित्तं कदाचित् कदाचित् अलीकान्युपयुङ्क्ते । सत्योपरि प्रोञ्छ्य तानि छोटयति च । अन्तिमे निष्कर्षे तेषां किञ्चिदपि स्थानं न भवति । अपसिद्धान्ता ज्ञानप्राप्तौ सहायका न भवन्ति परन्तु जिज्ञासाया व्याकुलता तैरपि मृष्टा जायते । यावत् पर्यन्तं भोगे ततो बाधा नापतति तावत्पर्यन्तं तेषां ग्रहणे किञ्चित् कष्टं न भवति । यदा बाधाऽऽपतति—अथ च एवं कदा नु कदा अवश्यं भाव्यस्ति—तदा तान् प्रति शङ्का पुनरविश्वासश्च जायेते । अलीकानां व्यापकं प्रयोगं दृष्ट्वा अस्माकं या व्यग्रतोत्पद्यते तस्य कारणमिदमस्ति यद वयं चित्तं ज्ञानस्य साधनं मम्मन्यामहे । अस्माकमियं धारणाऽस्ति यच्चित्तं यथावस्तु ज्ञानं ददाति अपि च चेतोव्यापारः, चित्तस्यपरिणामक्रमः, वस्तूनां धर्मपरिणामस्य प्रतीकमस्ति । परन्तु एवं नास्ति, भवेदपि नहि । अस्माकं काश्चित् संविदोऽभूवन् यदाधारोपरि वयमेतत्कथयामो यद् दुग्धस्य प्रत्यक्षमभवत् । काश्चिदपराः संविदोऽभूवन् या वयं दध्नः प्रत्यक्षं कथयामः । द्वयोः संविदोर्भवनं निर्विवादमस्ति परमेतदाधारोपरि जातं प्रत्यक्षं पुनर्दधिदुग्धयोः संबन्धश्च चेतोव्यापारोऽस्ति । एतस्य किञ्चित् प्रमाणं नास्ति यच्चित्तस्य बहिस्तदनुरूपं किञ्चिदस्ति । शुक्तेरुदरे बालुकाकणा यान्ति जाठरसामग्र्या मिलित्वा ते मुक्ताः सम्पद्यन्ते । तादृशो हि कणो मनुष्योदरे पूययुक्तं व्रणकेन्द्रं संपद्येत । एकविधैव संविद् दुग्धनाम्ना भद्रमाकार्यतां नाम परन्तु स्वस्थस्य मन्दाग्निग्रस्तस्य च मनुष्यस्य एकविधमेव प्रत्यक्षं कदापि न भवति । संविदो बोभूयन्ते परन्तु चित्तस्य वस्तुसत्तायां संविदि वा न काचिदभिरुचिर्भवति । तस्य तु द्रष्टुः कृते भोगस्य अर्थात् वासनानां तृप्तेर्वा संपादनं कर्त्तव्यमस्ति । अतस्तत् ता विविधैः प्रकारैर्मेलयति, तासां मध्ये कस्याश्चिद्दिशः यथाशक्यं पराङ्मुखीभूयावतिष्ठते, प्राक्तनानुभवाधारे यत्र चानया तस्य कर्म न प्रचलति तत्र च अर्थापत्त्या निराधारव्याप्तिविरहितानुमानद्वारा च संबन्धं जोडयति एवं त्रोटयित्वा मोटयित्वा च ता भोग्याभोग्यप्रत्यक्षस्य माध्यमीः संपादयति । संविदः सततं बोभूयन्ते इयमेवाङ्कुशस्वरूपा अन्यथा चेतोव्यापारो वस्तुस्थितेः प्रभूतं दूरं गत्वा पतेत् । संविन्मात्रभिन्नः स्थितस्य चित्तस्य परिणामानां शेषोंऽश आत्मसंपत्तिरस्ति । संविदपि चित्तस्य परिणामोऽस्ति परं तद् विषये अधुना एतत्स्थले एवं मन्तव्यं यत् सा बाह्य जगतः प्रतीकमस्ति अर्थात् चित्ताद् बहिः कस्यचिद् वस्तुनः सत्तायाः सा सूचिकाऽस्ति ।

चित्तं भोगस्य साधनमस्ति अतस्तदन्तःकरणम्, आभ्यन्तर उपस्करः, आभ्यन्तरमुपकरणं वा कथ्यते। ततस्तावत एव ज्ञानस्याशा कर्त्तव्या यावतो भोगार्थमावश्यकताऽस्ति। परन्तु यदि वासनाः क्षीणा भवेयुस्तदा भोगस्यावश्यकताऽपि क्षामा भवेत्, चेतोव्यापारोऽपि भिन्नप्रकारको बोभूयिष्यते, संविदः प्रत्यक्षस्य मध्यमं दूरत्वमपि क्रमशः क्षामं भवितुमारप्स्यते, ज्ञानस्य यथावस्तुताऽपि वृद्धा भविष्यति। तस्यामवस्थायां चित्तं मोक्षस्य साधनं सम्पत्स्यते। द्रष्टुः भोगमोक्षयोः सम्पादने एव चित्तस्य कृतार्थता विद्यते।

वयमधस्तात् क्वचिच्चेतोव्यापारस्य क्वचिच्च चित्त शब्दस्य प्रयोगं कृतवन्तः स्मः। वस्तुतो द्वयोः किञ्चिदन्तरं नास्ति। व्यापारहीनस्य चित्तस्य किमप्यस्तित्वं नास्ति। जलं निरन्तरं प्रवहदस्ति। क्वचित् तस्मिँस्तरङ्गा उत्तिष्ठन्ति क्वचिच्च शान्तं तद् दृश्यते, परन्तु प्रवाहो नावरुद्धो भवति। एवंभूतो जलराशिर्नदी कथ्यते। वहतो जलाद् भिन्नं नद्याः किञ्चिदस्तित्वं नास्ति। एवमेवाच्छेद्य चेतोव्यापारस्य अर्थात् प्रमाणविपर्ययविकल्प स्मृति, रागद्वेषसंकल्पादि परिणामानां निरन्तरवर्तिन्या मालाया एव नाम चित्तमस्ति। प्रज्ञानानां सतत प्रवाहाद् भिन्नस्य चित्तस्य कापि सत्ता नास्ति।

यथाचित्तमन्तःकरणमस्ति तथैवेन्द्रियाणि बाह्यकरणानि, बाह्योपकरणानि, उपकरणानि वा सन्ति। तानि चित्तस्यैव स्थूलानि रूपाणि विद्यन्ते। इन्द्रियाणामपि द्रष्टुर्भोग मोक्षयोः कृतकृत्यताऽस्ति अपि चेन्द्रियव्यापारोऽपि चेतोव्यापारान्तर्गतोऽस्ति। इन्द्रियाणां सत्ता चित्तसत्ताया एव भेदोऽस्ति।

---

# द्वितीयोऽध्यायः

## मनः प्रसूतिः

शरदः कृष्णपक्षस्य रात्रावाकाशं प्रति पश्यतु भवान्, सहस्रं तारका द्योतमानाः प्रतीता भवेयुः। एषु अधिकांशानां रङ्गः श्वेतोऽस्ति, कासुचित् नीलिमा रक्तिमा दृश्येते। केचन प्रभूतं द्योतमानाः सन्ति, केचन च प्रभूतं धूसरा वर्तन्ते। सर्वा पूर्वस्यामुदयन्ते पश्चिमायां च ब्रुडन्ति। यथाकाशप्रेक्षणं सततं कियद्दिनानि यावत् कृतं स्यात्तदा इदमपि प्रतीतं भवेत् यद् ऋतुभिः सह तारकाणामुदयास्तकालेऽपि अन्तरमापतति अपरं च केचन पिण्डाः ये दर्शनेन तारकाः प्रतीता भवन्ति अन्यासां तारकाणां मध्यतः आत्मनः स्थानस्यापि परिवर्तनं कुर्वन्ति। एतावज्ज्ञानं पर्याप्तं न भवति। मनुष्यास्तारकाणां चालं संबुभुत्समानाः तासां स्थानं दृष्ट्वा वर्षणस्यानुमानं कर्तुं वाञ्छन्ति, बीजवपनसमयं च ज्ञातुमिच्छन्ति। अनेन विस्तृतेनाध्ययनेनैव स तारका आत्मन उपयोगस्य सामग्रीं सम्पादयेत्। स सकलस्याकाशस्य युगपदनुशीलनं न कुर्यात्, अतस्तास्त्रुटितकेषु वण्टयति। नत्वाकाशे पशवः पक्षिणो वा सन्ति नापि नरदेहधारिणस्तत्रोपविष्टाः सन्ति परन्तु मनुष्यस्तारकाविस्तारं पुञ्जेषु वण्टयति, अपिचेषत् सादृश्यं दृष्ट्वा एषां पुञ्जानां सिंहमेषमृगश्येनतिमि प्रभृतीनि नामानि ददाति। एवमेव विशेषतारका अगस्त्यमरीचिरोहिणीध्रुवादि नाम्नाऽकारयति। आकाशमेकमखण्डं चास्ति, क्षितिजाद् क्षितिजं यावत् काचिद् गोला रेखा न कृष्टाऽस्ति परन्तु आत्मनः सुविधायै १३° २० इत्यनेन समाः सप्तविंशतिर्भागाः कृताः सन्ति। अनया रीत्या ज्योतिषा ध्येतुः कर्म सरलं संजायते परन्तु एतन्न विस्मर्तव्यं यत् सकलं विभाजनं बद्धिकृतकमस्ति।

चित्तस्यैतादृशमेव कर्म कर्त्तव्यं भवति। एकतस्तु वासनाः स्मृतयश्चोत्सेध्यीयन्ते, सुख-दुःखानुभूतयश्च बोभूयमाना भवन्ति अपरदिशि संविदां प्रवाहो वर्वृत्यते। संविदः कदाचित्तीव्रा भवन्ति कदाचिच्च मन्दाः, कदाचित् गभीरान् संस्कारांस्त्यक्त्वा यान्ति कदाचिच्च लघुकान्, तासां मध्ये काश्चिद् वारं वारं आयान्ति, काश्चन नियतं पूर्वापरीभावेन भ्राम्यन्ति। संविदो भोग्यस्य सूचिकास्तु सन्ति परं यावत्ता अस्तव्यस्तातिष्ठन्ति तावत्पर्यन्तं भोगस्य निश्चितरूपेण उपस्करा न भवेयुः। द्रष्टुर्भोगस्य सिसाधयिषया प्रेरितं भूत्वा चित्तं संविदो विभक्ताः करोति ताश्च संविदो विविधैः प्रकारैः सज्जयति च। तत् तासां पारस्परिकं संबन्धं चान्विष्यति। संबन्धा बहिस्तु मिलन्ति नहि, तेषां स्वतन्त्राः संविदस्तु भवन्ति नहि, चित्तमात्मन आभ्यन्तरव्यापारेण तासां प्रतिष्ठां करोति, अनेकप्रकाराणां नियमानां विधानानां च कल्पनां कृत्वा संविद एकस्मिन् सूत्रे ग्रथितुं प्रयत्नं करोति। एवंविधसंविदां प्राचुर्येण चित्तं जगतो निर्माणं करोति।

सर्वेषां कृते जगत् एकविधं न भवति। कस्मिंश्चिद् युगे लोका आत्मनो देशस्य संकुचित सीमाया अभ्यन्तरे वर्तन्ते, अथ च शरीरस्य मुख्यावश्यकतानां पूर्तिं विहाय अन्यवार्ताया दिशि वामं ध्यानं ददते, कदाचित् सकला पृथवी एकैव सम्पद्यते अपि च कतिपद्म क्रोशदूर सम्बन्धि नीहारिका आरभ्य त्रसरेणोः कतिसहस्रगुण क्षुद्र वस्तूनामनु-शीलनं कृतं जायते। एवं संवित्सु भेदो भवति, संविद्भेदानुसारं नवीन सम्बन्धानामन्वेषणं भवति नव्यस्य जगतो निर्माणं च भवति। प्रत्येकं संस्कृतेरात्मनो जगद् भवति तत्संस्कृते-रभ्यन्तरे प्रत्येकं व्यक्तेः पृथग् जगद् भवति। ये लोका एभिर्जगद्भिः सह व्यवहरन्ति ते तानि मनःप्रसूतिं न मन्यन्ते। तेषामीदृशो विश्वासो वर्तते यत्संविदस्तु सत्याः सन्त्येव, तासां संविदां यः सम्बन्धो हेतुश्चास्माकं संबोधे आयान्ति तेऽपि तावदेव सत्यानि सन्ति। बुद्धि-निर्माणं वस्तुस्थितेः प्रतिच्छाया प्रतीतं भवति।

भिन्नानि भवन्त्यपि इमानि जगन्ति सर्वथा विजातीयानि न भवेयुः। मुक्ताः परस्पर-मत्यन्तं सदृश्यो न भवन्ति, परन्तु नितान्तं विसदृश्यः अपि न भवन्ति यतोहि शुक्त्योऽपि सजातीया रजःकणा अपि सजातीयाः सन्ति। एवमेव सर्वेषां मनुष्याणां वासना इन्द्रियाणि शरीराणि च सजातीयानि सन्ति। अतः संविदोऽपि सजातीया एव भवन्ति अपि च तदाधारोपरि निर्मितानि जगन्ति च सजातीयानि भवन्ति। एतस्य तात्पर्यमिदमस्ति यत् संविदो जगन्निर्माणे ये चेतोव्यापारा भवन्ति तेऽपि सजातीया एव भवन्ति। अपरैः

शब्दैर्वयमेतत् कथयेम यत् संविदां संव्यूहने चित्तं स्वच्छन्दं नास्ति तत् केनचिन्नियत-मार्गेणैव चलेत्। एतस्यैतत् फलं भूतं यत् कानिचिद् बुद्धिनिर्माणान्येवैतादृशानि सन्ति यानि अद्यारभ्य सहस्राणि वर्षाणि पूर्वं प्रस्फुटितानि भूत्वाऽद्यावधि संसेव्यन्ते। प्रतिसमयं तेषां संस्कारः संशोधनं च भवदागच्छति परन्तु तेषां सर्वथा परित्यागो यदि क्रियते तदा जगतः संघटनं नहि भवेत्। द्रष्टावशिष्येत, चित्तं चावतिष्ठेत, वासनाः स्मृतयश्च स्थिताः स्युः, दैहिकचेष्टाः संविदश्चावशिष्येरन् परन्तु जगतो लोपो भवेत्।

अस्मिन्नध्याये वयमेतत्सम्बन्धे विचारं कर्तुं वाञ्छामः। अस्माकं समक्षमयं प्रश्न उपस्थितोऽस्ति यत् इमानि केवलं सुविधाजनक बुद्धिनिर्माणानि सन्ति, अथवा एषाम् पारमार्थिकसत्ताऽस्ति।

# १ मं ईश्वराधिकरणम्

अयं प्रभूतं पुराणो व्यापकश्च विश्वासोऽस्ति यदस्य जगतः कश्चन कर्त्ताऽस्ति, केनचिदिदं निर्मितमस्ति। इदं दृष्टिपथमेवापतति यत् प्रभूत बाधासु विद्यमानास्वपि मनुष्यो जीवन्नस्ति, पशवः पक्षिणश्च जीवन्ति, नक्षत्राणि सूर्याचन्द्रमसौ, पर्वताः, समुद्राश्च सर्वेऽपि संपन्ना सन्ति, अतो जगतः पालनमपि वरीवृत्यत एव। अस्या वार्तायाः स्वीकारे लाघव-मस्ति यद् यः कर्त्तास्ति स एव पालकोऽस्ति। एवमेव इदमपि मतं सम्पन्नमस्ति यत् स एव एकदा जगतः संहारमपि कुर्यात्। अयं कर्त्ता पाता संहर्त्ता चेश्वरः कथ्यते।

ईश्वरः प्रत्यक्षस्य विषयो नास्ति अतस्तस्य ज्ञानमनुमानेन शब्दप्रमाणेनच भवितुं शक्नुयात्। यावत् सर्वसम्मत आप्तपुरुषो निश्चितो न स्यात् तावत् शब्दप्रमाणप्रयोगः कर्तुं न शक्यते। विभिन्न सम्प्रदायेषु ये लोका आप्ता मताः सन्ति तेषामीश्वरसम्बन्धे ऐकमत्यं नास्ति। ये लोका ईश्वरस्यास्तित्वं स्वीकारं नहि कुर्वन्ति तेषु कपिल जैमिनि बुद्ध महावीरप्रभृतयः प्रतिष्ठिता आचार्याः सन्ति। अतोऽस्माभिः शब्दप्रमाणस्यावलम्बनं त्यक्तव्यं भविष्यति। इदानीं केवलमनुमानमवशिष्यते। अस्मिन् विषयेऽयं हेतुर्दीयते यत् प्रत्येकं वस्तुनः कोऽपि नु कोऽपि रचयिता भवति अतो जगतोऽपि केनचिद् रचयित्रा भाव्यम्। अस्मिन्ननुमाने कतिचन दोषाः सन्ति। वयं यद्येतन्मन्यामहे यत् प्रत्येकं वस्तुनः कर्ता भवति तर्हि पुनः वस्तुभूतस्येश्वरस्यापि कर्ता भविष्यति अपरं तस्य कश्चनापरः द्वितीयस्य च तृतीयः। इयं परम्परा क्वापि समाप्ता न भविष्यति। ईदृशे तर्केऽनवस्थादोषो भवति।

एतेनेश्वरस्यास्तित्वं सिद्धं न भवति । यद्येवं मन्येत यत् ईश्वरस्य कर्त्तुरपेक्षा नास्ति तर्हि पुनरेवमभ्युपगमे काऽऽपत्तिरस्ति यद् विश्वस्य कर्त्तुरपेक्षा नास्ति ? पुनरेवं मननं यत् प्रत्येकं वस्तु सकर्तृकमस्ति, अयं साध्यसमः । सूर्याचन्द्रमसौ सकर्तृकौ स्त इत्यस्य किं प्रमाणमस्ति ? समुद्रं पर्वतं च सम्पाद्यमानं जातं कोऽपश्यत् ? यावत्पर्यन्तमेतत् सिद्धं न जायेत यत् प्रत्येक वस्तुनः कर्त्ताऽस्ति तावत्पर्यन्तं जगतः कोऽपि कर्त्तास्तीत्येतत् सिद्धं न भवेत् ।

ये लोका जगत् सकर्तृकं मन्यन्ते तेषां समक्षमात्मनो व्यवहारस्य वस्तूनि वर्तन्ते । गृहनिर्माणाय स्थपतयः, घटाय कुम्भकारो, भूषणाय स्वर्णकारो, घटीयन्त्राय घटीसज्जोऽपेक्ष्यते । एते कारिकराः इष्टकाप्रस्तरमृत्तिकासुवर्णादिभिरङ्गैः गृहादेर्निर्माणं कुर्वन्ति । कारिकर उपादानसामग्रीः क्रियासूत्रयुङ्क्ते अपि च निर्माणकार्ये व्यापृतेः किञ्चिन्नु किञ्चित् प्रयोजनं भवति । तत् प्रयोजनं यदि प्रथमतोऽस्माकं न ज्ञातं भवेत् तदा निर्मितवस्तुदर्शनेन संबोधे आयायात् । इदानीं यदि गृहादि सन्निभं जगत् सकर्तृकमस्ति तदा तस्योपादानसामग्री काऽऽसीत् ? अपि च सृष्टिकरणे ईश्वरस्य प्रयोजनं च किमासीत् ? जगति यत्किञ्चिदप्यस्ति तद् जडश्चेतनो वास्ति अतो यत् किञ्चिदुपादानं भवेत् तदन्यतरप्रकारकं भवेदुभयात्मकं वा । द्वयोरप्यवस्थयोरयं प्रश्न उत्तिष्ठेत् यत् तज्जगत उत्पत्तेः प्रथमं कुत आयातम् ? यदि तस्य कश्चित् कर्त्ता नासीत् तर्हि पुनर्जगत एव कृते कर्तुः कल्पना किमर्थं कृता भवेत् ? यदि कर्ताऽऽसीत् तर्हि स ईश्वराद् भिन्नः अभिन्नो वासीत् ? यदि भिन्न आसीत् तर्हि ईश्वरस्य कल्पना किमर्थं क्रियते ? किं या व्यक्तिर्जडचेतनौ उत्पन्नौ कर्तुं शक्नुयात् सा द्वयोर्मेलनेन संपादयितुं नहि शक्नुयात् ? जड़चेतनयोः संपदनेतु विना कस्यचिद् ईश्वरस्य मननमपि जगतो विस्तारः सम्बोधे आयायात् । यदि उपादानकर्त्ता ईश्वरादभिन्न आसीत् अर्थात् यदीश्वर एव जड़चेतनयोः सृष्टिं कृतवान् तर्हि एतस्य तात्पर्यमिदमभूत् यदसतः सत उत्पत्तिरभूत् या प्रत्यक्षविरुद्धा सती अनुमानेनापि बाधितास्ति । यदीदं मन्येत यदीश्वर आत्मनः सत्स्वरूपात् जड़चेतनयोरुत्पादनं कृतवाँस्तदायं प्रश्नो भविष्यति यत् स एवं किमर्थं कृतवान्, एवंकरणे किं प्रयोजनमासीत् ? इदं कथयितुं न शक्येत यद् जीवानां भोगोपलब्धये एवं कृतमासीत् यतो हि जीवान् स एव सम्पादयामास । यदि स नहि तान् सम्पादयेत नहि तद्भोगप्रश्न उत्तिष्ठेत् । जीवानां मोक्षोऽपि उद्देश्यो न भवेत् यतो हि जीवा आसन्नेव नहि तर्हि पुनस्तेषां कासीत् बन्धनं यस्य त्रोटनमपेक्षितमभूत् ? एतत्कथनमपि सन्तोषजनकं नास्ति यज्जगत् ईश्वरस्य लीलास्ति । निरुद्देश्यखेलाया ईश्वरत्वेन सार्धं सामञ्जस्यं नास्ति । किं स एकाकी गह्वरित आसीत् यदर्थमेतावान् प्रपञ्चो रचितो भवत् ?

इदमपीश्वरत्व कल्पनया सङ्गतं नास्ति । एतत् कथनेनापि कर्म न निर्वहति यद् ईश्वरेच्छा अप्रतर्क्याऽस्ति । इच्छा किञ्चिद् ज्ञातव्यं ज्ञातुं किञ्चित् प्राप्तव्यं प्राप्तुं वा भवति । ईश्वरस्य कृते किमज्ञातं किं वा अप्राप्तमासीत् ? पुनर्यदा तस्येच्छा एवमेव अकारणा निष्प्रयोजना चास्ति तर्हीदानीं तदुपरि कश्चनाङ्कुशस्तु लग्नो न जातोऽस्ति । स कस्मिन्नपि दिने सृष्टेः संहारं कर्तुं शक्नुयात्, अग्निं शीतलयेत्, कमलवृन्तोपरि सूर्याचन्द्रमसावुद्गमयेत् । अन्धविश्वासो यदिच्छेत् तत् कथयेन्नाम परन्तु एवं भविष्यतीति कस्यापि बुद्धिर्न स्वीकरोति । ईश्वरवादिन इदं कथयन्ति यद् ईश्वरस्य स्वभाव एवाङ्कुशोऽस्ति अथ च नियमवर्तित्वं तस्य स्वभावोऽस्ति । जगति यत् किञ्चिद् घटते तन्नियमानुसारं भवति । एषां सर्वेषां नियमानां समष्टिः ऋतं कथ्यते । ऋतम् ईश्वरस्य स्वभावोऽस्ति । एतदुपरि अयं प्रश्न उत्तिष्ठति । यदयं स्वभाव ईश्वरस्य सदातनोऽस्ति यद्वा जगतः सृष्टेः पश्चाद्भूत् ? यदि पश्चाद्भूत् तर्हि केनेश्वरो दमितः ? सा का शक्तिरस्ति या ईश्वरादपि बलवत्यस्ति ? यदि प्रथमतोऽस्ति तर्हि या इच्छा जगत उत्पत्तेर्मूलमासीत् सा ईश्वरस्य स्वभावादविरुद्धा भवेत्, अर्थात् जगत उत्पत्तेः कारणम् ईश्वरस्य स्वभावोऽस्ति । परन्तु यत्र स्वभावो भवति तत्र पर्यायः न तिष्ठति । ईश्वरस्य सिसृक्षा तस्य स्वभावस्य अनुकूला भविष्यति । पानीयस्य स्वभावो नीचैर्दिशि वहनमस्ति, अग्नेः स्वभावो उष्णताऽस्ति, ईश्वरस्य स्वभावो जगत उत्पादनमस्ति । नहि पानीयं नीचैर्वहनं त्यजेत्, नापीश्वरो जगत उत्पादनम् । अस्यां दशायां तस्य जगतः कर्तृत्वस्य कथनं तावदेव उचितं भवेत् यावद् जलस्य नद्याः, ज्वलनस्य चाग्नेः कर्तृत्वस्य कथनम् । कर्तृत्वव्यपदेशस्तत्रैव भवेद् यत्र संकल्पस्य स्वतन्त्रता स्यात् । इदं कर्माहं कुर्यां न वा कुर्याम् ईदृश्याः स्वतन्त्रतायाः कृते स्वभावे स्थानं न भवति । अत एते सर्वे तर्का ईश्वरस्यास्तित्वसाधनं कर्तुं नालम् ।

एतद् भवेद् यद् वयं किञ्चिदपरिचितयन्त्रनिर्माणोद्देश्यं संबोद्धुं न शक्नुयाम पुनरपि तस्य संपादनं दृष्ट्वा एतन्निश्चयोपरि गच्छामो यदिदं सकर्तृकमस्ति, स्वतो नहि संपन्नम् । किं जगदस्मानेतन्मननाय विवशयति यत्तस्य कश्चन कर्ताऽस्तीति ? एवं मननस्य पक्षे सर्वतो बृहत्तमस्तर्कोऽयं समुपस्थाप्यते यत् जगतः संचालनम् ऋतमयमस्ति, सर्वाणि कर्माणि नियमानुसारं भवन्ति, प्रत्येकं घटनायाः किञ्चिन्नु किञ्चित् कारणं भवति । नियमितता-कारणाद् वयं भविष्यद् घटनाः प्रथमतो ज्ञातुं शक्नुयाम वस्तूनि चात्मभोगसामग्र्यश्च सम्पादयितुं शक्नुयाम । नियमो नियामकमपेक्षते । एतेन प्रतीयते यद् जगतः कश्चन कर्तास्ति, वयं तस्य प्रयोजनस्य गाधतां प्राप्नुयाम नवा । अस्मिन्नपि तर्के द्वौ दोषौ स्तः । प्रथमतस्तु

एतन्मननस्य कश्चनाधारो नास्ति यन्नियमस्य कृते नियामकोऽपेक्ष्यते । प्राकृतिका नियमा मानवविहिता न सन्ति । विधानस्य रूपं भवति अतःपरम् ईदृशीं कर्म कर्त्तव्यम्, यो न करिष्यति तस्मै अमुक प्रकारको दण्डो दत्तो भविष्यतीति । एवं भवद् दृष्टमस्तीति प्राकृतिक नियमस्य रूपं भवति । तस्मिन् दण्डस्य कश्चन प्रश्नो नोत्तिष्ठति ! मानवविधानं भवत्याज्ञात्मकम्:—कोऽपि वैपणिकः सार्धद्वय सेटकान्न्यूनं गोधूमं प्रतिरूप्यकं न विक्रीणीयात्, ये विक्रीणीयुस्ते पञ्चशतानि रूप्यकाणि दण्ड्या भवेयुः वर्षद्वयात्मककारावासदण्डेन च योजिता भवेयुः । प्राकृतिको नियमो वर्णनात्मको भवति यथा धनविद्युद् ऋणविद्युच्च परस्परमाकर्षतः । अस्यां दशायां प्राकृतिकनियमान् दृष्ट्वा नियामकस्यानुमानं कर्तुं न शक्यते । एतन्मनने लाघवमस्ति यज्जगतः स्वभाव ऋतोऽस्तीति । जगतो जडाश्चेतना वा ये केचनावयवाः सन्ति ते स्वावयविस्वभावमतिक्रमितुं नहि शक्नुयुः । तर्केऽपरो दोषोऽयमस्ति यदेतत्सर्वसम्मतमस्ति यद् वस्तुतो जगति ऋतस्य सत्तास्तीति परमेतन्निर्विवादं नास्ति । वयं प्रथमं कतिवारान् कथितवन्तः स्मो यद् संविद्द्वारैव वस्तुसत्तासूचनाऽस्माकं मिलति । एताः संविदो भवन्ति एतावत्पर्यन्तं तु सुष्ठु वर्तते । एतेन एतदपि बाढं मन्यतां यद् वस्तूनि सन्ति तेषु किञ्चित् परिवर्तनं च भवति, यद् वयं घटना दृग्विषयं वा कथयामः । एतत् सर्वं भवेत् परन्तु दृग्विषयेषु ये सम्बन्धाः प्रतीता भवन्ति ते चेतोव्यापारस्य फलस्वरूपाणि सन्ति । चेतोव्यापारो द्रष्टुर्भोगस्य हेतुर्भवति, एतदर्थं चित्तमीदृशान् सम्बन्धान् स्थापितान् करोति, ये भोगाय अधिकमनुकूलाः प्रतीता भवन्ति । भौतिकाः पिण्डाः परस्परं सान्निध्ये स्थानपरिवर्तनं कुर्वन्ति, एवमस्माकं प्रत्यक्षं भवति । एतत् स्थानपरिवर्तनं संबन्धे न्यूटन एतन्मतं प्रकटितं कृतवान् यद् भौतिकाः पिण्डाः परस्परमाकर्षन्ति अथ च एतदाकर्षणसंबन्धे इमं नियमं निष्कीर्णवान् यद् यदि द्वयोः पिण्डयोर्गुरुत्वं गु १ गु २ च भवेत् तयोर्दूरता दू भवेत् तदा तयोर्मध्ये आकर्षणं स्यात् : क $\frac{\text{गु १} \times \text{गु २}}{\text{दू}^{२}}$ [ क एका नियता संख्यास्ति या वस्तुमात्रस्य कृते समानाऽस्ति ]।

अयं तु नियमोऽभूत् परन्तु कोऽपि मनुष्य इदमपि मन्येत यत् स्थानपरिवर्तनं तु वरुणदेवस्येच्छानुसारं भवति । एतत् कथं सिद्धं भवेद् यत् तस्य मननं निराधारमस्ति ? वयं वरुणदेवं नहि ज्ञातुं पारयामः परन्तु एतेन किं भवति ? अद्य एतस्य प्राप्तिर्जाता यत् केचन क्षुद्राः क्षुद्राः कीटाणवः सन्ति ये दुग्धं दधिरूपेण परिणतं कुर्वन्ति । लोका इमां वार्तां नहि ज्ञातवन्तः आसँस्तदापि कीटाणवः आत्मकर्म कुर्वन्त आसन् ।

वयं वरुणस्येच्छां गणनाविषयं नहि सम्पादयितुं शक्नुमः परन्तु नियमं तु सम्पादयेम किन्तु एतावतैव नियमस्य सत्ता सिद्धा नहि भवति। आम् इयं वार्ता निश्चितास्ति यद् वरुणेच्छा-माननापेक्षया नियमाभ्युपगमे सुविधास्ति। सूर्यमङ्गलगुरुशनयः पृथिव्याः परिक्रमणं नहि कुर्वन्ति परन्तु प्राचीनज्योतिषिणः एवं मत्वा गणनां कुर्वन्त आसन् अपि च तया गणनया एतत् पिण्डानां स्थानानां यथावत् प्राप्तिं लगयितुं शक्ता आसन्। ग्रहाणामसम्बद्धभ्रमणा-पेक्षया तेषां पृथिव्याः परिक्रमणस्य मनने गणनायाः सुविधाऽऽसीत्, अतो बुद्धिरेतत् स्वीचकार। यदा वाष्पयानस्य शकटानि लौह नेमेरुपरि चलन्ति तदा यः स्वन उत्पद्यते तस्मिन् आत्मन आत्मनो रुचेरनुसारं लोका नाना प्रकारिका वाचः शृण्वन्ति। अयं स्वनस्तु यादृशोऽस्ति तादृशोऽस्ति, एतानि सर्वाणि वचनानि श्रोतॄणां बुद्धिनिर्माणानि सन्ति। अनयैव रीत्या संविदस्तु सन्ति यानि किञ्चित् पदवाच्यान्यपि स्युः, येषां सूचनां संविदो ददते परन्तु वस्तूनां सम्बन्धाः तेषामेकत्र बन्धका नियमाश्च बुद्धिनिर्माणानि सन्ति। यदा नियमानां चित्ताद् बहिः सत्ता असिद्धाति तदा पुनर्नियामकस्यापि सत्ता असिद्धास्ति। अतो जगतो दृश्यरूपम् अस्मान् ईश्वर सत्ताभ्युपगमे बाध्यान् नहि करोति।

केचनेश्वरं जगत्स्रष्टारममत्वाऽऽरम्भकं मन्यन्ते। तेषामीदृशो विश्वासोऽस्ति यज्जगतो रचनाया या जड़चेतनात्मिका उपादानसामग्री आसीत् तामीश्वरो नहि समपादयत् परन्तु ईश्वरसान्निध्यात् सामग्र्यास्तस्मिन् रूपे संव्यूहनं जातं यज्जगत् कथ्यते। चुम्बकस्य सान्निध्य-मात्रात् लोहस्य त्रुटितकानि आत्मनो विशिष्टप्रकारेण विन्यासं कृत्वाऽवतिष्ठन्ते। अयं विन्यासो लोहस्य स्वभावो भवेत् अन्यथा चुम्बकः स्वर्णं रजतं काष्ठं वा तेनैवरूपेण विन्यस्तं कुर्यात्। लोहस्य स्वभावः कैश्चित् पदार्थैरभिभूत आसीत् चुम्बकस्तान् दूरीकरोति। एतद् विचारणीयं यज्जगत आरम्भे ते के अवरोधाः आसन् यानीश्वर दूरीकृतवान्। ईदृशी काचिद् वार्ता सम्बोधे नहि आयाति। लोहमेकलं नास्ति, जगति अपरेऽपि पदार्थाः सन्ति। एषु कश्चन तस्यावरोधको भवेत् तर्हि किञ्चिदाश्चर्यं नास्ति। पानीयस्य स्वभावो नीचैर्वहन-मस्ति, परं तदतिरिक्तापरभौतिकपदार्थास्तस्य गतेरवरोधं कदाचित् कदाचित् कुर्वन्ति। तत् स्वयमात्मनोऽवरोधकं न भवति। जगतो मूलसामग्र्यतिरिक्तं तु किञ्चिदासीदेव नहि तर्हि पुनरात्मनः स्वभावानुसारं कथं संव्यूढा भवितुं नाशकत् यद् ईश्वरस्यावश्यकताऽऽपतिता-भवत्?

अहं किञ्चिद्दिनं पूर्वं विडाल्या एकं शावकमपश्यम्। अद्य तं पुनः पश्यामि तर्हि प्रथमतो बृहन्तं प्राप्नोमि। अस्या वृद्धेः साक्षी क आसीत्? ज्ञातृज्ञेययोरीदृशः संबन्धोऽस्ति

यद् यदैको भवेत्तर्हि अपरोऽपि भवेत्। विडाली ज्ञेयाऽस्ति, तद्वृद्धिरपि ज्ञेयास्ति, अतो ज्ञातापेक्ष्यते। यदि कश्चन मनुष्यो विडाल्याः शावं वर्धमानं पश्यन्नासीत् तर्हि कश्चनापरः साक्षी अवस्थितो भवेत्। अयं साक्षीश्वरोऽस्ति। ईश्वरः सर्वघटनानां साक्षी अस्ति, तत्कृते नित्यं वर्तमानकालोऽस्ति। यदा मम प्रत्यक्षं भवति तदाहमीश्वरस्य सधर्मा भवन्नस्मि अर्थात् ईश्वरस्य मम च विषयस्य समानरूपेण ज्ञानं जायते। मच्चित्ते ईश्वरीयं ज्ञानं प्रतिबिम्बितं जायते।

अयं तर्कः समीचीनो नास्ति। इदं युक्तमस्ति यद् ज्ञातृज्ञेययोरन्योन्याश्रयोऽस्ति परं यदा ज्ञेयं न भवेत् तदा ज्ञातुः कल्पना नहि कर्तुं शक्यते। विडाली द्वयोः कालयोर्ज्ञेयाऽऽसीत्, तस्या द्वयोः कालयोर्ज्ञाताऽहमासम्। प्रथमं वारं द्वितीयं वारं च संविदोर्भेद आसीत्। अतो मम एकं वारं क्षुद्रविडाल्या द्वितीयं वारं च बृहत्या विडाल्याः प्रत्यक्षमभूत्। एवं कथ्यतां यत् प्रथमवारप्रत्यक्षस्य क्षुद्रा विडालीति द्वितीयवारप्रत्यक्षस्य बृहती विडालीति नामनी मया दत्ते। संविदोः साम्यहेतोर्द्वेऽपि विडाल्यौ कथिते तयोरसमानताहेतोः क्षुद्रा-बृहतीशब्दाभ्यां व्यपदेशः कृतः। वारद्वयं संविदौ जाते परं तयोर्मध्ये वृद्धिनामकं यं सम्बन्धं वयं जोडयामः स तु चेतोव्यापारस्य फलमस्ति। यद्यहं विडाल्याः शावम् आत्मनोऽक्ष्णोः समक्षं बद्धं रक्षेयं तदापि इयमेव वार्ता भविष्यति। सततं नवाः संविदो बोभूयिष्यन्ते अपि चाहं इमाः संविदो वृद्धिनामक कल्पित सूत्रोपरि पिरोयन् यास्यामि। संविदो भवनं निर्विवादमस्ति परन्तु वृद्धिश्चित्ते वर्तते, बुद्धिनिर्माणं वस्तुशून्यमथचाज्ञेयमस्ति, एतदर्थं तस्य मदतिरिक्तस्य ईश्वरस्य अन्यस्य वा कस्यचिद् ज्ञातुरपेक्षा नास्ति।

इयमापत्तिः कर्तुं शक्यते यत् अनेन तर्केण तु वारद्वयं दर्शनयोर्मध्ये विडाल्या अस्तित्वमेव नावतिष्ठेत्। नावतिष्ठतां नाम अस्यां स्थितौ गह्वरितभावस्य का वार्तास्ति? अस्तित्वमासीद् इत्यत्रैव किं प्रमाणमस्ति? कश्चन संविदो भवन्ति, तदाधारोपरि वयं कथयामो यद् विडालोऽस्ति। यदा संविदो न स्युः तदा विडाल्यपि न स्यात्। अप्रत्यक्षावस्थायां विडाल्या अस्तित्वं तु बुद्धिर्माणमस्ति।

अस्मिन् सम्बन्धे वारं वारं मननं कर्त्तव्यम्। अस्माकं वस्तूनामस्तित्वस्य ईदृशो विश्वासो बद्धमूलोऽस्ति यत् सहसा एतद्विचारानन्तरं गह्वरितता भवति यत् चित्ताद् बहिर्वस्तूनि न सन्तीति। अस्माकं समक्षम् आसन्दी पतिताऽस्ति। किं वस्तुत इयं नास्ति? ईदृशी कथाऽस्ति यद् एको विद्वान् अकथयद् यद् एकमाघातं देहि पीड़ा आसन्द्या

अस्तित्वं साधयिष्यति । अत्र तस्य भ्रान्तिरासीत् । पीडा एका संविदस्ति अथ च वयं संविदस्तित्वानङ्गीकारं न कुर्मः । एका विशिष्टप्रकारिका संविद् भविष्यतीत्येतावत्तु निश्चितमस्ति, चक्षुरिन्द्रियादितः काश्चिदपरा एव संविदो बोभूयन्ते, यदाधारोपरि अस्माकमसन्द्याः प्रत्यक्षं बोभूयते । वयं सर्वासां संविदां सत्तां स्वीकुर्मः परन्तु एतदतिरिक्ता आसन्दी क्व का चास्ति ? तर्हि पुनरयं प्रश्न उत्तिष्ठति यत् किं साऽऽसन्दी यस्या उपरि अहमुपविष्टोऽस्मि मच्चित्ताभ्यन्तरमस्ति किम् ? यः कुक्कुरो ह्यो मामदशत् स मच्चित्ताभ्यन्तरमासीत् किम् ? अयं प्रश्नो विभज्यवचनीयोऽस्ति अर्थात् अस्योत्तरे सिद्धम् आम् नहीति वा कथयितुं न शक्यते परं द्वित्र त्रुटितवेषूत्तरं दत्तं भविष्यति । ताः संविदो—रङ्ग स्पर्शादिरूपाः—या आसन्द्या विशेषताः सन्ति चित्ते वर्तन्ते; ताः संविदो रङ्गशब्दस्पर्शगन्धाः, चूषणस्य रसनस्य वा प्रवृत्तिश्चेत्तीर्ह रसः, सानुभूतिर्यापीड़ा कथ्यते, एतानि सर्वाणि ह्यश्चित्ताभ्यन्तर आसन् । एषां सत्ता निर्विवादास्ति । अस्मिन्नर्थे एवं कथयितुं शक्यते यदासन्दी चित्ते वर्तते, कुक्कुरश्चित्त आसीत् । एतदतिरेकेणासन्द्याः कुक्कुरस्य च किञ्चिदस्तित्वं नास्ति, नासन्दी चित्ताभ्यन्तरेऽस्ति, नवा बहिः, न कुक्कुरश्चित्ताभ्यन्तरमासीद् नापि बहिः । अनेन व्यवहारे किञ्चिदन्तरं नापतति । काञ्चन संविदोऽभूवन् यासां मेलनेनेदं प्रत्यक्षमभवत् यत्कुक्कुरोऽस्तीति । कियत्कालानन्तरमपराः संविदोऽभवन् यदाधारोपरि एतत्कथितमभूद् यत्कुक्कुरः पार्श्वमायात्, अवागुरत दन्ताश्चन्यकालयत् शरीरस्यामुकं भागं दन्तैराजघान पीड़ा च संजाता । संवित्क्रमः सम्यगस्ति, संविदां मध्यमाः सम्बन्धा बुद्धिनिर्माणानि सन्ति । परमिदमनुमानं कर्तुं शक्येत यत् पुनः संविदोऽनेनैव क्रमेण आत्मन आवर्तयिष्यन्ति । कुक्कुरदर्शनवर्तीं संविदमारभ्य संविन्माला पीडोपरि गत्वा समाप्ता भविष्यति । एतद् व्यावहारिक दृष्ट्या एवं कथयिष्यामो यत् कुक्कुरो दृष्टिपथमायातस्तर्हि दशतिस्म । अतो मालाया मध्यतः कर्तननादात्मरक्षणस्य येऽप्युपायाः भवेयुः, पीडानामक संविदो वञ्चनाय येऽप्युपाया भवेयुःतत्करणीयतायां बाधा नापद्यते । कुक्कुरो नादशदिति कथनस्यायमर्थोऽस्ति यदमुकामुका अप्रियाः संविदो नाभवन् ।

एतेन केषांचिल्लोकानां परितोषो न भवति । इदमास्माकीनं परिचितं जगल्लोपं प्राप्नोति, एतेन एकप्रकारकः क्षोभः संजायते । एतद्रक्षितुं युक्तयो वारं वारं विचार्यन्ते । एकेयं युक्तिरस्तियद् द्रव्यस्य परिभाषा एवंविधा कृता जायेत यत् तस्यां संवेद्यतायाः सम्भावनाप्यन्तर्गता भवेत् । मम हस्ते एकं बीजमस्ति, अहं तद्भूमौ अगर्तयम् । अस्मिन् समये तेन सम्बद्धा काचिदपि संविद् नहि भवन्ती अस्ति, परन्तु यदि कश्चन क्षोदयेत् तर्हि बीजं मिलेत्, संविदो

भवितुमारभेरन्। अत एतन्माननेन यद् बीजे संविदोदानस्य सम्भावनाऽस्तीति बीजस्य सत्ता भूमेरधस्तनत्वावस्थायामपि सुरक्षिता स्थास्यति। परं सम्भावनाया अस्वीकारं वयं कदाऽकार्ष्म ? सम्भावनाया अर्थोऽयमेवास्ति यदमुकावस्थायाममुकप्रकारिकाः संविदः प्रायेण भवन्ति। वयमेतन्मानयामः। दर्शनोपरि कुक्कुरः कृन्तति अस्य मीमांसाऽस्माभिः कृतास्ति। कुक्कुरे कर्तनस्य सम्भावनास्ति, अस्यायमर्थोऽस्ति यद् अमुकामुकसंविदः पश्चाद् अमुकामुकाः संविदो भवन्ति। एवमेव भूमेः खोदनोपरि बीजविषयिकाः संविदो भवन्ति। अलं, सम्भावनाया एता वानेवार्थोऽस्ति।

केषांचिल्लोकानामयं विश्वासोऽस्ति यद् यदीश्वरस्य सत्ता न स्वीक्रियेत तर्हि सदाचारस्य कृते कश्चित् आश्रयो नावशिष्येत। एवं माननेन यद् ईश्वरो लोकोपयोगिकर्मतः प्रसन्नो भवति अपिच तेषां कृते कदा नु कदा कच्चिन्नु कच्चित् पुरस्कारं ददाति, लोकोद्वेजककर्मभिरप्रसन्नो भवति तथा तेषां कृते कदा नु कदा कच्चिन्नु कच्चित् दण्डं ददाति, सत्कर्मणो मर्यादा च सम्पन्ना तिष्ठति। पुरस्कारस्य दण्डस्य च वार्ता त्यज्यते, तथापीश्वरस्य प्रसन्नता प्रोत्साहयति। वयमेतत्संबन्धे एकस्मिन् उपरिष्टादध्याये पुनर्विचारं करिष्यामः, परन्तु एत्तावत्तु स्पष्टं भवेत् यदयं कश्चन पुष्टस्तर्को न स्ति। कश्चन ईश्वरस्य प्रसन्नताया अपेक्षां किमर्थं कुर्यात् ? कीदृशं कर्म साधीयः कीदृशं चावद्यमस्ति इत्यस्य निर्णयमीश्वर आत्मनः स्वतन्त्रेच्छया करोति यद्वाऽस्या वार्तायाः समीक्षां करोति यद् वर्तमानपरिस्थितौ किं श्रेयस्करं भवेदिति ? कस्य कर्मणः कृते कः पुरस्कारो दण्डो वा दातव्य इत्येतदीश्वरेच्छोपरि निर्भरमस्ति, यद्वा नियमबद्धमस्ति अर्थात् असुककर्मणः फलममुकं भविष्यतीति नियतमस्ति ? यद्यासु वार्तासु ईश्वरेच्छा स्वतन्त्रास्ति तर्हि पुनः सदाचारो निराश्रयः संजायते। इच्छायाः का निर्भरता, न जाने कदा परिवर्तेत, यत्पुण्यमस्ति तत्पापं भवेत् यो दण्डयोऽस्तिः स पुरस्कार्यो भवेत्। यदि कार्याकार्ययोनिर्णयो वस्तुस्थितेः समीक्षोपरि निर्भरोऽस्ति तदा प्रत्येकं मनुष्येण स्वबुद्धयनुसारं स्वयं समीक्षा कर्त्तव्या भविष्यति, यतो हि कस्मिंश्चित् समयविशेषे ईश्वरस्य का सम्मतिरस्ति एतज्ज्ञानस्यास्माकं पार्श्वे किञ्चित् साधनं नास्ति। यदि कर्मणः फलं नियमानुकूलं मिलति तर्हीश्वरस्य माननं व्यर्थमस्ति। ईश्वरः फलस्य दातास्तीति कथनं विना एतत्कथनं युक्तं भविष्यति यत् नियतेरनुसारं फलं मिलतीति। ईदृश्या नियत्या वैदिक वाङ्मये सत्यमिति नाम दत्तमस्ति। आत्मनो बहिः कस्यापीश्वरस्य दिशि दृष्टि निक्षेपापेक्षय कर्मफलयोरटलसंबन्धस्य, यः कर्मसिद्धान्तः कथ्यते, सततविस्मरणं सदाचारस्य कृतेदृढतरस-वलम्बनमस्ति।

मनुष्योऽल्पज्ञोऽल्पशक्तिश्चास्ति, तस्येच्छानां पदेपदेऽभिघातो भवति अतः स एकामी- दर्शी व्यक्तिं कल्पयति या सर्वशक्तिः सर्वज्ञा चास्ति । ईदृशव्यक्तेरिच्छा सदाऽप्रतिहता भविष्यति । इयं कल्पिता व्यक्ति रादर्शभूता भवति । मनुष्यो यत्किञ्चिद् भवितुमिच्छति तत् सर्वमेकत्र कृत्वा अस्यादर्शस्य सृष्टिं करोति । वयमन्येषां सेवां कर्तुं वाञ्छामः परमुपकरणानां न्यूनता एवं कर्तुं नानुमोदते । कदाचित् इदं सम्बोधे नायाति यत् किं कुर्यां किं च न कुर्यामिति । स्वार्थसङ्घर्षस्य फलस्वरूपं कस्यचिदधिकाराणाम् सम्पेषणं कस्यचिद् हृदयस्य विदारणम् प्रतिदिनं दृष्टिपथमापतति ; अस्यामवस्थायामनन्तज्ञान, अनन्तवीर्य, अनन्त वैराग्य, अनन्तकरुणा, अनन्तमाधुर्यमयव्यक्तेः सत्तोपरि विश्वासभावेन बृहदाश्रयः प्राप्तो भवति । अन्यायेन सह योद्धुं स्फूर्त्तिर्मिलति दुःखं च सह्यं भवति ।

ईश्वरो मनुष्यस्य परिवर्धितं परिशोधितं च संस्करणमस्ति । तस्मिंस्ते सर्वे सद्गुणाः सन्ति यान् मनुष्यः स्वात्मनि द्रष्टुमिच्छति । अतः प्रत्येकं संस्कृतेः प्रत्येकं व्यक्तेश्च ईश्वरे स्तोकः स्तोको भेदोऽस्ति । कस्यचित् कृते कश्चन गुणविशेषो मुख्योऽस्ति कस्यचित् कृते च गौणः । य एकस्य दृष्टौ सद्गुणोऽस्ति सोऽपरस्य दृष्टौ दुर्गुणो भवेत् । परन्तु इयतीं वार्तां सर्वे ईश्वरवादिनो मन्यन्ते यदीश्वरः सर्वज्ञः, सर्वव्यापको, नित्यः, सर्वशक्तिविशिष्टः, सर्वगुणसम्पन्नो, निराश्रयाणामाश्रयभूतः, सत्कर्मकारिणां सहायकश्चास्तीति । तेषामयमपि विश्वासोऽस्ति यत्तदुपरि दृढविश्वासरक्षिणामाध्यात्मिकी उन्नतिर्भवति, तेषां चरित्रे निर्मलताऽऽ याति, तेषां लोक संग्रहशक्तिश्च वर्धते ।

वयमासां वार्तानामस्वीकारं न कुर्मः परन्तु एतेनेश्वरस्य सिद्धिर्न जायते । तत्तेषामुप- योगिनामलीकानामन्तर्गतमस्ति यत्सृष्टिरात्मनः सुविधायै चित्तं करोति । प्रभूता वार्ताः सन्ति याः सम्बोधे नायान्ति, प्रभूताश्च घटनाः सन्ति या अप्रिया प्रतीयन्ते । आसां सर्वासां कृते 'ईश्वरेच्छा' इति कथनेन चित्तस्य क्षोभो मृष्टो जायते, अज्ञातस्य अप्रियस्य च अदृश्यसंबन्ध- सूत्रं मिलितं भवति ।

## २ सर्गप्रतिसर्गाधिकरणम्

ईश्वरस्यास्तित्वपक्षे ये तर्काः उपस्थाप्यवा तेषां मध्ये कतीनां मूलेऽयं विश्वासोऽस्ति यज्जगतः कदानु कदा सृष्टिरभूत्, परन्तु अस्या वार्तया किं प्रमाणमस्ति ? वयं वस्तूनां निर्मितिं विकरणं च पश्यामः, एतदाधारोपरि इदमनुमानं कर्तुं शक्यते यज्जगतोऽपि कदाचित् सर्गो

भवेत् अथ च तस्यापि कदाचित् प्रतिसर्गोऽपि भविता। परन्तु ये वस्तूनां संपत्तिविकृती कथ्येते तत्र का क्रिया जायते ? क्षुद्राणां त्रुटितकानां मेलनेन बृहन्तः पिण्डाः संपद्यन्ते बृहन्तः पिण्डास्त्रुटिताः क्षुद्रेषु त्रुटितकेषु विक्षुरिता भवन्ति, तत्त्वानां मेलनेन मिश्रिताः पदार्थाः संपद्यन्ते, पुनश्च मिश्रितानां पदार्थानामवयवाः पृथग् भवन्ति, स्थूलात् सूक्ष्मरूपेषु परिणता जायन्ते, परन्तु एवं कदापि न भवति यद् यदस्ति तत् किञ्चिदपि न भवेत्, यत् किञ्चिदपि नास्ति तत् किञ्चिद् भवेत्। सत् असन्न भवति, असतश्च सन्न निष्किरति। सम्पत्तिविकृती च रूपान्तरितभावस्य, धर्मपरिणामस्य च केवलं नामनी स्तः। या वार्ता क्षुद्रपिण्डानां कृतेऽस्ति सैव समुच्चितजगतोऽपि कृते लग्ना भवेत्। तस्मिन् प्रतिक्षणं परिवर्तनं भवदस्ति। पुराणानां ताराग्रहगिरिसागरादीनां क्षयो भवन्नस्ति नवानामुदयश्च। यत् परिवर्तनं स्तोके काले दृष्टिपथन्नानुपतति तदपि दीर्घकाले प्रत्यक्षस्य विषयः सम्पद्यते। एतन्मतं भवेद् यत् कदाचित् एवं स्थितमासीत् यदिमा नीहारिकाः एतानि नक्षत्राणि ग्रहाश्च वर्तमानानि न भवेयुः अपि च पुनः एक एतादृशः समय आयायात् यत्र एतानि सर्वाणि न तिष्ठेयुः। एतौ सर्गप्रतिसर्गौ कथयितुं शक्येते, परन्तु अस्मिन् उत्पत्तिविनाशयोः कापि वार्ता नास्ति। केवलमेकस्माद् रूपादपरं रूपमभवत् भविष्यति च मध्ये कानिचिद-न्यानि वस्तूनि आनेतुं न युज्यन्ते। यद् ऋतं यश्च स्वभावः अत्र परिवर्तनं चेक्रियते तदग्रतः प्रागप्यासीत् अवस्तादपि स्थास्यति च। तेनैवेदं रूपं दत्तम्, अपरं रूपं च तेनैव दास्यते। वयमेतद्वदितुं न शक्नुमः यद् वयं यं सर्गं कथयामः ततः प्राक् किं रूपमासीत्, यं च वयं प्रतिसर्गं ब्रूमः तदनन्तरं किं रूपं भविष्यति, परन्तु एतावत्तु अनुमानं कर्त्तुं शक्नुमः यत् तत् सर्गवद् रूपमपि प्रथमं नासीत्, परिणामस्य फलमासीत्, अपि च प्रतिसर्ग-वद्रूपमपि अन्तिमं न भविष्यति, तस्मिन्नपि परिणामो भविष्यति। स धर्मा कोऽस्ति यस्मिन्नीदृशो धर्मपरिणामो बोभूयते, अयं स्वतन्त्रः प्रश्नोऽस्ति यदुपरि अन्यत्र विचारो भविष्यति। अस्य विचारस्यायं मथितार्थो निष्कीर्णो यद् यद् वयं जगत् कथयामः तत् सदा एकसमं नहि तिष्ठति। रूपं परिवर्तयद् अस्ति, परं तस्य न प्रागभावो भवति न वा प्रध्वंसाभावः, परिणामप्रवाहो निरन्तरं क्षरन्नस्ति। अतस्तस्यात्यन्तिकस्यो विनाशस्य च कल्पना निराधाराऽस्ति।

## ३ यं द्रव्याधिकरणम्

गुणाधिष्ठानं द्रव्यं कथ्यते अर्थात् द्रव्यं तदस्ति यस्मिन् गुणा भवन्ति, यो गुणी भवेत्। यद्द्वारा एकं वस्तु अपरस्माद् व्यावर्तितं भवति, परिचेतुं च शक्यते तद् गुणपदे-

नोच्यते। भाविनि भागेऽस्माभिर्गुणशब्दप्रयोगोऽन्यस्मिन्नर्थे कर्त्तव्योऽस्ति अतो द्रव्यप्रसङ्गे लिङ्गशब्देन वयं व्यवहरिष्यामः। लिङ्गानां नियता काचित् सूची नास्ति। विद्वद्भिः कतिचन बृहत्यो लम्बास्तालिका निर्मिताः सन्ति। आसु तालिकासु शब्दस्पर्शरूपरसगन्धैकत्व-पृथक्त्व संयोग-संख्या-परिमाणाकृतिप्रभृतीनि नामानि मिलन्ति। इदं निश्चितमस्ति यदेषां मध्ये कियतां लिङ्गानां परिचयः कियतां तिर्यक्प्राणिनामपि विद्यते।

लिङ्गानां सूचीदर्शनेनैवेयं वार्ता स्पष्टा जायते यद् वयमिमानि द्वयोर्वर्गयोर्वर्णयितुं शक्नुमः। प्रथमवर्गे शब्दस्पर्शरूपरसगन्धाः सन्ति। एतानि वयं सर्वदा संवित्शब्देन कथयन्तः आयामः। एषामेव सम्बन्धे प्रथमखण्डे प्रथमाध्याये इदं कथितमासीत् यद् विषय इन्द्रियद्वारा चित्ते संविद्रूपेण प्रवेशं करोति। यावत्पर्यन्तं शेषलिङ्गानां वार्तास्ति तेषां ग्रहणाय अस्माकं पार्श्वे किञ्चिदपीन्द्रियं नास्ति। अतस्तेषां संवित् भवति नापि प्रत्यक्षम्। अस्यां दशायां तेषां स्वतन्त्रास्तित्वस्य किञ्चिदपि प्रमाणं नास्ति। तानि बुद्धिनिर्माणानि सन्ति। संवित्सु सम्बन्धं स्थापयित्वा चित्तं तेषां सृष्टिं करोति। यदि कस्यचिन्मनुष्यस्यानुभवे केवलमेको दृग्विषय आयायात् तर्हि तस्य एकत्व संख्या पृथक्त्वसंयोगादीनां ज्ञानं न भवेत्। वामात् वामं द्वे अनुभूती स्यातां तदा तयोर्मेलनेन एते सम्बन्धाः सम्पद्यन्ते यतो हि एषां सर्वेषां शब्दानामर्थाः सापेक्षाः सन्ति। परिमाणम् क्षुद्रताबृहत्त्वे, अल्पत्व-महत्त्वे अपि सापेक्षं भवति। आकृतिर्निरपेक्षा प्रतीता भवति परं सापि वस्तुगता नास्ति याऽऽकृतिः उपरितः समचतुरस्रा प्रतीयेत। सैव दूराद् दीर्घचतुरस्रा प्रतीयते। याऽऽकृतिः उपरितो गोला प्रतीता भवति सैव दूराद् अण्डाकारा सम्पद्यते। प्रभूतं दूरात् द्वे अपि रेखावत् प्रतीते भवतः। एषु वस्तुनः आत्मन आकृतिः का मन्तव्या ?

विचारेण प्रतीतं भविष्यति यद् आकृतिस्तद् गौणं लिङ्गमस्ति यस्या निर्माणं बुद्धिः रूपं स्पर्शं च मेलयित्वा करोति। बुद्धिनिर्माणानि चेतोव्यापारस्य फलानि सन्ति अतो वस्तुगतानि नहि सन्ति। एतदर्थं द्रव्यस्वरूपस्य संबन्धविषयकविचारेऽस्माभिः केवलं शब्दस्पर्शरूपरसगन्धानामुपरि ध्यानं दातव्यम्।

अद्यावधि वयमेतन्मन्यमाना आयाताः स्मः यत् संविदां भवनं बाह्यवस्तूनामस्तित्वस्य

सूचकमस्ति। अयमुपयोगी अभिसिद्धान्तोऽस्ति परमिदानीमस्य समीक्षाया अवसर आगतोऽस्ति। यदि नाडीसंस्थानस्यायमंशो य इन्द्रियाणां बाह्याधिष्ठानैः सह संलग्नोऽस्ति प्रकम्पितो भवति तदा संविदो भवन्ति। अक्ष्णामङ्गुलिभिः पीडनेन, शिरसो भित्त्याघातेन च वयं विविधान् रङ्गयुक्तान् गोलान्, तारकाः, स्फुलिङ्गान् द्रष्टुं शक्नुमः। विद्युतोऽपि एतादृशं प्रकम्पनं कर्त्तुं जायेत। स्वप्ने प्रभूतं दृष्टिपथमायाति, प्रभूतं च श्रूयते। कस्मिंश्चित् कस्मिंश्चित् वायुरोगे नानाप्रकारकाणि चलाचलानि दृश्यानि दृश्यन्ते अथ शब्दाश्च श्रूयन्ते। कस्मिंश्चित् कर्णशूले संगीतं श्रूयते। संवित्स्वरूपसंबन्धात् आसां संविदां पदं कासांचिदन्यासां संविदां पदापेक्षया क्षुद्रं नास्ति। तर्हि पुनः इमाः वस्तुसत्तायाः सूचिकाः स्वीकर्तुं शक्यन्ते किम्? यदि मानितं स्यात् तर्हि जगद्वस्तु भवेत् यतो हि एकतो यस्य जगतोऽनुभवः एकस्या व्यक्तेर्भविष्यति तस्मिन्नेव देशे काले च तस्यानुभवः अपरस्या व्यक्तेर्नहि भविष्यति। पुनः तस्या एव व्यक्तेः कृते जाग्रत् स्वास्थ्यवच्च जगती स्वप्नसंबन्धि रोगसंबन्धि च जगती बाधिते करिष्यतः अथ च स्वप्नसंबन्धि रोगसंबन्धि च जगती जाग्रत् स्वास्थ्यवच्च जगती बाधिते करिष्यतः। यदि वयं कथयेम यद् वयमिमाः संविदो वस्तुसत्तायाः सूचिका न मानयामः तर्हि अमाननाया अस्माकं कोऽधिकारोऽस्ति? यदीदं कथ्येत यद् एताः संविदः स्तोकस्य कालस्य कृते विशेषावस्थास्वेव हि भवन्ति अतोऽमान्याः सन्ति तर्हि अयं प्रश्नो भविष्यति यद् दैर्घकालिकी सत्ता कुतो मान्यतायाः कृते आवश्यिकी अस्ति? यदि केनचिदात्मनो जीवने सकृदेव शर्करा चर्विता तर्हि किं तस्य कृते शर्करायाः स्वादोऽमान्यो भविष्यति अथ च तेन शर्करया अस्तित्वस्य अस्वीकारः कर्त्तव्यः? विशेषावस्थाया अनुभवः कथमस्वीकार्योऽस्ति? नाडीसंस्थानस्य क्षोभ उभयोर्दशयोर्भवति; एकस्यामवस्थायामस्माभिः सूर्यो दृश्यते द्वितीयस्यां-पिशाचः। पिशाचोऽपि तथैव सत्योऽस्ति यथैव सूर्यः। एवं कथं न मान्येत यद् जगति सूर्योऽप्यस्ति पिशाचश्चास्ति? साधारणतो नाडीषु तादृशं कम्पनं नहि प्राप्तं भवति येन पिशाचस्य प्रत्यक्षं भवेत्। विशेषावस्थायां तासु तन्मापतौल्यस्य प्राणसञ्चारो भवति येन प्रेतदर्शनोपयुक्तं कम्पनं भवेत्। अस्यैवं कथनमधिकं साधु भविष्यति यत् शरीरस्य विशेषावस्थास्वेव हि पिशाचश्चक्षुरिन्द्रियद्वारा चित्ते संविद्रूपेण प्रवेशं कर्तुं शक्नोति। साधारणावस्थायां यद् दृश्येत तदेव मान्यञ्चेत् तर्हि पुनः दूरवित्प्रभृतियन्त्राणाम् प्रयोगोऽवैधः स्यात्।

कियतीनां संविदां वस्तुसत्तासूचिकात्वस्यामाननायाः पक्षेऽयं हेतुर्दत्तो भवति यत्ताः सर्वसामान्यो न भवन्ति अर्थात् तस्मिन्नेव देशे काले च सर्वेषां न भवन्ति। परन्तु या अनुभूतिः सर्वसामानी भवति सैव कथं मान्या स्यात्? किं काऽपि माता आत्मनो वत्सस्य

प्रोणनमेतदर्थं त्यजति यत् कश्चिदपरस्तं प्रेमपात्रं न सम्बुध्यते ? प्रभूतानां सूक्ष्माणां गन्धानां, स्वादानां, स्वराणां चानुभवः स्तोकानां लोकानामेव भवति परन्तु अस्माद्धेतोस्तेषां सत्ता अमान्या न भवति। कमलपुष्पस्य रङ्गो दिने कश्चन भवति रात्रौ दीपकस्य प्रकाशे कश्चनापरो भवति। येन रात्रौ फुल्लं दृष्टमस्ति स रङ्गविषये तेषां लोकानां वार्तां कथं मानयेत् यैर्दिने फुल्लं दृष्टमस्ति। येषामपरेषां लोकानां संविदः अस्माकं संविद्भ्यो मान्यतां प्रदास्यन्ति तेषां सत्ताया मत्कृते किं प्रमाणमस्ति ? मत्कृते तु ते लोकाः संविन्मात्राणि सन्ति। मम "ट" इत्यस्य संविद् बोभूयते, "क ख गा" नामेवं संविदो नहि बोभूयन्ते। मां लोकाः कथयन्ति यत् त्वमात्मनः संविदां विश्वासं मा कार्षीः यतोहि क ख गास्तत्समर्थनां नहि कुर्वन्ति। परन्तु मत्कृते तु क ख गा अपि संविद इव विद्यन्ते। अहं कथमात्मनस्तासां संविदां विश्वासं कुर्याम् यद्द्वारा कखगानाम् अस्तित्वस्य सूचना मिलति अपि च तस्याः संविदो विश्वासं न कुर्यां या 'ट' स्यास्तित्वस्य सूचिकास्ति ? अस्यैकमेवोत्तरमस्ति। काश्चित् संविद ईदृश्यः सन्ति यासां विश्वसनीयताया अर्थात् वस्तुसूचकतायाः स्वीकारेण अस्माकं व्यवहारे सुविधा भवति। भोगार्थं या चेष्टा क्रियते तस्या नाम व्यवहारोऽस्ति। याः संविदो भोगोपयोगिन्यो भवन्ति ता वस्तुसूचिका मन्यन्ते शेषाणां परित्यागं वयं कुर्मः।

चित्तोपरि एकतः प्रहारो बोभूयते अपरतः संविद उत्तेष्ठीयन्ते। तस्य दशा तस्य रश्मेः समानाऽस्ति यस्य द्वे शिरसी आकर्षं कुर्वती स्तः। यदि वासनासंविदोः सामञ्जस्यं स्थापितं न भवेत् तर्हि रश्मिः त्रुटितो भविष्यति, चित्तं च अवलितं भविष्यति। सौभाग्येन सामञ्जस्यकरणं कठिनं नास्ति। वासनानां तृप्तिः संविद्भ्यो भवति। एतन्माननं भ्रान्तमस्ति यद् वासनाभिर्भोगाय वस्तु अपेक्ष्यते। कस्य नु कस्य स्पर्शस्य वा गन्धस्य वा रूपस्य वा रसस्य वा शब्दस्य वा स्पृहा ईहा वा संजायते। परन्तु अस्तव्यस्ताभिः संविद्भिः कर्म न चलति। चित्तम् इमा अवच्छिद्य निष्किरति या भोग नुकूला भवन्ति, तासां गुच्छान् संपादयति, एवं ताः पृथक् करोति। इदं वर्गीकरणं चेतोव्यापारोऽस्ति। वस्तुस्थितौ संविद एवंप्रकारेण विभक्ता नहि सन्ति। ताः परस्परं सम्बद्धा नहि सन्ति। संमर्दे शतं मनुष्या यान्तः सन्ति। सर्वे परस्परम् अलग्नाः सन्ति परन्तु पादूकृत् आत्मनः सुविधायै तान् नवोपानत्पादेषु जीर्णपादत्राणेषु, नग्नपादेष्वित्येवं त्रिषु वर्गेषु वण्टयति।

संविदश्चित्ततन्त्रा न सन्ति। कदाचिद् भवन्ति कदाचिच्च न भवन्ति। अतः चित्ते एवं प्रतीतं भवति यत् प्रत्येकं संविदः कश्चिन्नु कश्चिद् हेतुर्भविष्यति, किञ्चिद् भविष्यति यत् संविदमुत्पन्नां करोति। तदत्रैव नहि रुध्यते, इतोऽप्यग्रं गच्छति। चित्तमेवं मत्वावतिष्ठते यद्

यान् संविद्गुच्छान् तदचिनोत् तेषामपि हेतवो भविष्यन्ति, कानिचिद् वस्तूनि भवेयुर्यानि तान् उत्पन्नान् कुर्युः। एषां हेतूनां द्रव्यसंज्ञा कृता भवति। सुविधायै प्रत्येकं द्रव्यस्य नामकरणं कृतं जायते; परमेतत् सिद्धमस्ति यद् द्रव्यमवस्तस्वस्ति तस्य काचित् सत्ता नास्ति। संविदां कृत्रिमगुच्छानां हेतुरपि अलीकं बुद्धिनिर्माणमात्रमेव च भवेताम्।

एकमुदाहरणं अवधार्यम्। वयं कथयामः यद् दुग्धमीदृशं द्रव्यमस्ति यत्र मिष्टः स्वादः, श्वेतो रङ्गः तरलतादीनि लिङ्गानि प्राप्तानि जायन्ते। प्रथमा वार्त्ता तु इयमस्ति यत् एतानि लिङ्गानि संविदोऽभिन्नानि सन्ति। मिष्टः स्वादः संविदस्ति, श्वेतो रङ्गः संविदस्ति, तरलः स्पर्शश्च संविदस्ति। यदि चित्तं न भवेत् तदा न स्वादो भवेन्न रङ्गो नापि स्पर्शः। तर्हि पुनर् दुग्धस्य सर्वाणि लिङ्गानि तु चित्तस्य संविद्विशेषाः सन्ति, लिङ्गानामाश्रयः लिङ्गी च किमस्ति ? निश्चितरूपेण तु एतावदेव कथयितुं शक्यते यद् वयमात्मनः सुविधायै इमास्तिस्रः संविदोऽपराभ्यः संविद्भ्यो भिन्नाः कृत्वा आसां दुग्धमिति नाम दद्मः। अतः मिष्टो रसः + श्वेतं रूपम् + तरलः स्पर्शः = दुग्धम्।

यदा वयमेतत् कथयामः यद् दुग्धं मिष्टं भवति तदैतादृशं प्रतीतं भवति यद् वयं दुग्धनामकद्रव्यस्य कांश्चिल्लिङ्गविशेषान् निर्दिशामः; परन्तु वस्तुतो वयं तासां संविदां मध्यात् यासां समष्टेर्दुग्धमिति नाम दत्तवन्तः स्मः, एकस्योल्लेखं कृतवन्तः स्मः। दुग्धं मिष्टं भवतीति कथनस्य तात्पर्यमस्ति मिष्टो रसः + श्वेतं रूपम् + तरलः स्पर्शः एतत् समुदितं मिष्टं भवति। मिष्टता तु तासु तिसृषु संवित्स्वस्त्येव यासां सम्मिलितानां नाम दुग्धमस्ति, अतो दुग्धं मिष्टं भवतीति कथनेन अस्माकं ज्ञाने काचिद् वृद्धिर्नहि भवति। एतेन सिद्धमस्ति यदस्माकं संविद्भ्यः पृथग् द्रव्यस्यास्तित्वं नास्ति। इदं बुद्धिनिर्माणमस्ति।

द्रव्यस्य अपरेण प्रकारेणापि परिभाषा कृता जायते। यस्मिन्नवस्थापरिणामो भवति, यत् परिणमते, यच्च परिवर्तनस्याश्रयोऽस्ति, तद् द्रव्यमस्तीत्येवं कथ्यते। अत्र परिणामः, नवतोपेतता, परिवर्तनम्, एषां शब्दानां प्रयोगा विचारे बाधको भवति यतो हि एते सर्वे कस्यचित् परिणामिनो विवक्षां कुर्वन्ति। एतत्सर्वं त्यक्त्वा उदाहरणद्वारा विचारः क्रियताम्। वयं कुण्डलम्, कटकम्, अङ्गुलीयकम्, कृत्तोदरीं च जानीमः, यतोहि एतानि सर्वाणि संविद्रूपेणास्माकं चित्ते आयान्ति; घटः, कर्पराशः, शर्करा, उपला, धूलिः इत्येतेषां संविदो भवन्ति; परन्त्वेतदतिरिक्तधर्मिणः सत्तायां किं प्रमाणमस्ति ? स्वर्णस्य मृत्तिकायाश्चास्तित्वं किमर्थं मन्येत ? एवं कथनं निराधारमस्ति यत् कश्चन द्रव्यविशेषोऽस्ति यः

कुण्डलादिरूपे परिवर्तितो बोभूयते। वयं संविदामेकं गुच्छकं कुण्डलं, द्वितीयं कटकं, तृतीयम् अङ्गुलीयकम् कथयामः। आसां संविदां संतुलनया काचित् समता प्रतीता भवति, काश्चन संविदो वारंवारमायान्ति। अतस्तासु संबन्धं जोडयित्वा चित्तं स्वर्णस्य कल्पनां करोति। एवं कथयितुं शक्यते यत् कुण्डलादिगुच्छेषु याः संविदः समानरूपेण प्राप्यन्ते तासां चित्तेन एकं पृथग् गुच्छं सम्पाद्य तस्य स्वर्णं नाम दत्तमस्ति। एतदनन्तरमिदं कथ्यते यत् स्वर्णं धर्मि अस्ति, कुण्डलादयस्तस्यावस्थाः सन्ति। एतेनापीदं सिद्धं भवति यत् संविद्भ्यो बहिर्द्रव्यस्य सत्ता नास्ति, तद् बुद्धिनिर्माणमस्ति।

वयं प्रथमखण्डे कतिपु स्थलेषु 'वस्तुस्वरूप' शब्दस्य प्रयोगं कृतवन्तः स्मः। अस्याधिकरणस्यान्ते अयं परिणामो निष्किरति यत् संविद्भ्यः पृथग् वस्तु नास्ति नापि वस्तुस्वरूपस्य प्रश्न उत्तिष्ठति।

# ४ र्थं भूताधिकरणम्

द्रव्याणां यावत्यः सूच्यो मिलन्ति तासु महाभूतानां भूतानां वा नाम विद्यते। कश्चन भूतमेकं मन्यते, कश्चन पञ्चानां भूतानां सत्तां स्वीकरोति। भूतं तदस्ति यद् इन्द्रियद्वारा चित्ते संविदमुत्पन्नां करोति। भारतीयैर्विद्वद्भिर्भूतानां संख्या नाम्नामङ्गभूतेव एतावत्पर्यन्तं सम्पादितास्ति, यत् यदि योरोपीय 'मैटर' शब्दस्य कृते पर्यायो लिखितो भवेच्चेत् तर्हि पञ्चभूतसंज्ञायाः प्रयोगः कृतो जायते। जैनाचार्याणां पुद्गलशब्दः प्रायेण 'मैटर" समानार्थकोऽस्ति, भूतस्यैकः पर्यायस्तत्त्वशब्दोऽप्यस्ति, परन्तु अस्य तेषाममिश्रणां पदार्थानां संज्ञायै पार्थक्येनोपन्यासो युक्तो भविष्यति ये हि रासायनिकक्रियायामङ्गीभूता भवन्ति। भूतानां नामानि क्षितिः, आपः, तेजः, वायुः, आकाशश्च सन्ति। क्षितेः पञ्चप्रकाराणां संविदाम्, अद्भ्यो गन्धभिन्नानां शेषाणां चतुर्णां, तेजसो गन्धरसरहितानामन्येषां त्रयाणाम्, वायोः स्पर्शशब्दयोः तथाकाशात् केवलं शब्दस्य संविदोऽनुभूतिः मन्यते। क्षितेरर्थस्य मृत्तिकायाः तस्याः प्रस्तरादिभिरस्य च, अपां जलस्य, तेजसोऽग्नेः, वायोः पवनस्य एवम् आकाशस्य क्षितिजात् क्षितिजं यावत् प्रसृतस्य नीलस्य वितानस्य यद्वा पवनादपि प्रतनुतरस्य कस्यचित् तरलस्य पदार्थस्य मननमशास्त्रीयमस्ति। एतत्स्मृतिपथे रक्षणीयं यद् भूतानि दिग्वर्तीनि भवन्ति अर्थात् दिशि स्थानम् आवृण्वन्ति।

रासायनिकप्रयोगैरेतद् दृश्यते यत् प्रायेण नवतिः षण्णवतिर्वा ईदृशाः पदार्थाः सन्ति ये पांपरस्परं सम्मेलनेन तानि सर्वाणि वस्तूनि सम्पद्यन्ते यानि सामान्यत इन्द्रिय-

ग्राह्याणि सन्ति । इमानि तत्त्वानि कथ्यन्ते । तत्त्वानि अमिश्राणि सन्ति, यतो हि एषां रासायनिकविश्लेषणेन एतन्मध्यात् पदार्थान्तरं न मिलति । एतत् सम्भवेत् यद् उपरिष्टात् गत्वा एतन्मध्यादपि किञ्चिन् मिश्रं सिद्धं जायेत, तदा तेषां नामानि तत्त्वसूचीभ्यो निष्कीर्णानि भविष्यन्ति । । एतदपि सम्भवेत् यदेतादृशा अभ्युपाया उपलब्धा भवेयुः यैरेकतत्त्वादपि तत्त्वान्तराणि सम्पद्येरन् । तत्त्वं सा सामग्री अस्ति यतः समस्तमिन्द्रियग्राह्यं जगत् सम्पन्नमस्ति । मृत्तिका, पर्वतः, जलं, पवनः, ओषधिः, प्राणिनां शरीराणि, खनिजास्तथा ग्रहनक्षत्राणि सर्वमपि एभ्यस्तत्त्वेभ्यः सम्पन्नमस्ति । तत्त्वानां मिश्रपदार्थानां च समुदायस्य नाम क्षितिरस्ति । ईदृशानि कतिचन तत्त्वानि मिश्राः पदार्थाश्च सन्ति येभ्यः पञ्चप्रकाराणां संविदां साधारणत उपलब्धिर्नहि भवति परन्तु एवं मननमसमीचीनं नह्यस्ति यत् प्रत्येकस्मिन् प्रत्येकं प्रकारस्य संवेद्यता तिष्ठति । पवने एवं न रसोऽस्ति नापि रूपं परन्तु वैज्ञानिकैरुपायैः स सान्द्रः संपादयितुं शक्यते । तस्यामवस्थायां सा रूपरसयुक्तत्वेन प्रतीता भवितुं लगति । इत्थं प्रभूतेषु वस्तुषु गन्धो नहि मिलति । इदमस्माकं नासिकायाः सम्पन्नतायाः फलमस्ति । कुक्कुराणां तथा कतीनामन्येषां प्राणिनाम् ईदृशानां वस्तूनां गन्धस्यानुभूतिर्भवति यानि साधारणतो मनुष्याणां कृते निर्गन्धानि सन्ति ।

तत्त्वस्य सर्वतः क्षुद्रतमं त्रुटितकं परमाणुः कथ्यते । परमाणोः क्षुद्रताया अनुमानम् उपरिष्टादङ्कैः कर्तुं शक्यतेः—परमाणोर्व्यासार्द्धम् = $\frac{१०^{-८}}{२.५४}$ इञ्च

( = १ इञ्चस्य प्रायः १ खर्वतमो भागः ) आर्द्रजनतत्त्वस्य परमाणोर्गुरुत्वम् = १.६५ $\times$ १०$^{-२४}$ ग्रामः ( १ ग्रामः प्रायेण =८$\frac{१}{३}$ रक्तिकाः )

एतस्येदं तात्पर्यमस्ति यद् एकस्यां रक्तिकायाम् आर्द्रजनस्य यावन्तः परमाणवः सन्ति तेषां संख्याया निर्देशार्थं सप्ताङ्कचिह्नलेखनानन्तरं षड्विंशतेः शून्यानां लेखनमापद्यते । अस्माभिः आर्द्रजनस्य परमाणोर्गुरुत्वं दत्तमस्ति । सर्वेषां तत्त्वानां परमाणूनां गुरुत्वानि तुल्यानि न भवन्ति । आर्द्रजनः सर्वतो लघुको भवति । परमाणुरूपेणैव तत्त्वानि रासायनिकक्रियासु सम्मिलितानि भवन्ति । परमाणूनां मेलनात् परं तत्त्वसमूहो मिश्रद्रव्याणि च सम्पद्यन्ते, मिश्रद्रव्याणि तत्त्वसमूहश्च त्रुटित्वा पुनः परमाणवोऽवशिष्यन्ते । परमाणूनां सम्मिलिता संज्ञा आपः सन्ति ।

रासायनिकक्रियासु अविभक्ताः सन्तोऽपि परमाणवो वस्तुतः अविभक्ता नहि सन्ति । तेषां तावत् क्षुद्रकं कलेवरमस्ति परं तदपि क्षुद्रकं जगदस्ति । मध्ये ऋण-विद्युन्मयकणाः, तान्

परितः एकः अधिका वा धनविद्युन्मयाः कणा घूर्णमानास्तिष्ठन्ति सर्वेषां परमाणूनाम् ऋण-धने विद्युन्मयकणौ एकसदृशौ भवतः । कणानां संख्योपर्यैव प्रत्येकं तत्त्वस्य भेदो निर्भरं करोति । इयं विद्युत्कणावस्था तेजः कथ्यते ।

क्षित्यपतेजःसु गुरुत्वं भवति । इतः परं चतुर्थं भूतं वायुरस्ति । वायोः पर्यायः शक्तिरस्ति । विद्युत् , तापः, प्रकाशः, रासायनिकशक्तिः, मांसपेशीनां शक्तिः, पाचनशक्तिः सर्वे वायोर्भेदाः सन्ति । वायुर्गुरुत्वहीनोऽस्ति । पिण्डरूपो वायुस्तेजोरूपधारणं करोति, तेजस्त्रुटित्वा वायुरूपं जायते । पञ्चमं भूतमाकाशमवशिष्यते । तत्सम्बन्धे वयं दिक्स्वरूपा-धिकरणे विचारं करिष्यामः ।

भूतानामिदं विवरणं प्रभूतं संक्षिप्तमस्ति । तेजसो वायोश्च संबन्धे अद्यत्वे विज्ञान यत् किञ्चित् कथयति तदाश्चर्यजनकमस्ति, सम्भवत उपरि गत्वा इतोऽप्यधिकानामाश्चर्यजन-कानां वार्त्तानां प्राप्तिर्भविष्यति । वायोर्भेदेषु विद्युत् सर्वतः सूक्ष्माऽस्ति । सा अद्य यावत् ऋणधनात्मिका द्विप्रकाराऽभिमता आसीत् सम्प्रति ईदृशो विचारश्चलितोऽस्ति यद् विद्युत् केवलम् ऋणात्मिकाऽस्ति, तस्या विभुविस्तारे क्वचित् क्वचिद् रिक्तं स्थानमस्ति । सैवास्माकं धनविद्युतः प्रतीतिर्भवति । विद्युत्कणाः क्षुद्रभौतिकाः पिण्डाः सन्ति परन्तु तेषां व्यवहाराः केषुचित् प्रयोगेषु तरङ्गसदृशा भवन्ति । अन्यतो दिशि विद्युतस्तरङ्गाणां भौतिक-कणोपरि कणसदृशा आघाता भवन्ति अथ च तेषामपि ईदृग्बद्धा मात्रा भवन्ति या भौतिककणविधया विद्युल्लवाः कथयितुं शक्यन्ते । एषां सर्वेषां शोधानां परिणामोऽयमभूद् यद् इदं कथनं कठिनमस्ति यज्जगत आदिमं वस्तु तरङ्गोऽस्ति कणो वाऽस्ति उभयात्मकं वा वर्तते । एकं वैज्ञानिकं मतमेतदस्ति यदिदं जगन्मनःप्रसूतिरस्ति । सम्भावनाया महा-राशिस्तरङ्गितो बोभूयते । एते तरङ्गा एव भौतिकवस्तूनि घटनाश्च सन्ति ।

अद्य यावत् यत्किञ्चित् कथितमस्ति तद् इदानीन्तनवैज्ञानिकस्य गवेषणस्य निष्पत्तिरस्ति । यस्यैतद्विषयेऽभिरुचिर्भवेत् तेनैतत्संबन्धिभौतिकविज्ञानपुस्तकानि पठितव्यानि । इदानीं तेजसो वायोश्च संबन्धे प्रभूतः शोधः कर्त्तव्योऽस्ति । प्रभूतं सम्भवोऽस्ति यद् उपरिष्टाद् शोधो भवेत् तत्फलस्वरूपं वैज्ञानिकमते प्रभूतं परिवर्तनं भवेत् । दर्शनसिद्धान्त उपरिष्टात् भूतविस्ताराधिकरणे दर्शयिष्यते . तत्सीमाभ्यन्तरे विज्ञानस्य यदपि मतं भविष्यति दार्शनिकस्तस्यादरकरणाय कटिबद्धो भविष्यति ।

इदं भौतिकविज्ञानक्षेत्रमस्ति दर्शनस्य निजक्षेत्रं नास्ति । शुद्धदार्शनिकदृष्ट्या आसां वार्त्तानां महत्त्वमिदमेवास्ति यत् एतैस्तत्कथनस्य निदर्शनं मिलति-यद् वयं पूर्वेषु कतिपुचिदधिकरणेषु, विशेषतो द्रव्याधिकरणे साग्रहं कृतवन्तः स्मः ।

वयं क्षित्यप्तेजसां वायोश्च संबन्धे किं जानीमः ? तारा, ग्रहः, गिरिः, सागरः, तत्त्वं परमाणुः विद्युत्कणः, विद्युत्, तापः, प्रकाशः, वायुः, प्राकृतिकनियमः सिद्धान्तश्चेत्येतेषां सत्तायां किं प्रमाणमस्ति ? एषां प्रश्नानामुत्तरमस्ति आस्माकीना संविदिति । वेधालये-प्रयोगशालायां च तीक्ष्णं रूप्यकाणि लगयित्वा सूक्ष्मात् सुसूक्ष्मतराणि यन्त्राणि संपादितानि भवन्तुतराम्, परन्तु तेषामुपयोगोपरि प्रयोक्तुः काश्चित् संविद एव मिलन्ति, नलिकायां पारदमारोहद् दृष्टिमापाद्यत, अमुकयन्त्रे रक्षिता सूची इतस्ततः कम्पिता, प्रकाशस्य बिन्दुरेतावदटित इत्यादि । संविदो भवनं विवादस्य विषयो नास्ति । अस्तु, एतावत् संबोधनीयं यद् आसां संविदां मध्ये ये संबन्धाः स्थापिताः जायन्ते, संविदः किमर्थं कथं च भवन्ति एतत्संबोधनाय या वार्ता आवश्यिक्यः प्रतीयेरँस्ता अवस्तूनि सन्ति । संबोधवान् वैज्ञानिकोऽपि एवमेव मन्यते । स जानाति यत् संविन्मात्रस्य सत्ता तु प्रत्यक्षस्य विषयेऽस्ति परन्तु तदाधारोपरि ये सिद्धान्ता अभिसिद्धान्ता वा उपस्थापिताः सन्ति भविष्यन्ति वा तानि बुद्धिनिर्माणानि सन्ति भविष्यन्ति च । अन्यद्रव्यविषया भूतानां सत्ताऽसिद्धाऽस्ति ।

## ५ म् भूतवादाधिकरणम्

वायुतेजोऽप्क्षितीनां समुच्चयो भूतचतुष्टयं कथयितुं शक्यते । वैज्ञानिकानामयं विश्वसोऽस्ति यद् एषु वायुरादिम रूपं भूतावस्था वाऽस्ति । वायोः स्वरूपं विद्युदस्ति, अथवा इतोऽपि कश्चन सूक्ष्मो भेदोऽस्ति इयं वार्ता शोधापेक्षिणी वर्तते । इदमपि भवेत् यत् शोधन वायोरपि सूक्ष्मतरस्य कस्यचिद् भूतभेदस्य प्राप्तिर्भवेत् । परमेतन्निश्चितं प्रतीतं भवति यत् कश्चिन्नु कश्चित् ईदृशं भूतं भवेत् यस्मात् क्रमेण अपराणि भूतानि निष्कीर्णानि भवेयुः । तन्मूलभूतं कथयितुं शक्यते । एतन् मूलभूतं जगतः सकलस्य प्रपञ्चस्य मूलं मूलावस्था वा स्यात् यस्य ज्ञानमस्माकमत्र संविद्रूपेण बोभूयते । यदि एकतोऽधिकप्रकाराणां मूलभूतानामस्तित्वं वैज्ञानिकदृष्ट्या सिध्येत् तथाऽप्यस्माकं तर्के किञ्चिदन्तरं न संपत्स्यते । मूलभूतस्य स्वभावः परिवर्तनशीलोऽस्ति । तदेतत्स्वभावस्यान्तःप्रेरणयाऽवस्थातोऽवस्थान्तरे परिणतं बोभूयमानम् अद्यैतद् विशालजगतो रूपे आगतमस्ति । परिणामस्तु प्रतिक्षणं भवन्नस्ति परन्तु इयद् शनैः शनैः भवति यत् पूर्वोत्तरावस्थयोः प्रभूतो भेदो नहि भवति । कालं प्राप्य,

एषां क्षुद्रक्षुद्राणां परिवर्तनानां योगोऽस्माकं नवावस्थाया रूपे प्रतीतो भवति। पानीयं यदा उष्णं भवितुमारभते तदाऽस्माकं पानीयरूपेणैव प्रथम प्रतीतं भवति; परन्तु यदा तापवृद्धेः मात्रा सीमाविशेषं यावत् प्रोच्छति तदा पानीयस्य स्थानं वाष्पं गृह्णाति। एवं प्रकारकं क्रमिकं परिवर्तनं 'मात्राभेदात् लिङ्गभेदः कथ्यते'। द्वितीयावस्था प्रथमावस्थायाः प्रतियोगिनी (ततो विपरीता) भवति परन्तु परिवर्तनक्रमस्तत्रैव रुद्धो नहि भवेत्। स परिवर्तनक्रमोऽग्रे वर्धते अथच मात्राभेदात् लिङ्गभेदं प्राप्तस्य तस्य तृतीयस्या अवस्थाया उदयो भवति या द्वितीयस्याः प्रतियोगिनी भवति—अर्थात् प्रथमायाः प्रतियोगिन्याः प्रतियोगिनी भवति। इदमेवं कथ्यते यत् पूर्वावस्था, तत्प्रतिषेधः, प्रतिषेधस्य प्रतिषेधः—अनेन क्रमेण अवस्था-परिणामस्य प्रवाहो निरन्तरं चरन्नस्ति। याऽवस्था प्रतिषिद्धा भवति सा सर्वथा नष्टा न भवति, स्वप्रतिषेधके आत्मनः संस्कारं हित्वा याति। अनया रीत्या प्रत्येकं परवर्तिन्यां प्रत्येकं पूर्ववर्तिनी विद्यमानास्ति। धर्मपरिवर्तनस्य इयं प्रक्रिया द्वन्द्वात्मकप्रक्रिया कथ्यते। परिवर्तनस्य क्रमोऽन्यथाऽपि विचारयितुं शक्यते, परन्तु अवरापेक्षया इयं प्रक्रिया अधिकं पुष्टा विस्तृता चास्ति। अस्य सिद्धान्तरूपेण उपस्थापनस्य श्रेयो मार्क्सस्यास्ति। इदं न विस्मर्तव्यं यन्मार्क्सस्य विचारानुसारं सर्वेषामपि धर्मिणां धर्मपरिवर्तनम् एतत्प्रक्रियानुसारं भवति। मार्क्सेन अस्याः प्रक्रियाया ग्रहणं हीगेलात् कृतमस्ति। भेदोऽयमेवासीत् यद् हीगेल एवं नामन्यत यद् जगत आदिमावस्था कस्माचित् मूलभूतादारब्धास्ति।

मूलभूतस्य सत्त्वस्वीकारं कुर्वन्नेनं मन्येत यदादिमावस्थायां तेन सार्धं सार्धं कीदृग्विधश्चे नः कश्चन द्रष्टाऽप्यासीत। एवं मननं कपिलस्य मतभेदविशेषो भवेत्। परन्तु केचन ईदृशा दार्शनिकाः सन्ति येषां मतमस्ति यज्जगतो मूलं केवलमचेतनं मूलभूतमस्ति। आत्मनः स्वाभाविकनोदनया परिवरीवृत्यमानेन तेन अनेकरूपधारणं कृतम्। तस्य विभिन्नावस्थामध्ये चेतनाप्येकास्ति। परिणामक्रमे प्रभूतं वर्धमाने जाते यदा पृथिव्याः तापमानमत्यन्तमनुकूलमभूत् अथच, नदीसमुद्रप्रभृतयः सम्भ्रममाना अभूवन् तदानीं चतुः पञ्चानां तत्त्वानां मेलनेन ईदृशो मिश्रः पदार्थः सम्पन्नो यस्मिन् चेतनानामकं लिङ्गमासीत्। अनुकूलायां परिस्थितौ यस्य मिश्रस्य पदार्थस्य विकासोऽभूत् सोऽद्यत्वेऽस्माकं वनस्पति-कीटाणु-कीट-पशुपक्षिमनुष्यरूपेण दृष्टिपथं पर्नपद्यते। एषु सर्वेषु चेतनाऽस्ति। यदा तन्मिश्रभूतपदार्थावयवभूतानि तत्त्वानि विकीर्णानि जायन्ते, शरीरं मृतं जायते, चेतना नष्टा जायते। अयं मिश्रपदार्थः यः कार्बन, हाईड्रोजन, अक्सजन, नाइट्रजन, गन्धक फास्फोराणां मेलनेन सम्पन्नमस्ति सत्त्वमूल प्रोटोप्लाज्मेति कथ्यते।

इदं मतं भूतवादः कथ्यते, अचेतनवादोऽपि कथयितुं शक्यते। भारते इदं सर्वतः प्रथमं चार्वाकेण उपस्थापितमासीत्। अद्यत्वे वैज्ञानिकशोधाधारोपरि एतस्य प्रतिपादने स्वभावतः प्रथमापेक्षया अधिकवैज्ञानिकशब्दावल्या व्यवहारो भवति।

वयमधोऽधिकरणे भूतानां सत्तायाः, सम्बन्धे विचारं कृतवन्तः स्मः। बृहन् लोकः विराडा भवेत् मूलभूतं वा स्यात् यद्वा तत् संविस्मृतानां करोति नवा करोति। यदि नहि करोति तदा [illegible] मौलिकं [illegible]। यदि करोति तदाऽस्माकं पार्श्वे तत्सत्तायामेतावन्मात्रं प्रमाणमस्ति। संविदः सन्ति एतन्निर्विवादमस्ति। संविदां मध्ये यः प्रकाररूपः संबन्धः स्थापितः कृतोऽस्ति स बुद्धिनिर्माणमस्ति। अभिसिद्धान्तरूपेण तस्योपादेयताङ्गीकारः कर्त्तुं शक्यते परमियं वार्ता विस्मारिता नहि विधातुं शक्या यत् कोऽपि अभिसिद्धान्तः सिद्धान्तो वा भवेत् तत्सत्ता बुद्धिनिर्माणादधिका नास्ति।

मूलभूतं भूतमस्ति, अतस्तत्सत्तासंबन्धे स एव तर्को लग्नो भविष्यति यदनुसरणमधस्तनयर्द्वयोरधिकरणयोः कृतमस्ति। वयं संविन्मात्रं जानीमः, क्षितिः, आपः, तेजः, वायुः, भूतम्, मूलभूतम्, एतत् सर्वं बुद्धिनिर्माणमस्ति।

भूतवादी कथयति यदादिमावस्थायां मूलभूतमासीत् परन्तु चेतनो नासीत्। एतत् कथनस्य तात्पर्यमिदं जातं यद् दृश्यमासीत् परं द्रष्टा नासीत्। इदमकल्प्यमस्ति। नहि दृश्यं विना द्रष्टा भवेन्नपि द्रष्टारं विना दृश्यं भवेत्। यदि चेतनं नासीत्, अस्मन्नासीत् मूलभूतमपि नासीत् तर्हि युष्मदपि नासीत्। यदि संविदः कोऽपि ग्रहणकर्ता नासीत् तदा संविदो भवितुमेव नहि शक्नुवन्ति स्म। संविद्भ्यः पृथक् भूतसत्ता न भवेत् एतदर्थं तस्यामवस्थायां मूलभूतमपि नासीत्। भूतवादोऽमान्योऽस्ति। जगतो या काचिदप्यवस्था गृह्यतां सा द्रष्टृदृश्यात्मिका भविष्यति। ये लोका भूतवादस्य ग्रहणं कुर्वन्ति ते विज्ञानवादस्यासमीचीनां मीमांसां कुर्वन्ति। ते विस्मरन्ति ( अवहेलन्ति ) यद् विज्ञान येषां कम्पन वेग, विद्युद्, रसायनकयोगादीनुद्दिशति तानि बुद्धिनिर्माणानि सन्ति।

## ६ कार्यकारणाधिकरणम्

कार्यकारणवादस्यायमभिप्रायो, अस्ति यत् प्रत्येकं घटनायाः प्रत्येकं वस्तुनश्च किञ्चिन्नु किञ्चित् कारणं भवति। अस्येदं तात्पर्यमस्ति यत् कोऽपि पदार्थोऽहेतुको निष्कारणः असम्बद्धश्च न भवति इयं कार्यकारणशृङ्खलाऽनादिरस्ति। वयमस्मिन् विषये प्रथमखण्डे विचारं

कृतवन्तः स्मः परन्त्वत्र तस्य विचारस्याधिकं विशदीकरणमुचितं प्रतीतं भवति । यदि द्वयोर्वस्तुने द्वयोर्घटनयोर्वा इयं वार्ता दृष्टा भवेद् यद् एका द्वितीयातो नियतरूपेण प्रथममायाति तदा प्रथममायानवती कारणं पश्चादायान्ती च कार्यं कथ्यते । यदि कार्यकारणनिर्देशस्य एतावदेव तात्पर्यमस्ति यद् अमुकानुभवः प्रथमम् अमुकानुभवश्च पश्चाद् भवति तदा करयाप्यापत्तिर्न भवति । कः, सदा 'ख', तः प्रथममायाति एतत्कथनस्य स्थाने इदं कथ्येत यत् 'कः', कारणमस्ति 'ख', श्च कार्यमस्ति । परं ये लोका एषां शब्दानां प्रयोगं कुर्वन्ति ते केवलं पूर्वापरीभावरूपेऽर्थे नहि ददति, तेषां तात्पर्यमिदं भवति यद् वस्तूनां घटनानां च एकप्रकारको वास्तविकः सम्बन्धोऽस्ति । अयं सम्बन्धः केवलं पूर्वापरीभावरूपो नास्ति । आकाशे प्रथमम् आर्द्रानामिका तारा दृश्यते तदनन्तरं पुनर्वसू परन्तु आर्द्रादर्शनं पुनर्वसुदर्शनस्य कारणं नहि मन्यते । द्वयोः कोऽपि सम्बन्धो नास्ति । आकाशे द्वे अपि युगपद् विद्यमाने स्तः परन्तु पृथिव्या अक्षभ्रमणमेतादृशमस्ति यद् वयं द्वे एकसार्थं नहि द्रष्टुं शक्नुमः । अस्मिन्नुदाहरणे पौर्वापर्यम् आकस्मिकमस्ति अर्थाद् वस्तुगतं नास्ति । परन्तु यत्र वस्तुगतं पौर्वापर्यं भवति तत्रापि एवं भवितुं शक्नोति यत् कार्यकारणभावसम्बन्धो न भवेत् । कर्मठव्यक्तिरग्नौ आहुतिं दत्वा भोजनं करोति परन्तु आहुतिदानं भोजनस्य कारणं नहि कथयितुं शक्यते । एतदर्थं कारणं तदेव कथयितुं शक्यते यत्रनियतपूर्ववर्तित्वेन सार्थं सार्थम् अविनाभावोऽपि भवेत् । यदि द्वयोर्वस्तुनोर्घटनयोर्वा एकं नियतरूपेणायाति प्रथमम् अथ च तां विना द्वितीया न भवेत् तदा तां कारणं द्वितीयां च कार्यं कथयिष्यामः । केवलमविनाभावस्य न मग्रहणं पर्याप्तं नास्ति । द्वयोर्गण्डस्थलयोरविनाभावोऽस्ति परमनयोरेकतरं द्वितीयस्य कारणं नास्ति । दधिसम्पादनात् पूर्वं दुग्धमप्यासीत् कमलस्य पुष्पमप्यासीत् परन्तु दुग्धं विना दधि सम्पद्यते नहि कमलपुष्पं विना तु सम्पद्यते । अतो दुग्धं कारणं दधि तु कार्यं कथ्यते ।

वयं प्रथमखण्डस्य सप्तमाध्याये दृष्ट्वा आयाताः स्मः यत् कारणद्रव्यात् कार्यद्रव्यनामकस्य कस्यचिन्नवस्य वस्तुनः, एवंभूतस्य वस्तुनो यस्य प्रथममभाव आसीत्, उत्पत्तिर्भवति अत्र कतिचन बाधा आपतन्ति । एतन्मानने सुविधा भवति यत् कार्यं बीजरूपेण कारणे प्रथमतो विद्यमानमासीत् । यद्येतं न मन्येन तदा अवस्तुनो वस्तुनः, असतश्च सत उत्पत्तिरभिमताऽऽभवेत् । परन्तु अद्यापि कार्यकरणविषयिकाः सर्वा बाधा दूरं नहि जाताः । पटानां कारणं सूत्रमस्ति यतो हि सूत्रस्य पटेन सह अविनाभावोऽस्ति । तर्हि इदं कारणत्वं किं प्रत्येकं सूत्रेऽस्ति अर्थात् किं प्रत्येकं सूत्रं पटस्य कारणमस्ति ? ईदृश्यां दशायामेकस्मादपि सूत्रात्

पटो मिलेत्, परमिदशं न भवति। सूत्राणि यदा तानवानरीत्या एकेन विशेषेण प्रकारेण संव्यूढानि क्रियन्ते तदा पटः प्राप्यते। तदा किमिदं संव्यूहनं पटस्य कारणमस्ति ? यद्येवं भवेत् तदा लोहसूत्रेष्वेवं संव्यूहनेनापि पटो मिलेत् परमिदमपि नहि भवति। यद्येवं कथ्यते यत् संव्यूढानि सूत्राणि पटस्य कारणं तर्हि एतस्य तात्पर्यमिदाभूत् यद् यत् कारणत्वं प्रथममसदासीत् तत् सूत्रसंव्यूहनयोर्योगेन उत्पन्नमभूत्। इयं तु असतः सदुत्पत्तिर्जाता या चामान्यास्ति। अथ यदि कथयेयं न सूत्रं कारणं नापि संव्यूहनं परं द्वयोर्योगः कारणमस्ति अतः पटस्योत्पत्तिः सतः सदुत्पत्तिरस्ति तथापि नेदं युज्यते, योगपटयोः पौर्वापर्याभावात्। द्वयोर्जन्म एकेन सार्धं भवति। यदि प्रथमं योगस्यानुभूतिर्भवेत् तदा योगः पटस्य कारणं कथयितुं शक्यते। अतः पटस्य कारणं न सूत्रमस्ति नापि संव्यूहनमस्ति नापि सूत्रसंव्यूहनयोर्योगोस्ति। पटस्य जन्म विना कारणं भवति, एवं माननेन स्वपक्षहानिर्जायते।

आसां शङ्कानां निवृत्तिरेवं भवितुं शक्नोति एवं मन्येत यत् प्रत्येकं सूत्रे वस्त्रकारणतास्ति। पटस्तद् द्रव्यमस्ति यस्य लक्षणमस्ति देहस्य संवरणम्। यावान् बृहन् पटो भवति तावन्तं बृहन्तं देहस्यांशं संवृणोति। देहस्य क्षुद्रकं प्रदेशं सूत्रमप्याच्छादयितुं शक्नोति। यस्यामवस्थायां स एवं करोति तस्यामवस्थायां स पटोऽस्ति। संव्यूहनं किञ्चिद् नवं वस्तु नहि सम्पादयति, सूत्रेषु यत् पटरूपं कार्यं प्रथमतो विद्यमानं तिष्ठति तद् व्यक्तं करोति अर्थात् व्यक्तीभावस्यावसरं ददाति। पटः प्रत्येकं सूत्रं सूत्राणां समुच्चये च समवेतमस्ति। एवमपि कथयितुं शक्यते यत् तूलराशिः, सूत्रराशिः, पटः एत एवंभूता धर्मपरिणामाः सन्ति, यदभिव्यक्तौ कर्तनवानयोः क्रिययोः सहायता मिलति। एताः क्रियास्तामवस्थामुत्पन्नां कुर्वन्ति या धर्मपरिणामानामनुकूला भवति।

अस्य विमर्शस्य मथितार्थोऽयं निष्कीर्णो यत् नियतपूर्ववर्तित्वमविनाभावश्च अस्या वार्तायाः सूचके स्तो यत् असतः सत उत्पत्तिर्न भवतीति। यत् कार्यद्रव्यं नव्यो धर्मो वा कथ्यते तत्कारण द्रव्ये धर्मिणि वा प्रथमतो विद्यमानं भवति।

वयं द्रव्याधिकरणे द्रव्यस्य धर्मिणश्च विषये विचारं कृतवन्तः स्मः। तत्रास्माभिर्दृष्टमस्ति यदस्माकं संविद्भ्यो बहिर्द्रव्यस्य धर्मिणो वा काचित् सत्ता नास्ति। कारणद्रव्यमपि संविद्रूपं विद्यते कार्यद्रव्यमपि सविद्रूपमस्ति प्रत्येकं धर्मोऽपि संविद्रूपोऽस्ति। संविदां भवनं सततं वयं मानयन्त आयाताः स्मः, परन्तु तयोर्मध्ये ये सम्बन्धाः प्रतीता भवन्ति ते बुद्धिनिर्माणाः सन्ति। संबन्धजातीयभवनेन कारणकार्यपरम्पराऽपि बुद्धिनिर्माणमस्ति। यदा

वयं कारणकार्ययोर्वार्तां कुर्मस्तदा वयं निश्चितरूपेण एतावदेव कथयितुं शक्नुमो यत् अमुक-संवित् अनुकसंविदः प्रथमं वोभूयमानास्ति ।

वयं प्रथमं कतिवारान् कथितवन्तः स्मो यच्चेतोव्यापारस्य निमित्तं द्रष्टुर्भोगो भवति । यासां संविदां प्रवाहो निरन्तरं चरन्नस्ति तन्मध्ये केचन भोगस्य साधकाः केचन बाधका भवन्ति । ये साधका भवन्ति चित्तं तेषां संग्रहं कर्तुमिच्छति । ये बाधका भवन्ति तान् दूरं प्रचेतुं इच्छति । द्वयोः संविदोरथवा संविदोर्द्वयोर्गुच्छयोरेका सततं द्वितीयातः प्रथममायाति चेत् तदा सा द्वितीयस्याः प्रतीकं चिह्नकं वा सम्पद्यते । भोगो भविष्यति नवेत्यस्य पूर्वाभासो मिलेत् । एवं द्वयोः संविदोरथवा संविद्गुच्छकयोरनुभूतीनां मध्ये या प्रतीक्षा एकविधः क्षोभो वा चित्ते तिष्ठति तदेव तेषाम् अथवा तद्द्रव्याणां येषामिमाः संविदः सूचिका मन्यन्ते मध्यस्थः कार्यकारणसम्बन्धोऽस्ति । संविदोस्तु अनुभूतिक्रमो वर्तते ; एतद्व्यतिरेकेण तासां विविधसम्बन्धतन्तुषु बन्धना चित्तस्य कार्यमस्ति । एवं तच्चित्तं ताः संविदोऽधिकादधिक भोगोपयोगिनीः संपादयितुं शक्नुयात् ।

बौद्धाचार्या यत् प्रतीत्य समुत्पादं कथयन्ति तत् कार्यकारणवादस्यैव भेदोऽस्ति । तदनुसारमस्य जगतः प्रत्येकं वस्तु जीवनस्य प्रत्येकं घटना, कार्यकारणस्य सुदृढविस्तृतानादिशृङ्खलायां बद्धमस्ति, अस्याः शृङ्खलायाः अज्ञानेनैव मनुजो बन्धने पतीत्यते । अस्मिन्नधिकरणे वयं वादस्य सैद्धान्तिकरूपोपर्यैव विचारं कृतवन्तः स्मः । प्रतीत्य समुत्पादस्य निरूपणे यस्य क्रमस्य वर्णनं क्रियते तस्य विवेचना आत्मनः सिद्धान्तप्रतिपादनावसरोपरि अप्रत्यक्षरूपेण स्वतो भविष्यति ।

## ७ मं दिक्स्वरूपाधिकरणम्

महाभूतानां मध्याच्चतुर्णां सम्बन्धे वयं भूताधिकरणे विचारं कृतवन्तः स्मः । पञ्चमं भूतमाकाशमस्ति । आकाशं दिशो नामास्ति । दिशः सम्बन्धे वयं प्रथमखण्डे किञ्चन विचारं कृतवन्तः स्मः । अयं विचारोऽपूर्ण आसीत् । अधुनात्र वयं तत्सूत्रं पुनरपि हस्ते गृह्णीमः ।

आकाशं भूतं बाढं कथ्यताम् परन्तु तस्मिन्नपरभूतानां लक्षणानि नहि मिलन्ति । तद् गुरुत्वहीनमस्ति । तस्य परमाणवो नहि भवन्ति । मध्ये वस्तूनामायानेन आकाशस्य त्रुटितकानां कल्पना कर्तुं शक्यते, परन्तु इदं विभाजनं कल्पनामात्रमस्ति, यतो हि एतेनाकाशस्याखण्डताया विघातो नहि भवति । । आकाशं विभाजकवस्तूनां पर्वणि पर्वणि

विद्यमानमस्ति, प्रत्येकं परमाणोरभ्यन्तरेऽस्ति । इयमखण्डताऽपि आकाशस्य विशेपलक्षमस्ति । तस्य अपरवस्तुभिरन्योन्याभावो नहि भवति । यत्रान्यानि वस्तूनि वर्तन्ते तत्राकाशो भवति, यत्राकाशो वर्तते तत्रान्यानि वस्तूनि वर्तेरन् । अन्यभूतानामवकाशप्रदानमाकाशः करोति, स्थानं ददाति, परन्तु आकाशमाकाशे विद्यते ईदृक्कथनस्य कश्चनार्थो नास्ति । साधारणत आकाशस्य ज्ञानमस्माकं संविद्रूपेण नहि भवति । "साधारणतः, शब्दस्य प्रयोग एतदर्थं कृतोऽस्ति यत् शब्दाकाशयोः एकस्मिन् विशेपेऽर्थे सम्बन्धोऽस्ति । तस्य निर्देशोऽस्माभिः कस्मिंश्चिदपरेऽध्याये करिष्यते । परन्तु एवमस्माकं शब्दसंविद उपलब्धिः नैतवस्तुभ्य एव भवति । सर्वाणि भौतिकवस्तूनि आकाश एव भवन्ति । सर्वा भौतिक घटना आकाश एव घटिता भवन्ति अत आकाश षष्ठ भूतं कथ्यताम् परन्तु तद् वाय्वादि चतुर्भूतानां सजातीय नास्ति ।

वयं प्रथमखण्डे दृष्टवन्तः स्मो यच्चित्तपरिणामः कालगतो भवति परन्तु भौतिक घटनाः दिक्कालोभयावच्छिन्ना भवन्ति । तत्रैवास्माभिरेतदपि दृष्टमस्ति यद् व्यावहारिक कालो दिशि वास्तविककालस्य प्रतिक्षेपोऽस्ति अतः स दिश एव एका दिशा मन्येत । तस्मिन् स्थले ईदृशमभिमतमासीद् यद् दिशः पारमार्थिकी सत्तास्ति । अधुनाऽस्माभिरस्य सिद्धान्तस्य विवेचना करणीया भविष्यति ।

अस्माकं दिशः प्रत्यक्षं नहि जायते । ईदृशी काचित् संविन्नास्ति या दिशः संवित् कथ्येत । वयं वस्तुषु आयतननामक लिङ्ग प्राप्नुमः, अर्थात् वस्तुषु लम्बता, विस्तारः, उच्चता च भवन्ति यतो हि अस्माकं प्रत्येकं वस्तुनीदं लिङ्गं मिलति अतो बुद्धिरेव मन्यते यद् आयतनम् अर्थात् तिसृषु दिक्षु स्फारो वस्तूनां स्वगतलक्षणमभूत्वा तदुपरि केनचिदन्येन पदार्थेनारोपितोऽस्ति । चतुष्कोणे पात्रे दुग्धं, पानीयं, मदिरा, पारदं वा यः कश्चन द्रवः पदार्थः पतिष्यति स चतुष्कोणः प्रतीतो भविष्यति, गोले पात्रे यः पदार्थो भरितो भवति तस्याकृतिर्गोला दृष्टिपथे पतिष्यति । एतेन इदं कथ्येत यत् चतुष्कोणता गोलता वा पात्रेऽस्ति नहि तस्मिन् भरिते वस्तुनि । इत्थं यदा सर्वाणि वस्तूनि तिसृषु दिशासु स्फारितानि दृश्यन्ते तदा बुद्धेरेवं प्रतीतं भवति यत् किञ्चिदस्ति यत् तिसृषु दिशासु स्फारितमस्ति । सर्वाणि वस्तूनि तस्मिन् सन्ति अतः तिसृषु दिशासु स्फारितानि प्रतीतानि भवन्ति । इदं किञ्चिद् दिक् कथ्यते, तिसृषु दिशासु स्फारणातिरिक्तम् एतद्विषये अपरं किञ्चित् प्रतीतं न भवति ।

किञ्चित्सरलरेखोपरि हस्तं व्यापारयतु, किञ्चित्समतलोपरि, यथा पत्रपृष्ठोपरि, किञ्चिद्घनवस्तूपरि, यथा पिहितमञ्जूषोपरि हस्तं स्फोरयतु । मञ्जूषायाः कापि कोटिः सरल-

रेखायाः अथ च तद्विधानं तत्पदतलं वा चतसृणां मध्ये कापि भित्तिर्या सर्वं समतलमस्ति। सरलरेखोपरि एकप्रकारकः स्पर्शो मिलति, समतले यत्र यत्र कोणोपरि एकस्या अपरस्या रेखाया उपरि यामो द्वितीयप्रकारकः स्पर्शो भवति, पुनः सरलरेखावान् स्पर्श आयाति, घने वस्तुनि कतिचन कोणा आयान्ति, कतिवारान् स्पर्शः परिवर्तते। गोले वस्तुनि कोण न भवन्ति पुनरपि स्पर्शः परिवर्तते। स्पर्शेषु य एवंप्रकारका भेदाः प्रतीता भवन्ति तान् वस्तूनां लम्बतादिनाम्ना अर्थात् दिशः दिशाभेदादिनाम्ना व्यक्तीकुर्मः। वयं प्रथमं दृष्टवन्तः स्मो यद् द्रव्यं बुद्धिनिर्माणमस्ति। संविदश्चित्ते भवन्ति। स्पर्शसंविद् एतद्भेदाधारोपरि बुद्धिनिमितवस्तुषु प्रतीतं भवद् आयतनं लिङ्गम् अथ च तदाधारोपरि कल्पिता दिक् च बुद्धिनिर्माणमस्ति। यदि शरीरेण स्पर्शो न क्रियेत स्तदा वस्तुनो दर्शनार्थम् अक्षिव्यापारः कर्त्तव्यो भवति। तदुपरि अक्षिचालनेन कतिविधा रूपसंविदः अपि च पुत्तलिकानां कम्पनेन मांसपेशीनामुपरि आयासेन कतिविधाः, स्पर्शसंविदो मिलन्ति। श्रमः कर्त्तव्यो भवति। ईदृश्यां दशायामपि संविद्वैषम्याधारोपरि बुद्धिर्दिशो निर्माणं करोति।

अस्माकं वस्तुषु दूरतायाः प्रतीतिर्भवति, एतेनापि दिशः कल्पना क्रियते। दूरताया अनुपातं वयं तस्मात् कालात् अथवा तस्मात् श्रमात् कुर्मः यद् एकस्मात् अपरं याव गमने लगति। यत्र पादभ्यां न चलामः तत्र एकस्मात् अपरां दिशं शिरो घूर्णयस्मो अक्षि-चालयामो वा। एवमपि दिशः सिद्धिर्न भवति। वस्तुनः सत्ता संविन्मात्रं यावत् परिसीमितास्ति, एतदस्माभिर्दृष्टमस्ति। आत्मनः प्रज्ञानानां यानुभूतिर्भवति स कालोऽस्ति, ईदृशं प्रथमखण्डस्य षष्ठाध्याये प्रतिपादितमस्ति। संवित्कालौ चित्ताभ्यन्तरे स्तः। चलनं चलनस्य श्रमं च वयं संविदो रूपे जानीमः। शिरःकम्पनस्यापि संविदो रूपे एव बोधो भवति। अक्ष्णश्चालनमपि रूपमात्रं श्रममात्रञ्चास्ति। अतो या वस्तूनां दूरता कथ्यते, सा संवित्सु संबद्धाऽस्ति। यथा वस्तूनि बुद्धिनिर्माणानि सन्ति तथा तद्दूरताधारोपरि कल्पिता दिक् बुद्धिनिर्माणमस्ति।

अस्माकमेतत् प्रतीतं भवति यद् दिशः सत्ताऽसंदिग्धा अस्ति यतो यत्र किमपि वस्तुन भवति तत्र रिक्तदिशोऽनुभूतिर्भवति। एवं प्रतीतं भवति यद् द्वयोर्वस्तुनोर्मध्ये रिक्ता दिगस्ति। उपरि दृष्टिदानेन एवं प्रतीतं भवति यत् तारा एकस्मिन् विस्तृते विताने जटिताः सन्ति। यत्र तारा न सन्ति तत्रापि इदं वितानमस्ति। इत्थं पवनपारदर्शकभवनेन वस्तूनां मध्ये किञ्चिन्न दृश्यते परन्तु इदं 'किञ्चिन्न', ईदृशमस्ति यत्र नवानि

वस्तूनि आयातुं शक्नुवन्ति । इत्थं चित्तेऽयं विचार आयाति यत् चतुर्दिश इदं 'किञ्चित,' इदं वितानं स्फारितमस्ति । यत्र यत्र वस्तूनि आगतानि सन्ति तत्र तत्र किञ्चिद् दृश्यते, रिक्तं स्थानं भरितं जायते । परमिदं स्थानं किमस्ति, लम्बता वास्ति आयतनं वा ? लम्बतायाः आयतनस्य च विषयेऽस्माभिर्विचारः कृतोऽस्ति, द्वयोर्वस्तुसूचिकयोः संविदोर्मध्ये या विशेषप्रकारिका अनुभूतयो भवन्ति तदाधारोपर्य्येव वयं लम्बतया आयतनस्य च कल्पनां कर्तुं शक्नुमः । एतदर्थं यदि एकस्य वस्तुनो दर्शनस्य पश्चाद् द्वितीयं वस्तु न दृश्येत तदापि वयं तस्य श्रमस्य स्पर्शस्य वा कल्पनां कर्तुं शक्नुमः यस्य तदनुभूतेः प्रथमं सत्ताऽनिवार्याऽस्ति । एकत्कल्पनाधारोपरि चित्तं सर्वव्यापि रिक्तदिशः कल्पनां करोति । दिशि यत्र वस्तु नहि भवति तत्र वस्तु स्थिते नः सम्भावना विद्यते ।

वयं वस्तूनां दिग्गतभेदान् ऊर्ध्वम्, नीचैः दक्षिणतः वामतः, अन्तः, उपरितलम्, क्षुद्रम्, बृहत् इत्यादिशब्दद्वारा व्यक्तान् कुर्मः । अस्माकं काश्चन संविदोऽभूवन्, वयम् कथयामः पुस्तकमस्तीति । काचनापरा संविदभूत् वयम् कथयाम आसन्दी विद्यत इति । अपरास्तृतीयप्रकारिकाः संविदोऽभवन् यासु प्रथमे द्वे संविदौ अन्तर्भूते स्तः, पुनः पुस्तकासन्द्यौ द्वे अपि स्तः । अन्याश्चतुर्थप्रकारिकाः संविदोऽभूवन् आसु प्रथमे द्विविधे संविदौ अन्तर्भूते स्तः, पुनः पुस्तकासन्द्यौ द्वे अपि स्तः, परन्तु तृतीयाचतुर्थ्योः संविदो र्भेदोऽस्ति, द्वे एकसदृशे न स्तः । यदि द्वयोरासन्दीपुस्तकसूचिके संविदौ सदृशौ स्तः तदा तयोर्यो भेदोऽस्ति तं चित्तं सूचितवस्तुषु निक्षिप्तं कृत्वा दिग्गतभेदं मन्यते । एकस्यामवस्थायां पुस्तकं आसन्द्युपरि वर्तते, द्वितीयस्यां आसन्द्यधस्तात् वर्तते । इत्थमपरसंविद्भेदेभ्योऽपरदिग्गतभेदानां निर्माणं भवति । संविद्भेदा भवन्ति एतावत्तु यथार्थमस्ति परन्तु वस्तूनां दिग्गतभेदा बुद्धिनिर्माणानि सन्ति । दिग्द्वारा वस्तुषु संबन्धः स्थापितः क्रियते, परन्तु यदा वस्त्वेव नास्ति तदा संबन्धः कस्मिन् कस्मिन् कीदृशश्च भविष्यति ?

गणितशास्त्रे दिशः प्रभूतं महत्त्वपूर्णं स्थानमस्ति । दिशः सत्ताया अभ्युपगमं विना गणितव्यापारः प्रचलिष्यत्येव नहि । वयमेतस्य खण्डस्य प्रथमेऽध्याये दृष्टवन्तः स्मो यद् गणिते कतीनामलीकानामुपयोगः क्रियते । तेषामलीकानामिदमेकमलीकमस्ति यद् वस्तुनः तस्य लिङ्गानि आहृतानि भवेयुः, अलग्नानि वा कर्तुं शक्यन्ते । गणितं वस्तूनि त्यक्त्वा तेषां केषुचिल्लिङ्गेषु संबन्धं स्थापितं करोति । इदं कथयितुं शक्यते यत् चत्वारि आम्राणि द्वयोराम्रयोर्द्विगुणानि सन्ति, द्व्यङ्गुललम्बस्य द्व्यङ्गुलविस्तृतस्य

द्वयङ्गुलस्थूलस्य वस्तुनोऽपेक्षया चतुरङ्गुललम्बस्य चतुरङ्गुलविस्तृतस्य चतुरङ्गुलस्थूलस्य वस्तुन आयतनमष्टगुणं भवति। संख्या वस्तुनि भवति, आयतनं वस्तुनि भवति। संख्यायतने ईदृशे बुद्धिनिर्माणे स्तः यद्द्वारा संवित्सु संबन्धः स्थापितो भवति। परन्तु गणितशास्त्रं कथयति यद् द्वयोर्द्विगुणाश्चत्वारः संति। चतुःवर्धनाङ्गुलयः, अष्टघनाङ्गुलीनामष्टगुणाः संति। एवं कथनेन संख्यायतनयोः वस्तुभिः सम्बंद्धयाः सम्बधः क्रियते। त्रिभुजाकाराणि चतुरस्राणि, गोलाकाराणि, अण्डाकाराणि वस्तूनि भवन्ति। वस्तुविरहिताकृतिर्न भवेत्। मत्स्याण्डिकायाश्चतुरस्रं खण्डं गृह्यताम्। तस्याः प्रत्येकं कोटिः एका सरला रेखास्ति, परन्तु वयं दृष्टवन्तः स्मः यद् रेखा बुद्धिनिर्माणमस्ति। यदि खण्डरूपा सकला मत्स्याण्डिका निष्कीर्णा स्यात् तदा किमवशिष्येत ? ताः कोटिस्थाः रेखाः। वस्तु बुद्धि-निर्माणमस्ति, तानि परिमितानि कुर्वन्त्यो रेखा बुद्धिनिर्माणानि सन्ति। अत आयतनं बुद्धिनिर्माणमस्ति। गणितमनयोर्बुद्धिनिर्माणयुगलयोरेकं त्यजति, केवलमपरं, यस्य प्रथमतः अलग्ना सत्ता सार्थकता वा नास्ति, गृह्णाति। गणितज्ञः त्रिभुजाद्याकारवन्ति वस्तूनि आत्मनो विषयान् नहि सम्पादयति। स त्रिभुजत्व, चतुरस्रत्व, अण्डाकृतित्वादीनामेवानु-शीलनं करोति। एषु बुद्धिनिर्माणेषु ये सम्बन्धाः स्थापिता भवन्ति ते दिशो लिङ्गानि मन्यन्ते। इदं स्पष्टमस्ति यद् द्रविड़ प्राणायामद्वारा यानि लिङ्गानि प्राप्तानि भवन्ति तानि बुद्धिनिर्माणानि सन्ति यतो हि वस्तूनि बुद्धिनिर्माणानि सन्ति। संख्या, आयतनम्, परिमाणं, सर्वं बुद्धिनिर्माणमस्ति, अपि च स्वयं दिगपि बुद्धिनिर्माणमस्ति। एकाऽपरा वार्ताऽस्ति। गणितशास्त्रमपि दिशमखण्डां मन्यते। यदा दिगखण्डाऽस्ति तदा तस्यास्त्रुटितकानि नहि भवेयुः। चतुरस्राया, गोलायाः, त्रिभुजाकृतेश्च दिशोरितत्वं नास्ति। अय सर्वो दिग्विभागो ऽलीकोऽस्ति। परन्तु गणितज्ञ एषामलीकानां लिङ्गानाम् अलीकानां संबन्धानां च अन्वेषणं करोति अपि चैतत् गवेषणाधारोपरि अविभाज्यदिशो लिङ्गानां निर्णयं करोति। एतत्सर्वं बुद्धिनिर्माणमस्ति परन्तु एतद् विना दृग्विषयाणाम् अर्थात् संविदां सम्बन्धाः सम्बोधे नायन्ति।

गणितशास्त्रं गतेरनुशीलनं कृत्वापि दिशो लिङ्गानां परिचयं प्राप्नोति, परन्तु गतेरा-कुञ्चनप्रसारणे यावन्तो भेदाः सन्ति तेषां तथ्यं किमस्ति ? एकं वस्तु एकस्मिन् स्थाने प्रतीतं भवति, पुनरपरस्मिन् स्थाने, एतद् वयमिदं कथयामः यद् इदं स्थानान्तरितमभूत्। द्वयोः स्थानयोर्मध्ये दूरतास्ति। वस्तुनः प्रथममेकस्मिन् स्थाने, पुनश्च अपरस्मिन् स्थाने दर्शनं चित्तमेवं सम्बुध्यते यत् तस्मिन् गतिरभूत्, एतस्या गतेः कारणात् तत् स्थानपरिवर्तनं कर्तुं

मशकत् । अस्माकं गतेः प्रत्यक्षं नहि भवति, गतिसूचिका काचित् संवित् पृथग् न भवति। वस्तुन एव प्रत्यक्षं भवति । तस्मिन् स्थानान्तरिते जाते बुद्धिर्गतेः कल्पनां करोति अपि च स्थानानां मध्यवर्तिनीं दूरतां तथा कालं च मेलयित्वा गतिवेगस्य गणना क्रियते । गणितज्ञो वस्तु जहाति, दूरतां, कालं गतिं चाददाति ।

वयमस्मिन्नेव प्रकरणे दृष्टवन्तः स्मो यद् लम्बता दूरता वा बुद्धिनिर्माणमस्ति । संविदो भवन्तीति परं निर्विवादमस्ति । यथा द्वयोः स्थानयोर्द्वयोर्वस्तुनोः संविदो भवन्ति तथैव द्वयोः स्थानयोरेकस्य वस्तुनः संविद् भवेत् । क्रमागतयोर्द्वयोः संविदोर्यत् सादृश्यमस्ति तदाधारोपरि वयं ते एकस्य वस्तुनः सूचिके मन्यामहे, यद् वैषम्यमस्ति तदाधारोपरि स्थानान्तरित-भावस्य कल्पनां कुर्मः । एषु बुद्धिनिर्माणेषु संबन्धरूपा या गतिरारोपिता भवति अपि च गत्याधारोपरि दिशो येषां लिङ्गानां परिचयो मिलति, तेषां सत्तापि बुद्धिनिर्माणमात्रमस्ति ।

विज्ञानोन्नतिफलस्वरूपं नवानां यन्त्राणां निर्माणं भवति । तानि यन्त्राणि अस्माकं जगतो विस्तारं वर्धयन्ति, अस्माकमनुभूतिक्षेत्रे नवीनानि वस्तूनि आनयन्ति । साधारणो मनुष्य आत्मनोऽक्ष्णा त्रीणि सहस्राणि ३००० तारका एकस्मिन् समये पश्येत् । अद्यत्वे यन्त्राणां साहाय्येन इदं कथ्येत यत् ग्रामात् ग्रामं १० ११ नीहारिकाः सन्ति यासु प्रत्ये-कस्मिन् ग्रामात् ग्रामं * १० ११ ताराः सन्ति । एतस्य तात्पर्यमिदमभूद् यत् तारकाणां संख्या ग्रामात् ग्रामम् १० २२ एतावत्यस्ति । एषामङ्कानां लेखनाय द्वाविंशतिः शून्यानि दातव्यानि भविष्यन्ति । पुराणानां ज्योतिषिणां तासां स्तोकानां ताराणां ग्रहाणां च गति-विधिः सम्बोध्य आसीत् या अक्ष्णा दृश्यमाना आसन् । अद्यतश्चतुः पञ्चशतानि वर्षाणि पूर्वं यावत् यानि यन्त्राणि समपन्नान्यासन् तेषांशक्तिरधिका नासीत्, एतदर्थं जगतो विस्तारः प्रभूतं नावर्धत । तदनुशीलनं कृत्वा न्यूटन आकर्षणसिद्धान्तं निष्कृष्टवान् । स उपादिशत् यत् प्रत्येकं भौतिकं वस्तु प्रत्येकमपरं भौतिकं वस्तु आत्मनो दिशमाकृष्टं करोति । स इदं पारस्परिकमाकुञ्चनं मापयितुं सूत्रमपि उदभावयत् । अद्यत्वे आकर्षणसिद्धान्तः अपूर्णः प्रतीयते । एवमवबुध्यते यद् नीहारिकाः परस्परादपसरन्ति । यदि द्वयोर्नीहारिकयो-र्मध्ये एकस्य मीगापारसेकस्य दूरता भवेत् तदा ताः परस्परं नागा क्षेभूतात्मककीलो मिटराणि†

* दश स्वेन दश वारं गुणित सम सेन १०¹¹ इति लिख्यते । अर्थात् १०¹¹ = १० × १० × १० × १० × १० × १० × १० × १० × १० × १० × १० । एवं १०²² आदीन्यपि।

† एक किलोमीटर = प्रायशः ११०० गजामि गजंति प्रसिद्धं लम्बत्वमापकं पाश्चात्यं प्रमादण्डम् ।

प्रतिसेकण्डं ( ५२८ किलोमिटर प्रति सेकण्ड ) वेगेन दूरं धावन्त्यः प्रतीता भवन्ति। अयं नव्यप्रकारकोऽनुभवोऽभवत् । यद्याकर्षणसिद्धान्तः सत्यो भवेत्तदा नीहारिकाः क्रमशः पार्श्वम् आयायमाना भवेयुः। अद्यत्वे एवं मंमन्यमानं भवति यद् भौतिकवस्तुषु द्वे विरोधिन्यौ शक्ती कर्म कुर्वत्यौ स्तः। यौगपद्येनाकर्षणविकर्षणे भवतः। इदं बह्वीनां परिस्थितीनामुपरि अवलम्बते यत् द्वयोः कतरा बलवती संपत्स्यते। नीहारिकाणां मध्ये नक्षत्राणि, सौरमण्डलाभ्यन्तरे ग्रहोपग्रहाः, पृथिव्या उपरि क्षुद्रा बृहन्तश्च ये पिण्डाः सन्ति तान् सर्वान् आकर्षणमवस्तम्भते एवं चेन्नाभविष्यत् तदा एकोऽपरस्मात् कदैव दूरमभविष्यत्। अमुतो निहारिका विकर्षणं दूरं चरीक्रियमाणमस्ति अथ च यथा यथा दूरताया वर्धनेन आकर्षणं दुर्बलं पनीपत्यमानमस्ति तथा तथा ता अपरं दूरं चरीकरिष्यति। बोभूयमानतया कदाचिदीदृशी अवस्थाऽऽयास्यति यद् दूरतावरीवृध्यमाना एतावतो बोभूयिष्यते यद् एकस्या अपरस्या उपरिप्रभावो न पतेत् नापि आकर्षणकर्मकर्तुं शक्नुयात् नापि विकर्षणम्। तदा एवंप्रकारिकाया गतेरन्तो भविष्यति।

जगति विकर्षणशक्तेरन्तर्निवेशमात्रेण गणितस्य कर्म नहि निरवहत्। एवं मननमावश्यकं प्रतीतं भवति यत् पूर्वं दिक् अर्थात् समस्तं भौतिकं जगत् क्षुद्रमासीत्, अद्यत्वे वरीवृध्यते। वृद्धेर्वेगस्यपरिमाणमनया वार्तया ज्ञातुं शक्यते यत् एकार्बुदत्रिंशत् कोट्यात्मक वर्षेषु तस्य व्यासार्धं द्विगुणं बोभूयते। इदानीं व्यासार्धं कियदस्ति इदमिदानीं सम्यक् कथयितुं न शक्यते, परन्तु यस्मिन् समयेदिग्वर्धितुमारभत तदा तस्य लम्बता एकार्बुदषट्कोट्यशीति लक्षात्मकानि ज्योतिर्वर्षाण्यासीत्। यदा नीहारिकाः प्रत्येकं प्रत्येकस्मादेतावद्दूरं भविष्यन्ति यत्तासु नाकर्षणं कर्म करिष्यति नापि विकर्षणम् तस्मिन् समये दिशो वर्धनमपि बद्धं भविष्यति।

एतेऽङ्का इदानीन्तनाः सन्ति, अभिसिद्धान्तोऽपि ऐतत्समयिकोऽस्ति। सम्भवतो नवीनेषु यन्त्रेषु सम्पन्नेषु यद्वा विद्यमानयन्त्राणां सहायतया नवेषु खोजेषु यातेषु एता वार्ताः पुरातना भविष्यन्ति। यथा न्यूटनस्य मते आयिन्स्टायिनेन संशोधनं कृतमस्ति तथैव आयिन्स्टायिनस्य अपि मतस्य संशोधनं कृतं भविष्यति।

एतेषां सर्वेषां विचाराणामाधारभूता नीहारिकाणां गतिरस्ति। गतेरनुमानमनया वार्त्तया भवति यदस्माकं तासां च मध्ये दूरता वरीवृध्यमानाऽस्ति। नीहारिकाणां सत्तायां प्रमाणमेतदस्ति यत् ता अस्मासु सध्यूङ् अथवा यन्त्राणां माध्यमिकतया संविद उत्पन्नाः

कुर्वन्ति। अस्माकं ताभ्यो रूपसंविद उपलब्धिर्भवति। तासां दूरमपसरणस्यानुमानमनया वार्तया भवति यत् तत आयातो यः प्रकाशोऽस्माकं यन्त्रोपरि पतति तस्मिन् किञ्चिदन्तरं प्रतीतं भवति। इदमन्तरमीदृशमस्ति यदित्थमेव सम्बोधे आयातुं शक्नोति अर्थात् एवमेव माननेन ज्ञानपथमायातुं शक्नोति यद् नीहारिका दूरमपसेरस्त्रीयमाणाः सन्ति। निहारिकाणां दूरमपसरणं तदैव सम्बोधे आयायात् यदा विकर्षणस्य शक्तेः सत्ता स्वीकृता भवेत् अपरमिदं मन्येत यद् दिग् वरीवृध्यमानाऽस्तीति। प्रकाशस्य अन्तरस्य मापनया विकर्षणस्य दिग्वृद्धेश्च गणना कर्तुं शक्यते।

नीहारिकाणां सत्ता संविन्मात्रमस्ति, प्रकाशोऽन्तरपातस्यार्थोऽभूत् रूपसंवित्सु वैषम्यम्। अभिमन्यते यत् वैषम्यं शनैः शनैर्वरीवृध्यते परन्तु संविद् वैषम्यञ्चेत्येतद्वयं चित्ते वर्तते। अनयोः संबन्धं संस्थापयितुम् आकर्षण-विकर्षण गतिवृद्ध्यादीनि सर्वाणीमानि बुद्धि-निर्माणानि सन्ति। आत्मनः संविदां परस्परं संबन्धं कर्तुं चित्तं दिशस्तल्लिङ्गानां च निर्माणं करोति।

इयमेव वार्ता तस्य क्षुद्रजगतः कृते प्रयोज्याऽस्ति यद् अस्माकं लघुकाय—भौतिक पिण्डेषु मिलति। परमाणूनां तदभ्यन्तरविद्युत्कणानां गतिविधिं दृष्ट्वा भौतिक विज्ञानेषु दिक्सम्बन्धे काश्च वार्ता मन्तव्या आपद्यन्ति। परन्तु परमाणवो विद्युत्कणाश्च संविदोऽभिन्नाः सन्ति अतस्ते यस्यां दिशि सन्ति तदपि बुद्धिनिर्माणमात्रमस्ति।

यथावत् एते एव शब्दास्तस्या मध्यमदिशः कृते कथयितुं शक्यन्ते यस्यां वयमात्मनः प्राप्नुमः, यस्यामस्माकं जीवनं साधारणतो व्यत्येति। अस्माकं शतानां वस्तूनामनुभूति-र्भवति अर्थात् सततं शब्दादिसंविदो बोभूयन्ते। इमाः संविदः सम्बद्धाः कर्तुं वस्तूनां कल्पना भवति, अनेकप्रकाराणां कम्पनानां तरङ्गाणां च कल्पना भवति अपि चैतदर्थं माध्यमस्य कल्पना भवति। शब्दस्य कृते तु भौतिकमाध्यमाः पर्याप्ताः सन्ति, रूपानुभूति-संबोधनार्थं दिशोऽनेकलिङ्गानां कल्पना कृता भवति यानि गणितशास्त्रस्य विषयाः सन्ति। एतत् कथनमनावश्यकं भवेत् यदेतत् सर्वं बुद्धिनिर्माणमस्ति। यदा दिशोऽभावोऽस्ति तदा "सर्वव्यापक" शब्दो निःसारो जायते अपरं च उपमानस्यासत्त्वात् कस्यापि आकाशवद् विभुत्वकथनं निरर्थकं भवति।

## ८म् मनोराज्याधिकरणम

अस्माभिरस्मिन्नध्याये कियतां महत्त्वपूर्णानां विषयाणामुपरि विचारः कृतोऽस्ति।

यः कश्चन एषामधिकरणानामुपरि गम्भीरतयामननं करिष्यति तस्य चित्ते स्वभावतः अयं प्रश्न उत्थास्यति यद् जगति किमवशिष्टं यद् बुद्धिनिर्माणं नास्ति ? इदानीमस्मदंशस्य विषये किञ्चिन्नहि कथितमस्ति परन्तु ईश्वरः, भूतचतुष्टयम् , मूलभूतं , दिक्, कार्यकारणशृङ्खला, गतिः, एतत्सर्वं यर्हि मनः प्रसूतिरस्ति तर्हि पुनः जगतो युष्मदंशोऽवशिष्टं किमस्ति ? आत्मनः शरीरस्य सत्ताऽपि तु अस्माभिः संविदाधारोपरि मन्यते । तत् संविद्भिन्नं नास्ति । अपरेषां जीवानां सत्ताया एकमात्रं प्रमाणमपरशरीराणां चेष्टाः सन्ति । परमेतानि अपराणि शरीराणि मत्कृते संविद्भिन्नानि अन्यानि कानि सन्ति ? तर्हि पुनः मदतिरिक्ता अपरे जीवाः, अपरे चेतना वा सन्तीत्यस्यापि तु किञ्चित् प्रमाणं नास्ति। दर्शनस्य विद्यार्थी एतन्मत्वा प्रातिष्ठत यत् तस्य चित्ताद् बहिः विशालं जड़चेतनात्मकं जगदस्ति यस्य कश्चन कश्चन परिचयस्तस्य आत्मनः संविदां द्वारा मिलितो जायते। मननेन एवं प्रतीतं भवति यत् संविद्भ्यो बहिः अस्य विशालस्य बाह्यस्य जगतः कुत्रापि सत्ता नास्ति। युष्मद्वाच्यः संकुचितो भूत्वा चित्ताभ्यन्तरमागतोऽस्ति तस्य प्रतीयमानं रूपं मनोराज्यमात्रमवशिष्यते।

संविदामुपरि प्रभूतं बृहद्भारोऽस्ति। संविदो भवन्तीति निर्विवादमस्ति परं तासु नानात्वं कथं भवति, अस्मिन् विषये जिज्ञासा भवति। तासां नानात्वोपरि प्रतीयमान जगतो नानात्वं, युष्मदः प्रतीतिश्च, निर्भरे स्तः।

———

# तृतीयोऽध्यायः

## आत्मा

द्वितीयाध्यायस्यान्ते वयमेतत्परिणामोपरि उपस्थिता यत् युष्मत्प्रश्नो मनःप्रसूतिरस्ति। इदानीमस्माभिर्जगतो द्वितीयाङ्गस्य अर्थात् अस्मदः सम्बन्धे विचारः कर्त्तव्योऽस्ति।

अस्मदो विषये विदुषामनेकप्रकाराणि मतानि सन्ति अपि चैतन्मध्ये कियन्ति मतानि पारस्परं विरोधीनि सन्ति परन्तु इयत्तु सर्वेऽपि मन्यन्ते यत् अस्मद्वाच्यश्चेतनः, अर्थात् चेतनाविशिष्टोऽस्ति। चेतनभवनमेव अस्मदः अस्मत्त्वमस्ति। ज्ञातृत्वं, द्रष्टभावस्य सामर्थ्यं वा चेतना कथ्यते। ज्ञातृत्वेन सार्थं भोक्तृत्व कर्तृत्वे अपि विवक्षिते स्तः। चेतनायाः सत्ता निर्विवादाऽस्ति। यो वासनानां संकल्पानां, संविदां चास्पदमस्ति स एव चेतनोऽस्ति। तस्यैतस्य आस्पदभावस्य नाम चेतनाऽस्ति। चेतनस्य कियतां नाम्नां मध्यत एकं नाम आत्माऽस्ति। वयमधुना अनेनैव नाम्ना व्यवहरिष्यामः। अस्मिन् प्रसङ्गे जीवशब्दोऽप्या-याति। तदुपरि पश्चाद् विचारो भविष्यति। आत्मनः स्वरूपस्य सम्बन्धे यानि विभिन्नानि मतानि सन्ति तेषां मध्ये द्वित्राणि विशेषं महत्वं रक्षन्ति। तेषां विवेचनयैव आत्मस्वरूपं सम्बोधे आयायात्।

साधारणमनुष्यस्येयं धारणाऽस्ति यत् स चेतनायुक्तोऽस्ति। स एवं मन्यते यत् तस्य चेतनांशः शरीराद् भिन्नोऽस्ति। तस्य पार्थक्ये जाते शरीरं मृतं जायते; तस्मिन् शब्दादि-संविदां ग्रहणस्य, शीतोष्णानुभूत्योः, रागद्वेषाभ्यामुद्विग्नतायाश्च सामर्थ्यं नावशिष्यते। आत्माऽहमित्यस्ति, अपि च सर्वं चित्, वासना, संकल्पः, संवित्, प्रत्यक्षं

शरीरं च ममास्ति । ममत्वं र्ह्यते वर्धते च, शरीरं क्षुद्रतो वृहद् भवति, तस्य कदाचित् कदाचिदङ्गच्छेदोऽपि भवति; जगति व्यवहारेण, शिक्षया, मननेन च ज्ञानस्य वृद्धिर्भवति, वयोभेदेन तथा बाह्य परिस्थितीनां भेदेन च वासनानां रूपाणि परिवरीवृत्यन्ते, जाग्रत, स्वप्न, सुषुप्तिषु शरीरस्य चित्तस्य चावस्था सदृशी न तिष्ठति । परन्तु एषां सर्वेषां परिवर्तनानां मध्ये 'अहम्', यथायथं तिष्ठति, तस्मिन् काऽपि वृद्धिः, ह्रासः, परिवर्तनं वा नहि भवति । शरीरे यतः कुतो वा आयातः स्यात् शरीरं त्यक्त्वा यत्र कुत्र वा यातः स्यात्, परं यावद् तिष्ठति तावत्पर्यन्तं स्वामी संपद्यते । शरीरं मम शरीरमस्ति, चित्तं मम चित्तमस्ति, शरीरं चित्तं च द्वे 'मम', कृते स्तः, 'मम' भोगस्योपकरणे स्तः । अयम् 'अहम्', किं कीदृशं चास्ति ?

## १ मं देहात्मवादाधिकरणम्

अस्य मतस्यांशिको विचारोऽस्य खण्डस्य द्वितीयेऽध्याये भूतवादाधिकरणे कृतो वर्तते । अस्य कियन्तोऽअवान्तरभेदाः सन्ति परन्तु तेषां सर्वेषां निष्कर्षोऽयमस्ति यद् आत्मा देहस्य धर्मोऽस्ति । कश्चन इदं कथयति यद् देहस्य एकीभूतजीवनक्रियाया नाम जीवोऽस्ति । मनुष्यस्य शरीरे कति कोट्यः क्षुद्रा जीवकोषाः सन्ति । प्रत्येकं जीवकोषः सत्वमूलस्य बिन्दुरस्ति । सर्वे कोषा जीविताः सन्ति । रक्ताभ्यन्तरतः क्षालितं भोजनं तेषामध्यन्तरं याति अथ चेत्थं क्षालितं मलं बहिर्याति । यत्क्रियाद्वारा कोष आत्मानं जीवितं रक्षति अर्थात् भोजनग्रहणं करोति, मलं विसृजति, तापमानं यथायथं रक्षति अपरं च श्वसिति तद् जीवन-क्रिया जीवनं वा कथयितुं शक्यते । एतासां सर्वासां जीवनव्यष्टीनां समष्टिः समस्तशरीरस्य जीवन मिति । एकस्य धान्यस्य तुषे लग्नोऽग्निः श्वासमात्रेण क्षणेनैव नष्टो जायते अपरं तस्य तापमानमपि अत्यन्तं क्षामं भवति । परन्तु तुषाणां राशौ अग्निलगनया तापमानं कतिगुणं वृद्धं जायते । अपिचार्चिदीप्तिश्च चिरं तिष्ठति । अयमेव सम्बन्धः कोषजीवन देह जीवनयोरस्ति । देहजीवनादस्माकं प्रकाशनिभस्य चेतनानामकधर्मस्योपलब्धिर्भवति । कोषाणां विक्षरणेन अस्य लोपो जायते ।

यद्ययं सिद्धान्तः सत्योऽस्ति तदा कोषाणां योगात् प्रथममात्मनोऽभाव आसीत्, अत इदं कथयितुं न शक्येत यद् देह आत्मनो भोग सम्पादनस्य साधनमस्ति । परन्तु देहस्य संघटनं कोषाणामाकस्मिकपुञ्जसदृशं नह्यस्ति । प्रत्येकमवयव. प्रत्येकम् अपरमवयवं ध्याने रक्षित्वा सम्पादितः प्रतीयते । यदा वत्सः गर्भे कललरूपे भवति तत् एवेयं वार्ता स्पष्टा

भवितुमारभते । देहस्य विकासः कस्यचित् पूर्वनिश्चितस्यालेख्यस्यानुसारं भवन् प्रतीयते । हस्तौ, पादौ, मुखम्, उदरम्, फुफ्फुसौ, हृदयं, सुषुम्णा, मस्तिष्कम्, एतत् सर्वं प्रत्येकं परस्परं युगपद् वर्धते, सर्वे इत्थं सम्पन्नाः सन्ति यदेकमपरमपेक्षते। तदैव शरीरमयुतसिद्धावयवसङ्घातोऽस्ति । एकापरा वार्ताऽस्ति । एतत्सङ्घातोपरि दृष्टिप्रदानेनैवेदं विदितं जायते यदयं सङ्घातो भोगोपयोग्यस्ति । नासाक्षिकर्णं वस्तुनः सत्तायास्तत्स्थानस्य च ज्ञानार्थम्, पादौ तस्य पार्श्वं यावद् गमनार्थम्, हस्तौ तस्यादानार्थम्, उदरं तस्य पाक्यर्थम्, नाड्य इन्द्रियाणां मांसपेशीनां च कर्मणाम् एकतन्त्रीकरणार्थम्, रक्तं सर्वत्र भोजनस्य प्रेषणार्थम्—अनया रीत्या सर्वेऽवयवाः परस्परं सहायकाः सन्ति । अपरं च, एतत्सहायतायाः फलस्वरूप भोगसिद्धिर्भवेत् । परन्तु एतत् सर्वमायोजनं कस्य भोगस्य कृतेऽस्ति ? प्रत्येकमवयवे, प्रत्येकं कोषे, यत् "सर्वं" विद्यमानमस्ति येनैतत्सर्वमेकस्मिन् सूत्रे बद्धमस्ति, तदेतेभ्योऽर्वाचीनं न भवेत्, एतेषां योगस्य परिणामोऽपि भवितुं न शक्नुयात् । यदा वत्सस्य शरीरं सत्त्वमूलकः क्षुद्रको बिन्दुरासीत् तदापि अयं पदार्थस्तेन सार्धं बीजरूपेण विद्यमानं भवेत् । अयं बिन्दुरपि जीवित आसीत् । स मातुः शरीराद् भोजनं गृह्णन्नासीत्, मलं त्यजन्नासीत्, क्षुद्रतो बृहज्जातः, तस्येत्थंभूता सन्ततिरासीत् यत्ततः पृथग्भूय बिन्दुद्वयं निष्कीर्णम्, इत्थमेव तद्बिन्दुद्वयस्य सन्ततिपरम्परा चलिता अत्रयावद् यत् तेषां सर्वेषां समूहः अस्मिन् रूप आयातो यत् तं मनुष्यस्य शरीरं कथयितुं शक्नुयाम् । तस्मिन् चेतनाऽऽसीत्, यतो हि शीतोष्णस्पर्शयोः, प्रकाशस्य च तदुपरि प्रभावः पतितुमशक्नोत् । यथा यथा शरीरस्य विकासोऽभूत् तथा तथा चेतनाया अपि विकासोऽभवत् । असतः सन्न जायते । देहस्य प्रत्येकं कोषे यज्जीवनमस्ति तत् सत्त्वमूलस्य तस्य आदिबिन्दोर्जीवनान्निःसृतमस्ति, इत्थं देहे इदानीं या चेतनास्ति सा तस्याश्चेतनाया विकसितं रूपमस्ति या तस्मिन् बिन्दावासीत् । एवं मननेन यत् आत्मा—चेतनपदार्थः—देहस्य मूलरूपेण सार्धमासीत् तस्यैव भोगानुकूलदेहस्य विकासो भवति, अवयवानां विशेषप्रकारेण सम्बद्धता सुगमतया संबोधे आयाति । यथा चेतनोऽस्ति, यादृश्यस्तस्य वासना भाविन्यः सन्ति अपरं तस्यास्तृप्तिः अर्थात् भोगस्य यादृशं स्वरूपं भाव्यस्ति, तादृशमेव शरीरं सम्पद्यते ।

ईदृशमाननया एकापरा आपत्तिर्दूरीभवति । यद्यात्मा जीवनस्य पर्यायो मन्येत अथ चेदं कथ्येत यतकोषसमष्टेः सम्मिलितं जीवनमात्मास्ति तदायं प्रश्नो भविष्यति यत् कोषाणां जीवनानि एकस्मिन् मिलितानि भवन्ति कथम्, अपरं तेषु इयं "अहम्" प्रतीतिः कथं भवति ? यदि कस्मिंश्चिद् जगति प्रभूता मनुष्या एकत्र भवेयुः अथ च मिलित्वा कानिचित्

कर्माणि कुर्वन्तो भवेयुः तदापि तेषां चेतनांशाः परस्परं न मिलन्ति । वयं सुविधार्थं तान् तान् वर्गं, पूगं, कक्षां, सेनां, समितिं यद्वा यत् किञ्चित् कथयेम परन्तु प्रत्येकं व्यक्तित्वमलग्नं तिष्ठति । यः समूहस्य निर्णयः कथ्यते स प्रत्येकं व्यक्तेर्निर्णयो भवति बहुसंख्यकानां वा, परन्तु उभयोर्दशयोः प्रत्येकं व्यक्तिरात्मनः सम्मतिं जानाति । सर्वे एकसदृशमेव कर्म कुर्वन्तो बाढं दृश्येरन् परन्तु तस्य कर्मणः पश्चात् प्रत्येकं पृथक् संकल्पो भवति । कस्यामपि दशायां सामूहिकचेतनाया जन्म न भवति अतः ईदृशमननाय कोऽप्याधारो नास्ति यत् कोषाणां मेलनेन स पदार्थ उत्पन्नो भवति य आत्मा कथ्यते, य आत्मानम् "अहं" कथयित्वा व्यक्तं करोति, यस्य संकल्पैर्वासनाभिश्च प्रत्येकं कोषः परिचालितो भवन्नस्ति ।

देहात्मवादस्यैकं रूपमिदमस्ति यच्चैतन्यं देहस्य धर्मोऽस्ति । यथा विशेषमात्रासु गन्धकस्य, हायिड्रोजनस्य, आक्सिजनस्य च परमाणूनां मेलनेन गन्धकाम्लनामकद्रव्यस्योत्पत्तिर्भवति यस्मिन् एको विशेषप्रकारको नवो दाहकधर्मः प्राप्यते तेनैव प्रकारेण विशेषमात्रासु कार्बनस्य, आक्सिजनस्य, हायिड्रोजनस्य, गन्धकस्य, फास्पर्शस्य च परमाणूनां मेलनेन एकस्य विशेषस्यापूर्वस्य धर्मस्यानुभूतिर्भवति या चेतना कथ्यते । ताम्बूले योऽपूर्वः स्वादोऽस्ति स पत्रे, चूर्णे, खदिरे, पूगे, कस्मिन्नपि वा नास्ति । यदि चेतना सत्त्वमूलस्येदृशो धर्मो भवेत् तदा शरीरस्य चेतनायाश्च युगपद् विकासो भवेत् । इदमपि भवितुं शक्नुयात् यद् अन्यमिश्रद्रव्यविधया रासायनिकप्रयोगशालायाम् सत्त्वमूलानि सम्पद्येरन् तेषु चेतनाया उपलब्धिश्च भवेत् ।

इदं मतं पूर्वमतस्य कियत्काठिन्यं तु दूरीकरोति परन्तु एतेनापि सर्वा बाधास्समाना न भवन्ति । गन्धकस्य सर्वं गन्धाम्लकमेकसदृशं भवेत् । इत्थं मानवं सर्वं सत्त्वमूलमेकसदृशं भवेत्, यतो हि गन्धककार्बनादीनां सर्वे परमाणवः सदृशा भवन्ति अस्यां दशायां मानवसत्त्वमूले एकप्रकारकेण धर्मेण भवितव्यम् । सर्वेषां शरीराणां विकासोऽपि एकया रीत्या भवेत्, सर्वेषु चेतनांशोऽपि एकसदृशो भवेत् । परं नैवं भवति । शारीरिको भेदो यातु नाम, चैत्ता भेदा एव गृह्यन्ताम् । एते भेदा अंशतो देश-काल-शिक्षा-संस्कृत्यार्थिकस्थित्यादिकारणेभ्यो भवन्ति परमेते सर्वे भेदा मिलित्वाऽपि वासनाबुद्धिवैषम्यं पूर्णतया नहि सम्बोधयितुं शक्नुवन्ति । कस्यचित् प्रवृत्तिः शैशवाद् एवारभ्य गणितदिशि भवति, कस्यचित्तु संगीतदिशमनुयाति, कश्चन विचारशीलो भवति, कश्चन युद्धप्रियः । शिक्षादीनां भावाभावाभ्याम् आसां प्रवृत्तीनां विकासस्यावसरो मिलति अथवा बाधाऽऽपतति परन्तु प्रवृत्तिस्तु सहजैव भवति । लक्षेषु प्रयत्नेषु कृतेष्वपि कस्मिंश्चित् प्रतिभाया दूरदर्शितायाः

संयमशीलताया वा सन्निवेशो न भवेत् । यदि चेतना सत्त्वमूलस्य धर्ममात्रमभविष्यत् तदा इदं वैषम्यं नाभविष्यत् । सत्त्वमूलस्य चेतनायाश्च साहचर्यदर्शनेन तु एवं प्रतीतं भवति यदात्मा प्रथमत आसीत्, तस्मिन् वासना योग्यताश्चासन् परं वासनानां तृप्तेर्योग्यतानां चोपयोगस्य अनुकूलसाधनमावश्यकमासीत् । इदं साधनं सत्त्वमूलेन सम्पन्नं शरीरं भवति। यदा यत्र क्वचन तस्य सत्त्वमूलं मिलति तस्मिस्तदा स प्रवेशं करोति । सत्त्वमूलस्य व्यूहनं तस्मिंश्चेतनस्य प्रवेशश्च युगपद् भवतः । एवं मननेन इयं वार्ता सम्बोधे आयात् यद् रासायनिकदृष्ट्या एकमात्रप्रकारके सत्त्वमूले ये चेतनाः प्राप्यन्ते तेषु किमर्थं न्यूनाधिकभेदो भवति । यदि भेदाः प्रभूता भवेयुस्तदा सत्त्वमूलमपि अन्यप्रकारकं भवेत् । इयं वार्ता वैज्ञानिकप्रयोगेण दृष्टिपथमप्यापतति । पशुपक्षिकीटादीनां सर्वेषां शरीराणि सत्त्वमूलेनैव सम्पन्नानि सन्ति परन्तु एषु सत्त्वमूलेषु स्तोकमन्तरं भवति । एकस्य प्राणिनः सत्त्वमूलमपरेण नहि मिलति । ओषधीनां वनस्पतीनां च शरीराणि सत्त्वमूलेनैव सम्पन्नानि भवन्ति एतेनेदमनुमानं भवति यत्तेष्वपि काचिन्नु काचिच्चेतना बोभूयेत ।

वयं पश्यामो यद्देहात्मवादो यथार्थो नास्ति । तस्य मनने कियत्यः बाधा आपतन्ति ! एतदुपरि विचारेण अस्माभिर्विवशैर्भूत्वा इदं मन्तव्य भवति यद् आत्मा देहस्य धर्मो नास्ति परन्तु तस्य स्वतन्त्रा सत्ताऽस्ति या देहयोगात् पूर्वमप्यासीत् ।

देहात्मवादस्य विषये एकयाऽपरया दृष्ट्याऽपि विचारो भवेत् । वयं तद्दिशि द्वितीयाध्यायस्य भूतवादाधिकरणे संकेतं कृतवन्तः स्मः ! तत्रास्माभिर्यत् कथितं तस्य तात्पर्यमिदमस्ति यद् भौतिकत्वाद् देहो दृश्योऽस्ति, अतस्तस्य द्रष्टुरपेक्षास्ति । द्रष्टुः पूर्वं दृश्यं नहि भवेत् । अतश्चेतनात् प्रथमं देहो भवितुं न शक्नुयात् । पुनर्देहस्य सत्ता तावत्पर्यन्तमेवास्ति यावच्चेतनः तं संविद्रूपेण जानाति । देहश्चेतनमवलम्बते अतस्तस्य कारणं भवितुं न शक्नोति । केचन भूतवादिन एवं नहि मन्यन्ते यद् भूतं चेतनोपरि अवलम्बितमस्ति । ते कथयन्ति यद् भूते दृश्यत्वयोग्यताऽस्ति तद् दृश्यं भवितुं शक्नोति परमिदमावश्यकं नास्ति यद् नित्यं दृश्यं भवेत् । यदि चेतनस्य सान्निध्यं भवेत् तदा दृश्यं भवेत्, आत्मनः स्वभावस्यान्तः प्रेरणया अनेकावस्थासु परिणतं बोभूयमानं मूलभूतम् ईदृशीमवस्थां प्राप्तमभूत् यस्यां तस्मिन् चेतना धर्म उदैत् । तदैव तद् दृश्यमभूत् । चेतनाया आयानात् पश्चाद् यः पदार्थः इदानीं यावत् जडभूत आसीत् स ज्ञातृज्ञेयोभयरूपतां गतोऽभूत् । पुनर्देहदेहिनोस्तेन क्रमेण विकासोऽभवत् यस्य रूपरेखा डार्विनस्तदनुयायिनश्चावदन् ।

भूतं द्रव्यमस्ति अतस्तस्य सत्ता चेतनापेक्षिण्येवास्ति । एतत् प्रमाणितं कर्त्तुमस्माभिरधस्तनाध्यायस्य सकलं द्रव्याधिकरणमवतारितं भविष्यति । अयं प्रयासोऽनावश्यकोऽस्ति । संविद्भ्योऽन्यत्र भूतस्य सत्ता नास्ति नापि तस्या दिशः, यस्यामदृश्यावस्थायां भूतस्थितिं भूतवादी मन्यते । जडाच्चेतनोत्पत्तिरपि बुद्धिग्राह्या नास्ति । परमाणूनां योगेन सहस्रप्रकारकाणि मिश्रद्रव्याणि सम्पद्यन्ते अपि चैतेषु नव्यानि लिङ्गानि भवन्ति । परन्तु एषु सर्वेषु एका समानता भवति, एतानि कस्य नु कस्यचिदिन्द्रियस्य विषयीभवन्ति । परस्परं भिन्नानां रूपरसगन्धशब्दस्पर्शानामुदयो भवति परमेते इन्द्रियाणां विषयाः सन्ति । गन्धकाम्ले या दाहकतास्ति सा न गन्धके प्रतीता भवति न हायिड्रोजने नापि आक्सिजने, लवणस्य स्वादो न सोडियमे धातावस्ति न वा क्लोरीनपदवाच्ये ; मृत्तिकातैलस्य दुर्गन्धो न कार्बनेऽस्ति न च हायिड्रोजने नापि आक्सिजने । परन्तु एते सर्वे धर्मा नितान्तमपूर्वा न सन्ति । दाहकता, लावणिकः स्वादः, दुर्गन्धः, स्पर्शरसगन्धानामेव भेदाः सन्ति अथ चैते ईदृशा धर्माः सन्ति ये गन्धकादितत्त्वेषु प्रथमत एव विद्यमाना आसन् । परन्तु चेतना वस्तुतोऽपूर्वाऽस्ति, यतो हि तस्याः संविन्नहि भवति । किमपीदृशमिन्द्रियं नास्ति यच्चेतनाया ग्रहणं कुर्यात् । अहं कस्यापि भूतसंघस्य चेष्टां दृष्ट्वा वाढमनुमानं कुर्यां यदेतदभ्यन्तरे चेतनास्ति यद्यपीदृशानि यन्त्राणि खेलायनानि संपादयितुं शक्यन्ते यानि दूरतः चेतनवदाचरणानि कुर्वन्ति प्रतीतानि भवेयुः परन्तु अनुमानमन्तरा ज्ञातुं चेतनस्यापराणि कानिचित् साधनानि नहि सन्ति । अस्यानुमानस्याधारोऽयमस्ति यत् तस्य सङ्घातस्य चेष्टा मम चेष्टायाः सदृश्यः सन्ति अथ चाहमात्मानं चेतनं जानामि । कथनस्य तात्पर्यमिदमस्ति यच्चेतना इन्द्रियग्राह्या नह्यस्ति । अतो यदि जडे भूते चेतनाया उदयोऽभवत् तदा वस्तुतः असत् सदभूत् यच्चामान्यमस्ति । अत इदं नहि मानयितुं शक्यते यद् भूतमन्धनिभं लोलुठ्यमानमकस्मात् चेतनां प्राप्योपविष्टम् ।

विकासक्रमसम्बन्धे द्वयोः शब्दयोः कथनमप्रासङ्गिकं न भवेत् । सत्त्वमूले चेतना कुत आयाता अस्मिन् विषये डार्विनस्य कश्चनाग्रहो नास्ति । तस्य सिद्धान्तस्य सारोऽयमस्ति यत् प्रत्येकं जीवितपिण्डे द्वे प्रवृत्ती कर्म कुरुतः । इमास्ताः प्रवृत्तयः सन्ति यासामुल्लेखोऽस्माभिः पुस्तकारम्भेऽर्थकामनामभ्यां कृतोऽस्तिः अहं न म्रियेय सन्ततिश्च तिष्ठेत् । क्षुद्रा प्राणिन आत्मनः प्रवृत्तीः परिचिन्वन्तो न भवेयुः परन्तु तेषां चेष्टाभिः प्रवृत्तीनां सत्ता ज्ञातुं शक्येत । अभ्यन्तराल आसां प्रवृत्तीनां प्रेरणा, बाह्यतो भोजनादिपरिस्थितीनां निरन्तरं प्रहारः—आभ्यां द्वाभ्यां दिशाभ्यामायातानां प्रभावानां कारणत्वात् शरीराणां तैः सार्धं

चेतनस्य च विकासो भवति। विकासक्रमः सत्त्वमूलविन्दुनिभप्राणिभ्य आरभ्य इदानीं मनुष्यपर्यन्तं प्रोञ्छितोऽस्ति। पश्चात् कयास्यतीति कथयितुं न शक्येत। अस्माकमस्मान्मतात् कश्चन विरोधो नास्ति परञ्चेदं प्रतीतं भवति यदेतद् मानयन्तो बाह्यपरिस्थितिभ्यः कियदनुचितं महत्त्वं ददते। परिस्थितीनां चपेटा अर्धसुप्तान् चेतनान् जागरयन्ति। स नव्यपरिस्थित्यनुकूलं व्यवहारं कर्तुं वाञ्छति, पुराणपद्धत्या व्यवहारेण तृप्तिर्न भवति भोगोऽपूर्णोऽवशिष्यतेऽथवा प्राप्त एव न भवति। अस्यामवस्थायां मृत्योः सन्तानोच्छेदाच्च त्रातुं चेतनस्य सुप्ताः शक्तयो जागरिता भवन्ति ता नव्यपरिस्थित्यनुसारं कर्म कर्तुं क्षमा भवन्ति यावत्पर्यन्तमेवं प्राप्तं न भवेत् तावत्पर्यन्तं वैचित्र्यं तिष्ठति। अनेन मतेन डार्विनमते स्तोकं संशोधनं संजायते परन्तु प्राणिविकासक्रमसंबन्धिन्यः कियत्यो वार्ताः अधिकं सुगमतया संबोधे आयान्ति। अस्मिन् यदि काचिन्नूतनताऽस्ति तर्हि इयती यत चेतने आरम्भत एव बीजरूपेण ताः सर्वा योग्यता मन्यन्ते या लक्षेभ्यो वर्षेभ्यो विकसिता भवन्ति, तथा चेतनः सक्रियो मन्यते। स परिस्थितेर्ग्रहणाय तदनुकूलव्यवहाराय च स्वयमभ्यन्तरतः शक्तिं व्यापारयति यतो हि तस्मै निरन्तरं भोगोऽपेक्ष्यते। इयं सक्रियता चेतने तदैव प्राप्ता जायते यदा स शरीरस्य धर्ममात्रं न भवेत्, परम् आत्मनः स्वतन्त्रां सत्तां रक्षेत्।

देहात्मवादिन एकोऽपरस्तर्कोऽवशिष्यते। शरीरस्य प्रभावश्चेतनोपरि पतति अयं विवादस्य विषयो नहि भवेत्। क्षामेऽवद्ये वा भोजने मिलिते कस्मिंश्चिदङ्गे व्यथिते चेतनेऽपि परिवर्तनं भवति। नाडीसंस्थानस्य आघातादिन्द्रियव्याघातो भवति बुद्धिर्दुर्बलाऽऽपद्यते, मनुष्योऽत्रलिप्तो भवति। एतेनेदमनुमानं भवति यच्चेतनो देहस्य धर्मोऽस्ति। एतस्योत्तरे इदं कथयितुं शक्येत यदिदमनुमानं युक्तं नास्ति। आसु सर्वासु दशासु चेतना तथैव तिष्ठति परन्तु यैः साधनैः सा व्यापारं करोति तानि विकृतानि जायन्ते। एतदर्थं यथार्थं संविदो न भवन्ति, अध्यवसायो न भवति, प्रत्यक्षं च न भवति। अतो यथास्थिति निर्णयो नहि भवेत् तर्को नहि भवेत्, संकल्पश्च नहि भवेत्; यः संकल्पो भवति स कार्यान्वितो न भवति। नाडीसंस्थाने विकृते जाते बाह्याकृतिरपरमनुष्यैः समाना तिष्ठति परन्तु चेतन आत्मानं यस्यां परिस्थितौ प्राप्नोति साऽन्यमनुष्याणां परिस्थितेर्भिन्नाऽस्ति। तस्य अपरप्रकारका अनुभवा भवन्ति। आत्मपरिस्थित्यनुसारं चेतनो योग्यताः शक्तीश्च दर्शयति, शेषमात्मनि आकुञ्चति यतस्तेषामुपयोगो नास्ति। अतः सोऽपरमनुष्यनिभमाचरणं नहि करोति। अस्माकं कृते सोऽत्रलिप्तोऽस्ति, परन्तु आत्मनः कृते तस्याचरणं युक्तमस्ति। चेतना शरीरस्य धर्मो नास्ति, शरीराद्धेतोः उदिता न भवति, परन्तु चेतन आत्मन उपयुक्ते शरीरे जन्म

गृह्णाति, अपरं यदि जन्मग्रहणात् पश्चाद् शरीरे कश्चन विकार आयाति तदा आत्मनोऽभिव्यक्ति तदनुसारं कर्तुं प्रयत्नं करोति ।

## प्रज्ञानात्मवादाधिकरणम्

आत्मनः स्वरूपसम्बन्धे अपरा महत्त्वपूर्णविचारधारा प्रज्ञानात्मवादः कथयितुं शक्यते । प्राचीनग्रन्थेषु अयं विज्ञानवादः कथितोऽस्ति परन्तु अद्यत्वे विज्ञानशब्दो गणित–ज्योतिष-रसायनादिविद्यानां कृते प्रयुक्तो भवति अतोऽहं विज्ञानस्य प्रसङ्गे प्रज्ञानशब्देन व्यवहरामि । कस्मिंश्चित् क्षणविशेषे चित्तस्य यद् रूपं भवति तत् प्रज्ञानं कथ्यते । प्रज्ञानात्मवादी कथयति यद् आत्मा प्रज्ञानमेवास्ति ।

चित्तस्यावस्थाया रूपस्य वा कतिचिदङ्गानि भवन्ति । तस्यैकमङ्गं ज्ञानमस्ति । कदाचिद् ज्ञानं प्रमाया रूपे वर्तते, कदाचिद् विपर्ययस्य, कदाचिद् विकल्पस्य, कदाचिच्च स्मृतेः । ज्ञानमेकलं नहि भवति । तेन सार्धं रागद्वेषयो रूपे इच्छा वासना वावलग्ना विद्यते अपरं वासनायाः तृप्तेर्भोगस्य च कृते क्रियाऽपि विद्यमाना भवति । यस्यां ज्ञानांशः प्रधानो भवति सावस्था प्रमाणवृत्तिः, इच्छांशस्य प्रधानतावस्था रसवृत्तिः, क्रियाशक्तेः प्रधानतावस्था च संकल्पवृत्तिः कथ्यते । वयं क्षणस्य परिभाषां प्रथमखण्डस्य कालाधिकरणे दत्तवन्तः स्मः । ततः स्पष्टमस्ति यत् किमपि प्रज्ञानम् क्षणादधिकं स्थातुं नहि शक्नोति । तस्य स्थानं अपरं प्रज्ञानं गृह्णाति । एवं प्रज्ञानानां प्रवाहः क्षरन्नास्ति । द्वयोः प्रज्ञानयोर्ज्ञेयभेदः अर्थात् ज्ञानस्य विषये भेदः, वासनाभेदः संकल्पभेदश्च भवेयुः । द्वयोः प्रज्ञानयोः प्रभूतप्राया तुल्यरूपता च भवितु शक्नोति, परन्तु अनन्यरूपता नहि भवेत् । स्तोकं स्तोकं भेदः सततं तिष्ठति अतश्चित्तं परिवर्तनशीलं कथ्यते । प्रज्ञानानां क्षणस्थायित्वं लक्ष्यीकृत्य प्रज्ञानात्मवादः क्षणिकविज्ञानवादोऽपि कथितोऽभवत् ।

साधारणमनुष्यस्याप्येतत् प्रतीतं भवति यत् तस्य चेतनांशस्य द्वौ भागौ स्तः, एकम् आत्मा द्वितीयं चित्तम् । यथा शरीरोपरि आत्मनः स्वामित्वमस्ति तथैव चित्तोपर्य्यपि, अतः 'मम शरीरम्' , इतीव 'मम चित्तम्', इति प्रयोगोऽपि क्रियते । सा शरीरेणेव चित्तेनापि व्यवहरति । चित्तस्यावस्थाः परिवर्तमानाः सन्ति, आत्मा परम् अविकारी अस्ति । स चित्तावस्थानां साक्षिभूतोऽस्ति, प्रत्येकमनुभूत्या सार्धम् 'अहम्' इति लग्नो वर्तते । विषयवृत्त्योर्द्वयोर्ज्ञानं युगपद् भवति । गोः प्रत्यक्षं चित्तस्य प्रमाणवृत्तेरेकं निदर्शनमस्ति परन्तु यस्मिन्

समये गोः प्रत्यक्षं भवति तस्मिन् समये द्वे घटने युगपद् भवतः—गौर्दृश्यते अपरम् इयं वार्ता ज्ञायते यद् गौर्दरीदृश्यमानास्ति। इमां वार्तां वयमेवं कथयामः अहं गां पश्यन्नस्मि। इदम् 'अहम्', अयं गोविषयकज्ञानस्य ज्ञाता, अयं चित्तस्य साक्षी, आत्मास्ति।

प्राज्ञानात्मवादी कथयति यद् चित्तात् पृथगात्मनो मननं भ्रमोऽस्ति। मम चित्त-मितिकथनमात्मनः पृथगस्तित्वस्य प्रमाणं नास्ति, भाषाया अयोग्यतायाः परिणामोऽस्ति।' स्मिन्, स्य, प्रभृतयो विभक्तिप्रत्ययाः कारकस्य प्रतीकानि सन्ति 'मम गृहम्', 'गृहे कर्पटः', वस्तुपरके स्तः। एतेन अयं बोधो भवति यद् अहं या गृहाद् अलग्नं वस्तु अस्मि, गृहस्य स्वामी अस्मि ; कर्पटो यद् गृहाद् पृथग् वस्तु अस्ति गृहाभ्यन्तरेऽस्ति। परन्तु यदा अहं कथयामि 'चित्तस्य संवित्, चित्ते विचारः', तर्हि इदं तात्पर्यं नास्ति यत् संविद्विचारौ चित्तात् पृथग्भावेन स्तः। एते प्रयोगास्तादृशाः सन्ति यादृशाः 'गृहे कोष्ठकानि', । गृहं, कोष्ठकेभ्यः पृथग् वस्तु नास्ति। इत्थं मम चित्तमिति इदं सिद्धं नहि करोति यत् 'अहं' चित्तात् पृथग् वस्त्वस्ति। अयं भाषाया दोषोऽस्ति यत् साऽस्मान् द्वयोरर्थयोरेकरूपेण प्रयोगकरणाय विवशान् करोति। इदमपि कथयितुं शक्यते यद् दोषो भाषाया नास्ति, अस्माकमेवास्ति; अस्माकं धारणा भ्रान्ताऽस्ति अतो भाषाया अयोग्यं प्रयोगं कुर्मः। वस्तुतो वार्तापि इयमेवास्ति। परन्तु 'अहं' चित्ताभ्यन्तरे संबन्धसूचकविभक्तेः सततमायानं भ्रान्तिमधिकं पुष्टां चेक्रीयते।

पुराणीधारणा भाषायाः प्रयोगांश्च त्यक्त्वा आत्मनः प्रज्ञानोपरि ध्यानदानेन "अहमः" प्राप्तिर्नहि भवति। अहं पुस्तकं पठन्नस्मि, अहं भैरवीं शृण्वन्नस्मि, अहं पूरिकां खादन्नस्मि इति कथनस्य रीतयः सन्ति। आसामनुभूतीनामेवं व्यक्तीकरणमधिकमुचितमस्ति—'पुस्तकं पापठ्यमानमस्ति, स स्वरसमूहो यं भैरवीं कथयन्ति शोश्रूयमाणमस्ति, स रससमूहो यं पूरिकां कथयन्ति आस्वादितो भवन्नस्ति'। प्रज्ञानेभ्यः पृथक् एकलस्य अहमः, कदापि अनूभूतिर्नहि भवति। यथा संविदामाधारोपरि बुद्धिर्वस्तूनां निर्माणं करोति तथैव 'कस्य संविदो भवन्त्यः सन्ति' अस्य प्रश्नस्योत्तरे तेषां साक्षिणः कल्पनां करोति। एवं मन्यमानाऽस्ति यद् यथातन्त पुष्पाणि ग्रथितानि भवन्ति तथैव सर्वेषु प्रज्ञानेषु एकोऽपरिवर्तनशील आत्माऽनुस्यूतो भवति। तस्यैव प्रज्ञानानि भवन्ति। विच्छरितानि फुल्लानि परस्परं मेलितुं शक्नुवन्ति परम् एका माला अपरया व्यभिचरिता भवितुं नहि शक्नोति। इत्थमेव एकेन आत्मना सार्धं बद्धीभूतानि प्रज्ञानानि अपरेण आत्मना सार्धं बद्धेभ्यः प्रज्ञानेभ्यः अलग्नानि तिष्ठन्ति। द्वे चित्ते कदापि

परस्परं नहि संघट्टेयाताम् । बुद्धेरियं कल्पना अवस्तु अस्ति । जलबिन्दूनां प्रवाहादलग्नं नद्याः किमप्यस्तित्वं नास्ति । बिन्दूनामविच्छिन्नः प्रवाह एव नद्यै एकतायाः एकसूत्रतायाश्च प्रदानं करोति । जले यदि लोष्टः क्षिप्तो जायेत तदा तरङ्ग उत्तिष्ठति । ईदृशं प्रतीयते यत् ऊर्मिः तस्मात् स्थानादारभ्य तीरं यावत् चलिता आयाति । परन्तु वस्तुतः किम् आयाति ? इदं सरलवैज्ञानिकप्रयोगात् स्पष्टीभूतं जायते यत् जलस्य कोऽपि बिन्दुः प्रतीरं यावत् नहि आयाति । प्रत्येकं बिन्दुः स्तोककम् उपरि नीचैश्च कम्पते अथ चात्मनो गतिम् आत्मनः प्रातिवेशिकबिन्दवे समर्प्य शान्तो भवति । लोष्ट क्षेपणतः पश्चात् कस्मिन्नपि क्षणे कियन्तो बिन्दवः शान्तीभूता भवन्ति केचन च शान्तीभविष्यन्तो भवन्ति केचन पूर्णमुत्थिताः सन्ति केचन चार्धम् । एषां सर्वेषां मेलनेन लहर्या आकृतिः सम्पद्यते । यथा यथा एकस्य पश्चाद् अपरबिन्दौ उपरितनी अधस्तनी च गती आयातः तथा तथा लहरी अग्रे वर्धमाना प्रतीता भवति । लहरी तद्बुद्धिनिर्माणमस्ति यद् अलग्नानामलग्नानां बिन्दूनां गतीर्मेलयति । इत्थं

शान्तेः प्रथमम् । एकं प्रज्ञानम् आत्मनः संस्कारं परवर्तिने अर्थात् उदीयमानाय प्रज्ञानाय दत्त्वा याति । इत्थमग्रिमा अनुभवा नाशं नहि प्राप्नुवन्ति स्मृतेश्च सम्भवो भवति । एतावत्पर्यन्तं तुप्रज्ञानानां सम्बन्धोऽस्ति परन्तु यथा जले लहरी कल्पिताऽस्ति तथैव एकत्र सर्वेषां प्रज्ञानानां संबन्धस्थापक आत्मा कल्पितोऽस्ति, बुद्धिनिर्माणं चास्ति । अलातचक्रम् प्रज्वालयतु तद् घूर्णमानं भवति । वयमेतद् जानीमो यत्तस्य ज्वलत् शिरो नहि तिष्ठति प्रत्युत सततं घूर्णते । परन्तु यावत्पर्यन्तम् अक्षिणि तस्य एकस्मिन् स्थाने पतितं प्रतिबिम्बं मृष्टति तावत् पर्यन्त द्वितीयं प्रतिबिम्बमापतति । इत्थं नवं प्रतिबिम्बं पुराणप्रतिबिम्बस्य संस्कारेण मिलितं जायते, अतोऽस्माकं प्रकाशस्य गोलो दृश्यते । यदि चक्रकस्य गतिः क्षीणा भवेत् अपरम् एकस्मिन् प्रतिबिम्बे नष्टे अपरं सम्पद्येत तदा गोलभ्रान्तिर्न भवेत् । यथावत् अनया रीत्या अविच्छिन्नगत्या प्रज्ञानानि आयायायमानानि सन्ति । एकस्य संस्कारा अपरेण मिलन्तो जायन्ते । क्वचित् धारा नहि त्रुट्यति । अतोऽस्माकमेकस्याखण्डस्यात्मनः प्रतीतिर्भवति । एताभिर्वार्ताभिरीदृशमनुमानं भवति यच्चित्तमेवात्मास्ति । प्रज्ञानानां प्रवाहस्यैव नाम चित्तमस्ति । अत इदं स्पष्टमस्ति यद् आत्मा प्रज्ञानस्वरूपः, अतः क्षणिकः, प्रतिक्षणमुदयशमनशीलश्च पदार्थोऽस्ति ।

आत्मनश्चित्तात् पृथक्करणं सुकरं नास्ति । प्रभूता विद्वांसोऽपि ईदृशकरणे आत्मनोऽसमर्थाननुभवन्ति । यथाहि प्रज्ञानवादी कथयति यद् जाग्रत्स्वप्नसुषुप्तिषु कस्मिन् नु कस्मिन् रूपे चित्तं कर्म कुर्वदास्ते अपरं चित्तविरहितचेतनायाः कापि प्राप्तिर्नहि भवति । यदि चेतनस्य आत्मनाम्ना आकारणावश्यक्येवास्ति तर्हि इदं प्रतीतं भवति यच्चित्तमेवात्मास्ति ।

परन्तु गम्भीरमननेन एवं स्वीकारे शङ्का अवतिष्टते । अहं तीरे दण्डायमानः पश्यन्नस्मि यद् बिन्दवः पूर्वापरीभावेन सततं प्रचलन्ति । बिन्दूनां मध्ये किञ्चिद् व्यवधानं नास्ति परन्तु प्रत्येकं बिन्दुः एकलः स्वतन्त्रश्चास्ति । प्रवाह एकस्य कस्यचिद् बिन्दोर्धर्मो नास्ति । अहम् आत्मनः समक्षं बिन्दूनामागत्यागत्यापसरणं प्रवाहमिति तथा बिन्दूनां समूहं नदीमिति कथयामि । प्रवाहो नदी च द्रष्टुः कृते स्तः, बिन्दूनां कृते नहि । इत्थं लहर्योऽपि अस्माकं कृते सन्ति । प्रत्येकं बिन्दुः कम्पित्वा स्थिरो भवति । स आत्मनः प्रतिवेशिने आत्मनो गतिं ददाति परन्तु अन्तरिता भूत्वा गतिः प्रतिवेशिनो भवति । सर्वेषां गतिशीलानां बिन्दूनां मेलनम् अपरम् तेषां संबद्धैकलहर्य्या रूपे दर्शनं मम कर्मास्ति । चक्रिकायां प्रकाशस्य परिमण्डलं ज्वलतोऽग्रभागस्य नहि किन्तु द्रष्टुः प्रतीतं भवति । इत्थमेव प्रज्ञानानां कृतेऽपि साक्षी अपेक्ष्यते, प्रत्येकं प्रज्ञानमायाति याति च । तत् पूर्ववर्तिप्रज्ञानसंस्काराणां दायभागी त्वस्ति परन्तु एते संस्काराः तस्य अविभाज्याङ्गानि संपन्नानि जायन्ते । यद्येवं न भवेत् अपरं च पुराणः संस्कारः आत्मनः प्रत्नस्य व्यक्तित्वस्य कंचिदप्यंशं रक्षेत् तदा एकस्मिन् क्षणे द्वे प्रज्ञाने जायेयाताम् इद तु अनुभवस्य क्षणपरिभाषायाश्च विपरीतमस्ति । ईदृश्यां दशायां यदि प्रज्ञानानि चेतनानि भवेयुः तर्हि प्रत्येकं प्रज्ञानमात्मनो विषयं ज्ञातुं शक्नोति अपरं यद स्वानुभूतिरपि चेतनस्य लक्षणमस्ति तर्हि आत्मानमपि ज्ञातुं शक्नोति । परन्तु प्रवाहः कस्यचिदेकस्य प्रज्ञानस्य धर्मो नास्ति । संबन्धः एकसूत्रता वा कस्यचिदेकस्य प्रज्ञानस्य धर्मो भवितुं न शक्नोति । यथा धारा, लहर्यः प्रकाशस्य गोलः साक्षिणोऽपेक्षां कुर्वन्ति तथैव प्रज्ञानानां धाराश्चित्तप्रवाहस्य प्रज्ञानानां परस्परं सम्बन्धस्यापि ईदृशस्य साक्षिणोऽपेक्षास्ति यस्तेभ्यो भिन्नो भवेत् । प्रज्ञानस्य चेतनत्वपक्षे इदमुदाहरणं दीयते यद् यथा दीपकस्य कीलोऽन्यवस्तुभिः सह आत्मनः स्वरूपमपि प्रकाशयति तथैव प्रज्ञानं वस्तुभिः सार्धं सार्धम् आत्मनः स्वरूपमपि जानाति । अस्मिन्नुदाहरणे उपमानं यथावत् संबोधनीयम् । यदा दीपकोऽप्रज्वलन्नासीत् तदापि वस्तून्यासन् परं तेषां रूपाणि क्षपितान्यासन् । दीपकस्तानदर्शयत् । परन्तु किं ज्वलनात् पूर्वं कीलाया अपि रूपं किं क्षपितमासीद् यद् ज्वलने

सति प्रकटितमभूत् ! ज्वलनात् पूर्वं तु कीलाऽऽसीदेव नहि । अतोऽस्या उपमाया एताव-देव तात्पर्यमस्ति यत् प्रज्ञानमात्मनो विषयस्य द्रष्टास्ति अपरम् आत्मनः क्षणिकसत्ताया अपि द्रष्टास्ति, तत्क्षणात् पूर्वकालोद्भवं ज्ञानं तस्या भवितुं न शक्नुयात् । दीपको निर्वापि-तानां दीपकानां प्रकाशको नहि भवेत् । प्रज्ञानमतीतानां प्रज्ञानानां साक्षी नहि भवेत् । एतेनापीदं प्रतीतं भवति यत् चित्तस्यावस्थानां साक्षी चित्तं स्वयं भवितुं नहि शक्नोति । चेतन आत्मा 'अहम्' इति ततः पृथगस्ति । तस्य समक्षं चित्तस्य परिवर्तनानां नाटकं बोभूयमानमस्ति । चित्तं तत्कृते शरीरनिभमुपस्कारमस्ति । शरीरस्य चेष्टा इव चित्तव्यापा-रोऽपि नहि निरर्थको भवति नापि स्वार्थपरकः । चित्तं केवलं निश्चेष्टदर्पण इव विषयान् प्रतिबिम्बितान् कृत्वा नहि अवतिष्ठते परं तेषु संबन्धमन्विष्यति तान् भोगोपयोगिनः सम्पा-दयितुं प्रयत्नं करोति । एतेनापीदृशमनुमानं भवति यद् भोक्ता चित्तात् पृथगस्ति । इत्थं विचारकरणेन इदमपि विदितं भविष्यति यत् कर्त्ताऽपि चित्ताद् भिन्नः पदार्थोऽस्ति । एतेनेदं स्पष्टमस्ति यद् ज्ञाता-भोक्ता कर्ता अर्थात् चेतनः य आत्मा कथ्यते प्रज्ञानस्वरूपो नह्यस्ति

प्रज्ञानानि परिवरीवृत्यमानानि भवन्ति । तेषु विषयवैषम्यं तु बोभूयत एव, अतीत-प्रज्ञानानां संस्काराणां मेलनेन उत्तरवर्तिप्रज्ञानानां गभीरता वरीवृध्यमाना भवति, तस्यैव वस्तुनः समक्षे द्वयोः द्विविधे प्रत्यक्षे भवतः । परन्तु 'अहम्, इति नहि परिवर्तते न ह्रसति नापि वर्धते । स आत्मनः प्रज्ञानानां ह्रासवृद्धी जानन्नस्ति । एतेनापीदमनुमीयते यत् स प्रज्ञानेभ्यः पृथगस्ति

वयं पश्चात्तनाधिकरणे उन्मत्ततायाः सम्बन्धे विचारं कृतवन्तः स्मः । ईदृशीषु दशासु चित्तस्य व्यापारेऽन्तरमापतति, तदंशतः सुप्तम् इव जायते परन्तु चेतना–ज्ञातृत्व, भोक्तृत्व, कर्तृत्वानि,—पूर्ववदवतिष्ठते । तत्र ह्रासो न भवति । इदं भवति यत् तस्य क्षेत्रं पूर्ववन्नहि तिष्ठति । एतेनापीदमनुमीयते यदात्मा चित्ताद् भिन्नोऽस्ति । चित्तं तस्योपकरणमस्ति । आत्मनश्चित्तेनोपकारो भवति अतस्तद्योग्यताया अभिव्यक्तिः चित्तानुरूपा भवति परन्तु स स्वयं चित्तं नास्ति ।

अयमाक्षेपः साधीयान्नास्ति यदस्माकमात्मनोऽनुभूतिर्न भवतीति । चित्तस्य व्यापारेषु ज्ञातृत्व-भोक्तृत्व-कर्तृत्वानामाभा तिष्ठति, चित्तं सततं चेतनेन प्रतिबिम्बितं तिष्ठति । अतः चित्तस्य प्रत्येकं व्यापारे आत्मानुभूतिर्बोभूयते । शुद्धात्मानुभूत्यर्थमाग्रहस्य तात्पर्यमस्ति

यत् ईदृशी अनुभूतिर्भवेत् यस्यामात्मा चित्तं नोपयुञ्ज्यात् अर्थात् स आत्मनस्तिस्रः शक्तीः पूर्णतया आत्मन्याकृष्यावस्थितो भवेत् । ईदृशोऽनुभवो जाग्रत् स्वप्नसुषुप्तिषु भवितुं नैव शक्नुयात् प्रगाढनिद्रायामपि लघुका ज्ञानवृत्तिस्तिष्ठति । प्रज्ञानानां पृष्ठतः यस्य 'अहमः, प्रतीतिर्भवति तद् बुद्धिनिर्माणं नास्ति ।

# ३ जीवाधिकरणम्

वयमद्यावधि आत्मचेतनशब्दयोः प्रयोगमित्थं कृतवन्तः स्मो यदेतौ परस्परं पर्यायत्वेन प्रतीयेते, परन्तु अधस्तनयोः द्वयोरधिकरणयोर्यो विमर्शोऽभूत् तत्फलस्वरूपम् इदानीमनयोर्द्वयोर्वाच्यार्थभेदः संबोधे आयातुं शक्नोति । अधस्तादधिकरणस्यान्तिमे परिच्छेदे दर्शितमस्ति यच्चित्ते आत्मनः प्रतिबिम्बं सततं पनीपत्यमानमस्ति । चेतनं विना शरीरं स्थातुं शक्नोति परन्तु चेतनाविरहितं चित्तं नावस्थातुं शक्नोति । चित्तेन सदैव चेतनाश्रयितव्यास्ति । यं वयं चेतनं कथयन्तः स्मः तदात्मयुक्तं चित्तं चित्तयुक्त आत्मा वास्ति । यथा चेतनां विना चित्त स्थातुं नाह शक्नोति तथैव चित्तं विनाऽऽत्मनो ज्ञातृत्वस्य, भोक्तृत्वस्य कर्तृत्वस्य च सामर्थ्यं न व्यवहारास्पदं भवति । आत्मा तावदेव ज्ञाता भोक्ता कर्त्ता चास्ति यावत् तस्य चित्तेन सार्धं योगोऽस्ति । यो ज्ञाता, कर्त्ता, भोक्ता, च भवति स एव चेतनः कथ्यते । भोगकर्मणी ज्ञानाधीने भवतोऽतो ज्ञातृत्वाय विशिष्टं महत्त्वं दीयते अपरं बहुधा कथ्यते च यद् यो ज्ञाता भवति स चेतनो भवतीति । यतो हि ज्ञातृभावो ज्ञानस्य साधनेन अर्थात् चित्तेन सह योगे सति निर्भरोऽस्ति अत आत्मा तस्यामेव दशायां चेतनो भवितं शक्नोति यदा तस्य चित्तेन सह योगो भवेत् । चित्तयुक्त आत्मा, चेतन आत्मा जीवो जीवात्मा वा कथ्येत ।

# ४ पुनर्जन्माधिकरणम्

अद्य यावत् मनने एतद्वार्ता ससंरम्भं समुत्थापिताऽस्ति यत् सर्वे चेतना एकसदृशा न सन्ति, जीवाद् जीवे भेदोऽस्ति । भेदोऽस्यां वार्तायामस्ति यत् सर्वाणि चित्तानि एकसदृशानि नहि सन्ति, चित्तानां योग्यतासु, तेषां सहजवासनासु च भेदोऽस्ति । अत एकस्यामेव परिस्थितौ द्वयोर्व्यक्त्योर्ज्ञानं, भोगः कर्म च परस्परं सदृशानि नहि भवन्ति। अयं भेदः पुनर्जन्मसिद्धान्तस्य माननायां सम्बोधे आयायात ।

आत्मनः आयुष्यकाले मनुष्यस्य सहस्राणि अनुभूतयो भवन्ति । प्रत्येकं प्रज्ञानं नष्टं

जायते परन्तु तत्प्रभाव उत्तरवर्तिप्रज्ञानोपरि पतति। इत्थम् एकस्मात् प्रज्ञानाद् अपरेण प्रज्ञानेन यत् प्राप्यते तत् संस्कारं कथयन्ति प्रज्ञानानां लोपो जायते परन्तु संस्कारा अवशिष्यन्ते एषु कियतस्तु वयं स्मृतिद्वारा पुनर्जागरयितुं शक्नुमः परन्तु अधिकांशा एतावन्निम्नस्तरं गच्छन्ति यत्ते पुनः समक्षं नायान्ति। तथापि चित्तोपरि तेषां प्रभावः पनीपत्यते। इत्थमात्मनो जीवनकाले जीवः प्रभूतान् नवान् संस्कारान् संगृह्णाति। सर्वे जीवाः समानाः परिस्थितीर्नहि समाविशन्ति, अतः सर्वेषामनुभूतयः सदृश्यो नहि भवन्ति, संस्कारा एकसदृशा नहि भवन्ति। संस्काराणां चित्तोपरि प्रभावः पतति अतो यदि जन्मकाले द्वे चित्ते समान भवेतां तदापि मरणकालपर्यन्तं तयोरन्तरं पतिष्यति। अस्माभिरनुभूतिशब्दस्यात्र व्यापकार्थे प्रयोगः कृतोऽस्ति। जीवोपरि बाह्यजगतः क्रिया, बाह्यजगदुपरि जीवस्य प्रतिक्रिया चेत्येतद् द्वयं तदन्तर्भूतमस्ति तत्संस्काराणां संचितकोषे उभयतो वृद्धिर्वोभूयते।

शरीरं जीवस्य भोगसाधनमस्ति परन्तु तत् क्षयिष्णु अस्ति, प्रभूतदिनानि यावत् तेन कार्यं न निर्वहति। परन्तु भोगस्यावश्यकता तु संपद्यमाना तिष्ठति। अतो जीव एकस्मिन् शरीरे व्यर्थे जाते शरीरान्तरं याति। अस्मिन् नवीने शरीरेऽपि स पुराणसंस्काराणां भाण्डागारं सार्धम् आनयति अतः सर्वाणि चित्तानि एकसदृशानि न भवन्ति यदि द्वौ जीवौ कस्याश्चिदेकस्या जातेः शरीरे स्तः तर्हीदं तु स्पष्टमस्ति यत् तयोश्चित्तयोः प्रभूतं किञ्चित् सादृश्यमस्ति परन्तु अस्य सादृश्यस्याधस्तात् पूर्वेषु शरीरेषु संचितानां संस्काराणां वैषम्यमप्यस्ति अतो वासनादिष्वपि भेदो भवति। द्वयोर्मनुष्ययोः, द्वयोः कुक्कुरयोः द्वयोर्गर्दभयोः द्वयोर्गोमयकीटयोश्च व्यवहाराः कदापि पूर्णतया एकसदृशा नहि भवितुं शक्नुवन्ति। जगदनाद्यस्ति अतो जीवस्यासङ्ख्यानि शरीराणि संजातानि सन्ति। जगदनन्तमस्ति अतोऽसंख्यानि शरीराणि भविष्यन्ति।

अस्माकं कर्मणः कृते एतावन्निरूपणं पर्याप्तमस्ति परमेतत् पूर्णं नास्ति। पुनर्जन्मसिद्धान्तः तस्य कर्मसिद्धान्तस्याङ्गमस्ति यस्य दिशि अस्माभिः अस्य खण्डस्य द्वितीयाध्यायस्य ईश्वराधिकरणे सङ्केतः कृत आसीत्। सर्वे जीवा एकसदृशीं योग्यतां नीत्वा तु नह्येवायान्ति, सर्वेषां भोगप्राप्त्यवसरेषु जन्मत एव वैषम्यं भवति। कश्चन स्वस्थो भवति कश्चन च रोगी, कश्चन सम्पन्ने संस्कृते च गृहे जन्म गृह्णाति कश्चन च दरिद्रे अशिक्षिते च गृहे, कश्चन दीर्घायुर्भवति कश्चन चाल्पायुः, कश्चन मनुष्यो भूत्वापि रुदित्वा दिनं यापयति कश्चन कुक्कुरो भूत्वापि हसन् खेलंश्च जीवनं व्यत्याययति। कर्मसिद्धान्तोऽस्य वैषम्यस्य संबोधे सहायतां ददाति।

# ५ आत्मसाक्षात्काराधिकरणम्

जाग्रत्स्वप्नसुषुप्तिषु चित्तपरिणामा बोभूयमाना भवन्ति, आत्मनस्तिस्रो योग्यता न्यूनाधिकभावेन कर्म चेक्रीयमाणा भवन्ति परन्तु एका ईदृशी अवस्था भवति यस्यां चित्तस्य निरोधो जायते। इयं तुरीयावस्था कथ्यते। इदमसम्प्रज्ञातसमाधेरेवापरं नामास्ति।

योगाभ्यासस्यारम्भ एव तुरीयावस्था नहि आयाति। प्राथमकल्पिकस्य साधकस्य चित्तं विक्षिप्तं तिष्ठति अपरं तस्य जाग्रदवस्था वर्तते। यदा तस्य प्राणा बाह्यतः किंचित् किंचिदाकृष्य सुषुम्णायाम् ऊर्ध्वमुखा भवन्ति तदा सहैव जीवोऽपि अन्तर्मुखो भवति। अस्यायमर्थोऽस्ति यत् स आत्मनो भोक्तृत्वकर्तृत्वसामर्थ्ययोः संवरणे लग्नो भवति। एतेन वासनानां संकल्पानां च शमनं भवितुमारभते। इदानीमभ्यासी भौतिक-जगतो बहिर्नहि गतोऽस्ति। शरीरस्याभ्यन्तरं बहिश्च भूतानां विस्तारोऽस्ति, संविदां च महान् संमर्दस्तिष्ठति। यथा यथा भोगसाध्यताया आवश्यकता क्षामा भवति तथा तथा चित्तम् आत्मनस्तान् व्यापारान् त्यजति यैः प्रभूतानां संविदां परित्यागो बोभूयमान आसीत् अथच शेषे विविधाः संबन्धा स्थापिता आसन्। संस्काराणां स्मृतीनां चेदानीं लोपो नहि भूतोऽस्ति, अहंकारः कर्म कुर्वन्नस्ति अतः किञ्चित्तु रञ्जनं भवति परन्तु क्रमशोऽस्य मात्रा क्षामा बोभूयमाना जायते अथ च संविदः प्रत्यक्षस्य च मध्यस्थमन्तरं ह्रसितं जायते। इन्द्रियाणामुपरिष्टात् शरीरस्य प्रतिबन्धे क्षामे सति तेषां ग्राहकता वृद्धा जायते अतः संविदां संख्यायां तासां प्रकारे च अपारा वृद्धिर्भवति। अननुभूतपूर्वाः शब्दस्पर्शर-सरूपगन्धाः प्राप्ता भवन्ति। यथा यथा अभ्यासो दृढो भवति स्थूलात् सूक्ष्मभूतानां, क्षितेर्वायोः प्रत्यक्षाणि भवन्ति। एतानि प्रत्यक्षाणि उत्तरोत्तरं यथावस्तु भवन्ति। इत्थं साधको युष्मत्प्रपञ्चस्य पारं याति। यावत् तस्येयती उन्नतिर्भवति तावत् कर्तृत्वं भोक्तृत्वं च विलीनप्राये भूते भवतः। इदानीं चित्तस्य प्रज्ञानानां प्रवाहः तस्य वृत्तयः तस्मिन्निमग्नाः संस्काराश्च ज्ञानविषया भवन्ति। क्रमशः एषामुपरि उत्थाय ज्ञाता स्वयं ज्ञेयः सम्पद्यते। तस्यात्मनः सत्ताया, आत्मनोऽस्मितायाश्च ज्ञानं स्थितं भवति। इदमपि ज्ञानं चेतनस्यैव, जीवस्यैव वा भवेत्। अस्यापि साधनं चित्तमस्ति। ज्ञातृत्वसामर्थ्येन प्रतिबिम्बितस्य आत्मनः स्वरूपस्य चित्ते य आभासः पतति सैव सम्प्रज्ञातसमाधेश्चरमावस्थास्ति। एतदनन्तरं यदा ज्ञातृत्वयोग्यता पूर्णतया कुञ्चिता जायते तदा चित्तं निश्चेष्टं निरुद्धं च जायते। चित्ताद् वियोगे जाते जीवनं नावतिष्ठते। इयमेव तुरीयावस्था, असम्प्रज्ञातसमाधिः, निर्विकल्पक-

समाधिर्वा कथ्यते । अस्यामवस्थायामात्मनो ज्ञातृत्वादयो योग्यता आत्मनि संवृतास्तिष्ठन्ति । इयमेवावस्थाऽऽत्मज्ञानस्यात्मसाक्षात्कारस्य वाऽस्ति । यावत्पर्यन्तमस्मिताऽस्ति तावत्पर्यन्तं तु अनुभूतिक्रमः अर्थात् कालोऽस्ति । निरोधावस्थायां क्रमस्याभावो भवति अतः सा कालातीतास्ति ।

एतत् सम्बोद्धव्यं यदात्मसाक्षात्कारस्यार्थ आत्मनः स्वरूपावधारणं संबोधनं वा नास्ति। साक्षात्कारावबोधनयोर्भेदोऽस्ति । अज्ञातस्य ज्ञातेन सार्धं सम्बन्धस्य मेलनमवधारणं कथ्यते। यदा वयं किञ्चिन्नूतनं वस्तु पश्यामः तदा तत् पुराणैर्वस्तुभिर्मेलयामः । एवं करणेन तत् सम्बोधे आयाति । सम्बोधनस्य साधनं चित्तमस्ति । परन्तु यदा चित्तस्य निरोधः संवृत्तस्तस्यामवस्थायां तुलना कथं भविष्यति ? पुनर्यदि आत्मा अज्ञातोऽस्ति तदा तत् किं ज्ञातं वस्त्वस्ति यद्द्वारा तत् संबुद्धं भविष्यति ? यस्य सत्ता प्रत्येकं प्रज्ञाने विद्यमानाऽस्ति, तत् आत्मनोऽधिकं ज्ञातमपरं किमस्ति ? संम्बोधनं तदा भवति यदा सम्बोद्धा संबोद्धव्यं वस्तु चेत्येतद्द्वयं भवेत् । यस्यामवस्थायां केवलमात्मावशिष्यते तस्यामवस्थायां कः किं संभोत्स्यते ?

अत आत्मसाक्षात्कार एकाऽपूर्वाऽनुभूतिरस्ति यस्यास्तुलना ताभिरनुभूतिभिर्नहि कर्तुं शक्यते या जाग्रदादिषु तिसृषु अवस्थासु जायन्ते । समाधेर्व्युत्थाने जाते सम्प्रज्ञातसमाधेरनुभवास्तु कैश्चित् त्रुटितस्फुटितशब्दैर्व्यक्तीकर्तुं शक्यन्ते अथवा क्षामात् क्षामम् अस्य प्रयत्नः कर्तुं शक्येत, परन्तु तुरीयावस्थाया अनुभूतिश्चित्तस्य वाण्याश्च सर्वथा अविषयोऽस्ति । आत्मा तु न सम्बोद्धुं शक्यते नापि संबोधयितुम्, स स्वसंवेद्योऽस्ति, तस्य साक्षात्कारः कर्तुं शक्यते । आत्मसाक्षात्कार एव आत्मज्ञानमपि कथ्यते ।

## ९ आप्तसाक्ष्याधिकरणम्

योगी आप्तपुरुषो भवति । तस्य साक्ष्यमस्माकं कृते प्रमाणमस्ति । इयं सौभाग्यस्य वार्त्ताऽस्ति यत् अस्मानुद्दिश्य योगिनामनुभूतेर्व्यञ्जकं प्रभूतं वाङ्मयं लभ्यमस्ति । इद वर्णनं समाधिभाषायामस्ति अपरं देशकालपात्रभेदेन विषयनिरूपणे स्वभावतो भेदोऽस्ति । समाधिभाषायाः पूर्णपूर्णम् अर्थस्य लगना साधकस्यैव कर्मास्ति तथा गम्भीरमननेन अनातुरतायाः सहायतया च तस्यांशिकी मीमांसा कर्तुं शक्यते । योगिनो भारते भारताद् बहिश्चाभवन् । उपनिषत्सु वामदेव-त्रिशङ्कु-यमप्रजापतीनाम् इन्द्र-याज्ञवल्क्य-विदेहाश्वपति-

सनत्कुमार-जाबालीनाम् ऐतरेयादीनांच नामानि मिलन्ति। एतेभ्योऽतिरिक्ताः व्यास-वसिष्ठ श्रीकृष्ण-शङ्कराचार्य-वर्द्धमान-महावीर-गोरक्ष-दत्तात्रेय-ज्ञानदेव-कबीर--नानक रामकृष्णादयोऽपरेऽपि कियन्तो नित्यस्मरणीया महात्मान आसन्। एते सर्वे एकस्वरेण कथयन्ति यत् समावेरन्ते, यदा सर्वेषां प्रज्ञानानामुपशमो जायते, आत्मसाक्षात्कारो भवति। अयं साक्षात्कारो बुद्धेर्वाण्याश्च परोऽस्ति। तस्मिन् साधकस्य 'अहन्ता' ऽपि क्षपिता जायते। अस्या वार्तायाः समर्थनम् (यीशु) खिष्टस्य खिष्टीयसाधकानां च तथा सूफीनां कथनेनापि भवति।

केवलमेकस्य दिश इतो विपरीता वार्ता श्रूयते। बौद्धा विद्वांस एवं कथयन्ति यत् सम्प्रज्ञातसमाधेश्चरमणीमोपरि उपस्थाने यदा अस्मितायाः क्षयो जायते तस्यामवस्थायाम् अर्थान्निर्विकल्पकसमाधौ आत्मा नास्ति प्रत्युत शून्यम् अर्थात् 'किञ्चिन्न' अवशिष्यते। व्युत्थानदशायाम् भ्रान्त्या अस्मिन् शून्ये अस्मिताविशिष्टस्यात्मनः प्रतीतिर्भवति। बौद्धानामयं शून्यवादस्तर्कोपरि अवलम्बितोऽस्ति परन्तु तेषां तर्कोऽहैतुकोऽस्ति। भ्रान्तिर्विपर्ययस्याध्यासस्य च नामास्ति। अध्यास आस्पदं विना न भवति। रज्जौ कस्यचित् सर्पस्य कस्यचिद् यष्टिकायाः प्रतीतिर्भवितुं शक्नोति; बालुकायां मरीचिकाजलं दृष्टिपथमापतति। शून्यम्, अभावः; 'किञ्चिन्न, सर्वमसदस्ति, तस्मिन् सतः, भावस्य किञ्चिदित्यस्य प्रतीतिर्न भवेत्। एतद् ध्याने रक्षणीयं यत् स्वयं गौतमबुद्धः तस्य सारिपुत्र--मौद्गलायनप्रभृतयः साधकाः शिष्याश्चै तादृशीं वार्तां नहि कथयामासु; । बुद्धाद् यदा कदापि तस्या अन्तिमावस्थाया विषये प्रश्ने कृते तु स मौनमवालम्बत। एतेन तस्य तात्पर्यं तु इदमेव स्थितं भवेत् यदेतद् वर्णनस्य विषयो नास्ति परन्तु पश्चाद् लोकाः तस्य मौनस्यानुचितां मीमांसां कृत्वा इमं वादं प्रतिष्ठापितवन्तः

# ७ आत्मस्वरूपाधिकरणम्

एतत्तु वयं दृष्टवन्तः यस्मो यदात्मसाक्षात्कारोऽपूर्वानुभूतिरस्ति। तत्कृते किञ्चिदुपमानं नहि मिलति अतः शब्दैः स व्यक्तीकर्तुं नहि शक्यते। अस्यां दशायामात्मनः स्वरूपं कीदृशमस्तीत्येतदपरं संबोधयितुमसंभवमस्ति। तत्स्वरूपं स्वसंवेद्यमस्ति। कीदृशमस्तीति निर्देशस्य स्थाने कीदृशं नास्तीति निर्देशः सुकरो नास्ति। यदुपमानं दीयेत यद् विशेषणं दत्तं भवेत्, प्रायः सर्वस्य कृते एकमेवोत्तरमस्ति "इदं न,, आत्मा ईदृशो नास्ति।

उपनिषत्सु एतदर्थमेव कथितमस्ति यत् स' नेति नेति, [ इदंन इदंन ] शब्दस्य वाच्यमस्ति। यदपि किञ्चिन्निरूपणं क्रियते तत् प्रायेण जीवस्य, चेतनस्य, चित्तविशिष्टात्मनो वा भवति।

तथापि काश्चन वार्ताः कथयितुं शक्यन्ते। प्रथमा वार्ता इयमस्ति यत् आत्माऽस्ति स सत्योऽस्ति, सन्नस्ति। एतेन अयं निष्कर्षो निष्कीर्णो भवति यत् स नित्यः अजरोऽमरश्चास्ति। द्वितीया वार्ता इयमस्ति यत् आत्मा चेतनाऽस्ति चेतनो नास्ति। शुद्धः परिपूर्णः केवलः चेतनाऽस्ति। अतः स चित्, चिद्रूपः, चिद्घनश्च कथ्यते। चेतना चेतनभावस्य योग्यता, ज्ञातृभावस्य, द्रष्टृभावस्य च योग्यता कथ्यते। अतस्तं चिति-दृशिज्ञानस्वरूपं च कथयन्ति। तृतीया वार्ता इयमस्ति यत् स दिक्कालानवच्छिन्नोऽस्ति, दिशः कालाच्च परोऽस्ति।

इयं वार्ताऽपि निश्चिततरूपेण कथयितुं शक्यते यदात्मा एकः अखण्डश्चास्ति। चेतनोऽनेकोऽस्ति परन्तु आत्मा, चेतना, चेतनभावस्य योग्यता ज्ञातृभवस्य कर्तृभावस्य भोक्तृभावस्य च शक्तिरेकाऽस्ति। अनेकचित्तेन सार्धं मिलित्वा सः अनेकजीवो बोभूयते, अनेक शरीराभ्यन्तरे स्थित्वा अनेकशरीरी, अनेकशरीरं च संपद्यमानेऽस्ति। आत्मनोऽद्वितीयतायाः साक्षी आप्तपुरुषाणां कथनमस्ति। ते आचार्य आचार्य कथयन्ति यत् तुरीयावस्थायां द्वैतस्य प्रणाशभावो जायते। इयं वार्ता बुद्धिसङ्गताऽपि प्रतीयते। यदि आत्मानः एकस्मादधिकाः स्युस्तर्हि तेषां व्यावर्तकं किं भविष्यति, अर्थात् स कः पदार्थो भविष्यति य एकमात्मानं अपरस्मात् पृथक् करिष्यति? यस्यामवस्थायामात्मा आत्मनः स्वरूपेऽवस्थितो भवति तत्र चित्तमपि नावतिष्ठते का कथा शरीरस्य। अपरो द्वितीयो व्यवच्छेदको नहि भवितुं शक्नुयात् अत आत्मा एकः अखण्डः अच्छेद्यश्चास्ति।

इदमपि स्पष्टमस्ति यदात्मस्वरूपमेकरसमस्ति, तस्मिन् परिवर्तनं नहि भवति। यदि स परिणामी भवेत् तदा तस्मिन् क्रमो भवेत्, कालानुभूतिः स्यात्, अपरं च स प्रज्ञानानां चित्तस्य परिणामानां च साक्षी नहि भवेत्। इयमेव रसता उपनिषत्सु आनन्दः कथ्यते।

सारांशोऽयमस्ति यद् आत्मनः सम्बन्धे एतावत्तु कथयितुं शक्यते यत् स एकः; अखण्डः, दिक्कालानवच्छिन्नः; दृशिमात्रं, चितिमात्रं केवलज्ञानस्वरूपः सच्चिदानन्दोऽस्ति। ( सत् + चित् + आनन्दः )। सत्यं तु एतदस्ति यदेतावान् विस्तारोऽपि अनावश्यकोऽस्ति। केवल सत् चित् च कथनं पर्याप्तमस्ति। अपराः सकला वार्ता एतदन्तर्गताः सन्ति। इतोऽधिकं विवेचनं दुष्करमस्ति। नेति नेतीत्येतदतिरिक्तमन्यद् यत् कथितं भविष्यति तदनुचितं भविष्यति। आत्मा साक्षात्कार्योऽस्ति, अवधारयितव्यो नास्ति।

# ८ ब्रह्माधिकरणम्

अस्माकमेतत् प्रतीयते यत् शरीराभ्यन्तरे चित्तमस्ति। अपरं चेदानीमस्माभिरेतद् दृष्टमस्ति यत् चित्ताभ्यन्तरे चित्तस्य प्रेरक आत्माऽस्ति। अनया दृष्ट्या स प्रत्यगात्मा [ प्रत्यक् + आत्मा ] कथ्यते।

आत्मा एकोऽस्ति। अतः स सर्वेषां शरीराणां शरीरी, सर्वेषां चेतनानां चेतना, सर्वेषां चित्तानां साक्षी, सर्वेषां जीवानामन्तरतमोऽस्ति। सर्वे जीवास्तस्यैव सक्रियाणि रूपाणि सन्ति; सर्वाणि शरीराणि तस्यैव शरीराणि सन्ति, सर्वाणि चित्तानि तस्यैव चित्तानि सन्ति, सर्वेषु चेतनेषु तस्यैव ज्योतिररिस्त तस्यैवाभिव्यक्तिरस्ति। अनया दृष्ट्या आत्मा ब्रह्म कथ्यते।

यद्द्वारा कस्यचित् पदार्थस्य वास्तविकं रूपं छादितं जायते स उपाधिः कथ्यते। ब्रह्म एकं भवदपि शरीरेण चित्तेन च आच्छादितम् अनेकं सम्पन्नमस्ति। अतः शरीरं चित्तं च ब्रह्मण उपाधी स्तः। वयं दृष्टवन्तः स्मः यत् शरीरं चित्ते संविन्मात्रमस्ति; एतदतिरिक्ता तस्य काप्यपरा सत्ता नास्ति। अतो ब्रह्म चित्तेन योगात् एकस्मादनेकं भवदस्ति। चित्तमेव ब्रह्मणो मुख्य उपाधिरस्ति।

---

# चतुर्थोऽध्यायः

## नानात्वस्य सूत्रपातः

अस्माकमिदानीं यावदध्ययनस्य यो निष्कर्षः स एवं लेखितुं शक्यतेः—

( १ ) ब्रह्म आत्मा वा एकोऽस्ति। तस्य स्वरूपं सत् चिच्चास्ति सोऽपरिणामी दिक्कालाभ्यां परश्चास्ति।

( २ ) चित्तेन सार्धं मिलित्वा स एकः सन्ननेकः संजायते। चित्तोपाधिविशिष्ट आत्मा, अर्थात् जीवः, चेतनोऽस्ति।

( ३ ) चित्तं प्रत्यगात्मनः प्रकाशे, तस्य शक्तेराश्रयेण, कर्म करोति अतस्तस्य चेतनभावस्य भ्रान्तिर्भवति। चित्तमसंख्यसंस्काराणां भाण्डागारोऽस्ति। संस्कारवैषम्यं जीवानां सजातीयभेदानां कारणमस्ति।

( ४ ) चित्ते याः संविद उत्पन्ना बोभूयन्ते तत्कारणादस्माकं बाह्यजगतः प्रतीतिर्भवति।

आसु चतसृषु वार्तासु विचारेणायं परिणामो निःसरति यद् विश्वस्मिन् द्वौ पदार्थौ सत्ये स्तः, अपरिणामी आत्मा परिणामि चित्तं च।

अनयोर्द्वयोर्योगेन विश्वं सम्पद्यते। यदि योगो न भवेत् तदा न तु चेतनोऽस्मद्भावं भजेत, नापि चित्ते संविद उत्तिष्ठेयुः। संविदामभावे युष्मत्सत्ताऽपि न स्यात्। अतो जगतः सम्यगवबोधे अस्माकं त्रयाणां प्रश्नानामुत्तरं मिलेत्ः—

( १ ) प्रत्यगात्मनश्चित्तेन योगः कथमभूत् ?

( २ ) प्रत्यगात्मनाऽयुक्तस्य संविद्विहीनस्य च चित्तस्य स्वरूपं किमस्ति ?

( ३ ) प्रत्यगात्मनो योगे जाते चित्ते संविदः केन प्रकारेण उत्तिष्ठन्ति ?

यत्र वयं 'कथम्' 'केन प्रकारेण' इति कथितवन्तः स्मः, तत्र साधारणवार्तालापे किमर्थम्, इत्यस्य प्रयोगो भवति।

प्रथमप्रश्नद्वयस्योत्तरे अस्मदः तृतीयस्य प्रश्नस्योत्तरे युष्मदः कुञ्चिकाऽस्ति।

य आत्मा सर्वथा अतर्क्योऽस्ति तस्य सम्बन्धे कथं किमर्थमिति प्रश्नस्योत्तरप्रदानं, तस्य तर्कविषयतासम्पादनं सुसाध्यं नास्ति। तथापि तर्केण सहायता मिलति। योगिन आत्मनः सम्प्रज्ञातसमाध्यनुभवस्य अस्माकं पार्श्वपर्यन्तं समुपस्थापनस्य यत्नं कृतवन्तः सन्ति परन्तु वयं सावधानं कृतवन्तः स्मो यदिमा वार्ताः—मम संकेतः प्रथमप्रश्नस्य दिशि वर्तते—अनुभवगम्याः सन्ति। एषां यज् ज्ञानं भवति तदतर्क्यमस्ति परन्तु इदं ज्ञानं तर्कस्य आधारः संपादयितुं शक्यते अपरं च अस्य तर्कस्य सहायतया जगतः प्रतीयमानं रूपं सम्बोधयितुं शक्यते। इदमेव तस्य सत्यत्वे प्रमाणमस्ति।

# १ चित्तस्वरूपाधिकरणम्

पूर्वं यत् प्रश्नत्रयमुपस्थापितमस्ति तेषु द्वितीयोऽयमस्ति यत् चित्तस्यात्मनः स्वरूपं किमस्ति ? येन पदार्थेन आत्मनो योगोऽभूत् तस्य स्वरूपे ज्ञाते सति एतत्सम्बोधने सुविधा भवेद् यद् द्वयोर्योगः केन प्रकारेणाभवत्।

चित्तस्य स्वरूपसम्बन्धे वयं पूर्वाधिकरणेषु कतिपुचित् स्थलेषु किञ्चिन्नु किञ्चित् कथितवन्तः स्मः। यथा चेतोव्यापाराधिकरणे कथितमस्ति यत् 'अच्छेद्यचेतोव्यापारस्यैव नाम चित्तमस्ति। प्रज्ञानानां सततप्रवाहाद् भिन्नस्य चित्तस्य कापि सत्ता नास्ति'। तत्रैव एतदपि कथितमस्ति यत् ''प्रमाण, विपर्यय स्मृति राग द्वेष संकल्पादि परिणामानां निरन्तर्वर्तिनी माला, चेतोव्यापारः कथ्यते'। इतः प्रथमं सेन्द्रियप्रत्यक्षाधिकरणे मनोऽहंकारबुद्धीनां प्रसङ्गे कथितमस्ति यत् 'वस्तुतोऽन्तःकरणं चित्तं वा एकमस्ति परं क्रमात् त्रिप्रकारककर्मकरणेन तस्य नामत्रयं दत्तमस्ति' इदानीमेव कानिचित् पृष्ठानि पूर्वं प्रज्ञानात्मवादे प्रज्ञानस्य परिभाषा इत्थं कृतास्ति यत् 'कस्मिंश्चित् क्षणविशेषे चित्तस्य यद् रूपं भवति तत् प्रज्ञानं कथ्यते' अपरंच तत्रैव उपरिष्टात् चलित्वा इदं दर्शितमस्ति यत् चित्तस्य कस्मिंश्चिद्रूपे ज्ञानं प्रधानं भवति, कस्मिंश्चित् क्रिया, कस्मिंश्चिदिच्छा परन्तु एकस्य प्रधानतया सार्धं प्रत्येकमवस्थायामवशिष्टं द्वयमपि तिष्ठत्येव। इदमपि कथितमस्ति यत

प्रत्येकं प्रज्ञानं नाशात् पूर्वमात्मनः संस्कारं परवर्तिने प्रज्ञानाय दत्त्वा याति अपरमियं वार्त्ता वारं वारमावृत्ताऽस्ति यत् चित्तं वासनानां योग्यतानां च भाण्डागारोऽस्ति ।

एषां कथनानां मेलनेन चित्तस्य स्वरूपं सम्बोधे आयातुं शक्नोति । प्रथमं संस्कारा गृह्यन्ताम् । यदा प्रज्ञानं ज्ञानेच्छासंकल्पानां समुदायोऽस्ति तर्हि एकस्मात् प्रज्ञानात् अपरस्मिन् प्रज्ञाने ज्ञानेच्छाक्रिया अन्तरिता भवितुं शक्नुवन्ति' अर्थात् ज्ञानादीनां संक्रमो भवितुं शक्नुयात् । योग्यताया अर्थोऽस्ति अध्यवसायकरणस्य योग्यता ऐतत्कालिकसंविद्-विशेषस्य सामकालिकद्वितीयसंविद्भिः सह संबद्धताकरणम् अथवा द्वयोः संस्कारयोः संतोलनम् अध्यवसायस्य रूपमस्ति अपि चेयमेव ज्ञानस्य प्रक्रियास्ति । चेतोव्यापार-स्यायमेव मुख्यांशोऽस्ति । अस्य विश्लेषणस्यायं सारो निष्कीर्णः यद् ज्ञानेच्छासंकल्पानां समुच्चयस्यैव नाम चित्तमस्ति ।

एकोयमाक्षेपो भवितुं शक्नोति यत् चित्तस्वरूपवर्णने सुखदुःखयोरुल्लेखोऽस्माभिर्नहि कृतः । अस्य कारणमिदमस्ति यत् सुखदुःखे ज्ञानेच्छासंकल्पेभ्यो बहिर्न स्तः । इच्छाया रागद्वेषाविति रूपद्वयं वर्तते । क्रोधलोभोत्साहौत्सुक्यस्नेहप्रेमजुगुप्सादयो यावन्तो भावाः सन्ति ते सर्वे एतद्द्वयान्तर्गताः सन्ति । या संवित् स्मृतिर्विचारो वा समक्षमायाति तद् यदि प्रेयः प्रतीयते अर्थात् उपादेयं प्रतीतं स्यात् तदुपरि रागो भवति यदि वा तदवद्यं प्रतीयते, प्रतिकूलं भवतीत्यर्थः अर्थात् हेयं प्रतीतं भवित, तदुपरि द्वेषो भवति । रागे चित्तं तस्य ज्ञानविषयत्वं नैरन्तर्येण भावयितुं वाञ्छति । द्वेषे तस्य ज्ञानाविषयतासंपादनं वाञ्छति । एतदर्थं य आभ्यन्तरः प्रयत्नो भवति स संकल्पोऽस्ति । यदि ज्ञानेच्छासंकल्पा एकस्मिन् बिन्दौ अर्थात् एकस्मिन् वस्तुनि एकत्र भवन्ति तदा चित्ते विशिष्टा स्फूर्तिस्तीव्रता वाऽऽयाति । अस्य नाम सुखमस्ति । यदि ज्ञानस्य विषय एक इच्छासंकल्पयोश्चापरो भवति तदा एकप्रकारकः क्षोभो भवति । तस्यैव नाम दुःखमस्ति । यदि शर्करा रोचते, शर्कराप्राप्तये यत्नः कृतः अपि च शर्करा खादिता चाभूत् अर्थात् शर्करया एव संविद्द्वारा ज्ञानमभूत् तदा सुखं भविष्यति, यदि शर्करायाः स्थाने मिरिचं खादितं जातं संविद्द्वारा मिरिचस्य ज्ञानमभूत् तदा दुःखं भविष्यति । अतः सुखदुःखयोर्ज्ञानेच्छासंकल्पेभ्यः पृथक्करणस्यावश्यकता नास्ति । वयं पुनस्तदेव स्थानं प्राप्ताः स्मो यद् ज्ञानेच्छासंकल्पानां समुच्चयस्यैव नाम चित्तमस्ति ।

अस्माभिरिदानीमेव दृष्टमस्ति यद् इच्छासंकल्पौ ज्ञानम् श्रितौ स्तः । अतो विभिन्नचित्तेषु मुख्यो भेदो ज्ञानप्रयुक्त एव भविष्यति । कस्यचिज् ज्ञानमधिकं, कस्यचित् क्षामं भवेत्

अपि चैतदनुसारं तेषामिच्छासंकल्पौ भवेताम्। एकोऽपरोऽपि भेदो भवेत् यद् वयमध्यवसायकरणस्य योग्यतां कथितवन्तः स्मः। ज्ञानेच्छासंकल्पा अध्यवसायस्य योग्यता च चित्तस्य स्वरूपाणि सन्ति।

ज्ञानेच्छासंकल्पानां कश्चिन्नु कश्चिद् विषयो भवति। चित्तेऽनेकप्रकारका विषया भवन्ति परन्तु एषां सर्वेषां जटायां शब्दादयः पञ्च संविदः सन्ति। यदाऽऽत्मनो ज्ञातृत्वयोग्यता सक्रिया भूत्वा संविदुपरि कर्म करोति तदा इच्छा समुत्पद्यते अथ च कर्तृत्वयोग्यता सक्रिया भूत्वा संविदुपरि कर्म करोति तदा संकल्प उदेति। ज्ञातृत्वसामर्थ्यस्यैव नामान्तरम् अध्यवसायस्य योग्यताऽस्ति। अस्या विवेचनाया मथितार्थोऽयं निःसृतः यत् संविदः प्रति सक्रियज्ञातृत्व-भोक्तृत्व-कर्तृत्वशक्तेर्नामैव चित्तमस्ति। अतश्चित्तमात्मन एव तदवस्थाविशेषोऽस्ति यस्यां संविदः प्रति स सक्रियो भवति संविद्भिः प्रभावितश्च भवति।

कदाचित् तिस्रः शक्तयस्तुल्यरूपेण व्यक्ता भवन्ति, कदाचित् काचित् तासां व्यक्ता भवति। सक्रियताया मात्रायामपि भेदो भवितुं शक्नोति। चित्तानामनेकरूपतायाः तेषां पारस्परिकासमानतायाश्चेदमेव कारणमस्ति। जीवानामनेकताया वैषम्यस्य चायमेवाधारोऽस्ति।

## २ मायाधिकरणम्

अस्माकं समक्षं त्रयः प्रश्ना उपस्थिता आसन्। पूर्वाधिकरणे तेषां मध्ये एकस्योत्तरमुपलब्धमभूत्। तत्प्रकाशेऽस्माकं शेषयोर्द्वयोरुत्तरम् अन्वेष्टव्यमस्ति। प्रश्नौ एतौ स्तः—

आत्मनश्चित्तेन योगः कथमभूत्?

चित्ते संविदः केन प्रकारेणोत्पन्ना भवन्ति?

इदं प्रथमं कथितमस्ति यद् आत्मनां समष्टिदृष्ट्या आत्मनो ब्रह्मसंज्ञा भवति। अत्रात्मनोऽनेकचित्तेन सार्धं योगस्य सम्बन्धे विचारः करणीयोऽस्ति। अस्मिन् प्रसङ्गे ब्रह्मशब्देन व्यवहारः साधु भविष्यति।

वयं दृष्टवन्तः स्मो यद् यदा आत्मा संविदः प्रति सक्रियो भवति तदा स चित्तरूपः सम्पद्यते। अस्यां दशायामात्मनश्चित्तेन सार्धं योगस्यार्थोऽभूत् चेतनाया निष्क्रियरूपस्य तस्याः सक्रियरूपेण योगः अर्थात् निष्क्रियस्य सक्रियत्वम्। अतः प्रथमप्रश्नस्य तात्पर्य-

मिदमस्ति यत् ब्रह्म यन्निष्क्रियम् अर्थात् चेतना—ज्ञातृत्व, कर्तृत्व-भोक्तृत्वमात्रम्—आसीत्, तत् सक्रियम्—अर्थात् चेतनः—ज्ञाता, भोक्ता, कर्ता—कथमभवत् ?

कोऽपि पदार्थ आत्मनोऽवस्थां तदैव परिवर्तयितुं शक्नोति यदा तस्य कयाचिद् बाह्यया शक्त्या नोदनं प्राप्तं भवेत् । अयं सिद्धान्तो न्यूटनेन जाड्यनियमनाम्ना प्रतिपादितः । यावत्पर्यन्तं किञ्चित्प्रकारको बाह्य आघातो न लगेत् तावत्पर्यन्तं यद् वस्तु निश्चेष्टमस्ति तन्निश्चेष्टं स्थास्यति, यद् गतिशीलमस्ति तत् तयैव गत्या सततं चञ्चलिष्यते, परन्तु ब्रह्मणो नोदकः पदार्थः क आसीत् ? ब्रह्म एकमेव नहि प्रत्युत अद्वयमप्यस्ति । तदतिरिक्त-मपरं किञ्चिन्नास्ति । अस्माकमेतत् प्रतीतमासीत् यच्चित्तस्यापि स्वतन्त्रा सत्ता भवेत् परन्तु तद् ब्रह्मण एव सक्रियं रूपं निष्कीर्णम् । अतस्तद् ब्रह्मणः पृथङ् नास्ति । ब्रह्म एकमात्र सत्यमस्ति । तत् सर्वचिदस्ति । केवलं तस्यैव सत्ताऽस्ति । पुनस्तत् सक्रियं कथं सम्पन्नम् ? एतन्नहि कथयितुं शक्यते यच्चित्तस्य प्रेरणया एवमभूत् यतो हि परवर्ति सक्रियं रूपं पूर्ववर्ति-निष्क्रियरूपस्य प्रेरकं नहि भवितुमशकत् ।

विमर्शस्याग्रे नयनात् प्रथमं वयं तां चेतनायनां 'या प्रथमं दत्ताऽस्ति, पुनरावर्तयामः । यत्स्तोपरि अत्र बुद्धिर्धावित तद् वस्तुतोऽतर्क्यमस्ति; अनुभवगम्यमस्ति, अवबोधस्य विषयो नास्ति । अतस्तत्रोपस्थितेः पूर्वमेव भाषायाः गती रुध्यते । परवर्ती, पूर्ववर्ती, प्रथमम्, पश्चात्, तदा प्रभृतयः शब्दाः कालवाचिनः सन्ति परन्तु निष्क्रियं ब्रह्म तु कालविशिष्टं नास्ति । अस्माकं विवशतया एभिः शब्दैः व्यवहर्तव्यम् अन्यथा विज्ञानस्य गतिरवरुद्धा भविष्यति । अर्थात् मननशीलैः भाषाजनितभ्रान्ते-र्विकल्पाच्चात्मत्राणार्थं सततं प्रयतितव्यम् ।

इदमपि कथयितुं न शक्यते यत् संविद्भ्यो नोदनं लब्धम् । संविच्चित्तस्य परिणा-मोऽस्ति । चित्तसंविदावन्योन्याश्रिते स्तः । संविदं विना चित्तं नहि भवति यतो हि संविदो-वलम्ब्यैव ज्ञानेच्छासंकल्पा भवन्ति परन्तु चित्तं विना संविदोऽपि भवितुं न शक्नुवन्ति । इदं विचारणीयमस्ति यच्चित्ते संविदः कथं भवन्ति । इयं सा महत्त्वपूर्णा ग्रन्थिरस्ति यस्या उद्घाटनस्य प्रयास उपरिष्टात् अस्माभिः कर्तव्योऽस्ति परन्तु इदं तु स्पष्टमस्ति यत् संवित् तस्य चित्तस्य हेतुर्भवितुं नहि शक्नोति यस्य सा स्वयं परिणामोऽस्ति । लहरीणां समुच्चयस्य नाम बाढं समुद्रो भवेत् परन्तु समुद्रस्योत्पत्तौ लहरी प्रेरिका भवितुं नहि शक्नोति ।

तत्त्वान्तरस्याभावे इयं कल्पना क्रियते यत् ब्रह्मात्मनोऽन्तःप्रेरणया सक्रियं सम्पन्नम् अर्थात् निष्क्रियस्य सक्रियत्वसम्पत्तिस्तस्य स्वभावोऽस्ति । परन्तु इयं कल्पना अग्राह्यास्ति ।

एतन्माननायां अर्थोऽयं भविष्यति यद् ब्रह्म परिणामि, परिवर्तनशीलं चास्ति। परन्तु वयं प्रथममेव सिद्धं कृतवन्तः स्मो यदेवं नहि भवितुं शक्नोति। यदि ब्रह्म स्वयं परिणामि अभविष्यत् तदा तत् चित्तस्य परिणामानां, प्रज्ञानानां प्रवाहस्य च, साक्षि नहि अभविष्यत्। अतो ब्रह्म आत्मनः स्वभावेनापि चित्तरूपे परिणतं नह्यभूत्।

अस्य तात्पर्यं तु इदं निःसृतमस्ति यद् ब्रह्म यादृशमासीत् तादृशमेवातिष्ठत, तस्मिन् किञ्चित् परिवर्तनं नाभवत्। परन्तु यदि तस्मिन् परिवर्तनं नाभूत् तर्हि चित्तं कुत आयातम्? संविदः कस्मिन् भवन्ति? यदि चित्तसंविदौ न स्तस्तर्हि पुनरिदं जगत् किमस्ति? यदि ब्रह्म परिणतं नह्यभूत् तर्हि तदतिरिक्तमपरं किञ्चित्तु आसीदेव नहि यस्य जगद् रूपं भवेत्। शून्यात्, असतश्च सद् भवितुं शक्नुयादेव नहि, अतो ब्रह्मणो यथावद्भावस्यार्थोऽयं भवति यद् जगत् भवितुं शक्नुयादेव नहि।

परन्तु जगत् प्रतीतं तु वोभूयते। यद् भवितुं नहि शक्नोति तदस्ति, एवं ज्ञातं भवति। इयं बृहज्जटिला समस्यास्ति। अस्य चित्तस्यायं निश्चयोऽस्ति यद् जगतो व्यक्तीभावेऽसम्भवोऽस्ति तस्यैव जगतोऽनुभवो भवेत्, अस्यायमेव हेतुर्भवेत् यद् अयमनुभवो भ्रान्तोऽस्ति। किञ्चिन्न भवेत्, एवं नास्ति। ब्रह्मास्ति। तस्मिन्नेवास्पदे चित्तमध्यासेन जगत आरोपं कुर्वदस्ति। अयं भ्रमोऽस्ति, अविद्यास्ति। इयं मूलाविद्या, यया निष्क्रियं ब्रह्म सक्रियं प्रतीतं भवति, माया कथ्यते।

माया सती कथयितुं नहि शक्यते यतो हि यदि सा सती भवेत् तर्हि नित्यापि भवेत्, पुनर्ब्रह्मणि जगतो नित्यं प्रतीतिर्भविष्यति। अपरम् आत्मसाक्षात्कारः कदापि नहि भवितुं शक्ष्यति। सा असती अपि नहि कथयितुं शक्यते यतो ह्यसत् जगतो हेतुर्नहि कथयितुं शक्यते। सा ब्रह्मणो भिन्नास्ति यतो हि ब्रह्म चिदस्ति; अपरं माया, भ्रान्तिः, चिन्नहि भवेत्। एतेन सार्धमेव सा ब्रह्मणोऽभिन्नाऽस्ति यतो हि यत् किञ्चिदस्ति तद् ब्रह्मास्ति। सा युगपदेव सती असती, ब्रह्मणो भिन्ना अभिन्ना, चास्ति। अतस्तस्या निर्वचनं नहि कर्तुं शक्यते। सा ब्रह्मेव परममतर्क्याऽस्ति अनवधार्या चास्ति।

ब्रह्मणो मायायाश्च सम्बन्धस्य सम्यग्बोधनार्थं कतिचन उपमा दीयन्ते। कश्चन मायां ब्रह्मणः स्वभावं कथयति परन्तु एतेन बोधे काचित् सहायता नहि लभ्यते। कदाचिन्मायां आधेयो ब्रह्म चाधारः कथ्यते परन्तु अनयोः शब्दयोः प्रयोगेण द्वैतस्य अर्थात् द्वयोः

सत्त्वयोर्भानं भवति। माया ब्रह्मणश्छायाऽपि नहि कथयितुं शक्यते यतो हि छायापातनाय पदार्थान्तरस्यापेक्षा भवति। इतो युक्ततरं निदर्शनमिदमस्ति यत् अनयोर्द्वयोस्तादृशः सम्बन्धोऽस्ति यादृशः पत्रस्य द्वयोः पृष्ठयोर्भवति। पृष्ठे द्वे स्तः, अतः परस्परं पृथक् सत्ता रखतः परन्तु क्व एकं समाप्तं भवति अपरं चारब्धं भवति इदं नहि कथयितुं शक्यते। यत्र एकमस्ति, तत्र द्वितीयमस्ति; एकमस्ति अतो द्वितीयमप्यस्ति। यद्येकं न भवेत् तर्हि वयं द्वितीयमपि ज्ञातुं न शक्नुमः। एतदस्माकं दृष्टिकोणोपरि निर्भरमस्ति, यत् वयं कदा किं पृष्ठं पश्यामः। मायाब्रह्मणोः कश्चन ईदृश एव सम्बन्धोऽस्ति। यया मीयते सैव मायोच्यते। अविद्याद्वारा ब्रह्मज्ञानं भवति, चित्तजगतो रूपे ब्रह्म ज्ञेयं भवति, अतः अविद्याम् अर्थात् मूलभ्रान्तिम् मायां कथयन्ति। यदि माया नाभविष्यत् तर्हि जगतः प्रतीतिर्नाभविष्यत् चित्तानि नाभविष्यन् जीवाश्च नाभविष्यन्।

इयमापत्तिः कर्तुं शक्यते यन्मायायाः स्वरूपस्य सम्यग् बोधो ब्रह्मस्वरूपसंबोधादपि कठिनोऽस्ति। आपत्तिर्युक्ताऽस्ति परं वयं विवशाः स्मः। यदस्ति तदस्ति, वयं तत् सम्बोद्धुं शक्नुमो न वा सम्बोद्धुं शक्नुमः। अवधारणं तत्र भवति यत्राज्ञातो ज्ञातेन सह मेलयितुं शक्यते; ज्ञातस्य ज्ञातेन अज्ञातस्य अज्ञातेन सह मेलनेन अवधारणं नहि भवेत्। चित्तस्य जगति भवद्भिर्दृग्विषयैः व्यवहर्तव्यम्। इयमेव तर्कस्यावधारणस्य च सामग्री वर्तते। परन्तु अस्माकं दैनन्दिनजीवनेऽपि ईदृशा अनुभवा भवन्ति येऽवधृता नहि भवन्ति, पुनरपि वयं तान् सत्यान् मन्यामहे। शर्करायाः स्वादम् अग्नेर्ज्वलनं च वयं केनापि तर्केण नहि जानीमः, नवा ज्ञातुं शक्नुमः। पुनस्तर्कस्य पद्धतिस्तस्या अवस्थायाः कृते कथमुपयुक्ता भवेत् यस्यां चित्तमपि नासीत्। तत्र तु सा सामग्री एव नासीत् या चित्तस्याधारोऽस्ति। तर्कस्य तुला ईदृशानुभूतेस्तोलनार्थं नहि सम्पन्नास्ति। परन्तु यदा वयमिमामनुभूतिं शब्दैर्व्यक्तीकर्तुं प्रयतामहे तदा तां हठात् तर्कस्य क्षेत्रे आनयामः चित्तं ताम् अपराभिरनुभूतिभिर्मेलयित्वा अवबुध्यते, भावितर्कस्य कृते सामग्रीं सम्पादयति। परन्तु इयं प्रणाली नहि पर्याप्ता भवति। संतुलना सजातीयानां भवेत् नतु विजातीयानाम्। हस्तिनो घोटकैर्गर्दभैर्बलीवर्दादिपशुभिर्मेलनं तु कञ्चनार्थं रखति परन्तु हस्तिन आम्रेण सह सन्तुलनं नहि भवितुं शक्नोति। एकम्, अखण्डम्, अद्वयम्, निष्क्रियं च ब्रह्म चित्तस्य विषयो नास्ति, तत् तद्वस्तुमध्यतोऽपि नास्ति यैश्चित्तं व्यापारयति; तदात्मस्वरूपस्य परित्यागं कर्तुं न शक्नुयात् पुनरपि स्वरूपभ्रष्टभूतमिव प्रतीतं भवति। इमा वार्ता अनुभवगम्याः सन्ति तत्त्वबोधविषयाः

पुनरेकाऽपरा शङ्का भवति। इयमविद्या इयं भ्रान्तिः कस्याभूत्? किं मम? परं यदा सर्वचिद् ब्रह्मास्ति तदाऽहमपि तु ब्रह्मास्मि। रज्जौ सर्पप्रतीतिर्दर्शकस्य भवति रज्जोर्नहि। परन्तु यदा मम ब्रह्मस्वरूपस्य विषये भ्रान्तिर्वोभूयते, तस्य नित्यनिष्क्रियरूपस्य सक्रियत्वकल्पनां कुर्वन्नस्मि, तर्हि पुनस्तु इदं कथनं भविष्यति यद् ब्रह्मण आत्मनो विषये भ्रान्तिरभूत् तदात्मानमन्यथा सन्तमन्यथा प्रतिपन्नम्, निष्क्रियं भवदपि आत्मानं सक्रियमज्ञासीत्। परन्तु किं ब्रह्म आत्मनः शुद्धं स्वरूपम् अर्थात् निष्क्रियं स्वरूपं ज्ञातुं शक्तं स्यात्? निष्क्रियं स्वरूपं ज्ञातृत्वमासीत् नहि ज्ञातृ। यो ज्ञाता नास्ति स किञ्चित् ज्ञातुं नहि शक्नोति। अतो ब्रह्म आत्मनो निष्क्रियं स्वरूपं निष्क्रियावस्थायां ज्ञातुमेव नहि शक्तम् आसीत्। ज्ञातरि भवति, अर्थात् सक्रिये सति एव तदात्मानं परिचेतुं शक्तं स्यात्। अविद्याकारणादहमात्मानं पृथक् चेतनं च मन्ये। यावत्पर्यन्तमविद्यास्ति तावदेवाहमात्मानं सक्रियं ब्रह्म सम्बोद्धं शक्नोमि, आत्मानं कस्मिन्नु कस्मिन्नर्थे ज्ञातुं शक्नोमि। अविद्यायाः क्षये जाते ज्ञानस्य सम्भावनैव नहि भवितुं शक्नोति। माया सा अद्भुता, अनिर्वचनीया अप्रतिमा चाविद्यास्ति यस्यामिदमेव नहि भवति यद् निष्क्रियं ब्रह्म सक्रियं प्रतीतं भवेत् परं तां विना ब्रह्मणः प्रतीतिर्भवितुमेव नहि शक्तासीत्; मायाद्वारा ब्रह्म अन्यथा सदन्यथैव नहि ज्ञायते प्रत्युत् ज्ञातमपि भवति।

तर्क इमां वार्तां किञ्चित् किञ्चित्तु मर्दितुं नु शक्नोति परन्तु मायां क्षुद्रावाकर्तुं तस्य सामर्थ्यं नास्ति। इयं ग्रन्थिस्तदैव भिद्यते यदा समाधौ चित्तस्तरोपरि उत्थाय आत्मसाक्षात्कारः क्रियते। तस्यामवस्थायां सर्वे संशयाः स्वयमेवोच्छिद्यन्ते।

## ३ अव्याकृताधिकरणम्

चित्तं ब्रह्मण उपाधिः कथितमासीत् परन्तु माया चित्तस्य हेतुरस्ति। अतो ब्रह्मण उपाधिर्मायास्ति। मायाद्वारा ब्रह्म प्रतीतं भवति परन्तु आत्मनः स्वरूपेण नहि। तस्यान्यथा प्रतीतिर्भवति। यत्र प्रकाशः पतेत् तत्र यदि छाया दायकं वस्तु आयाति तदा स प्रकाशो विच्छिन्नभूत इव जायते। श्वेतप्रान्तानां मध्ये मध्ये अन्धकारप्रान्ता आयान्ति। इत्थमेकं श्वेतं क्षेत्रं कतिपुचित् त्रुटितकेषु विभक्तं जायते तथा एकं कर्बुरं चित्रं च संपद्यते। इत्थं माया ब्रह्मैकस्मादनेकं संपादयति। एतदर्थं मायोपहितं ब्रह्म मायाशबलं ब्रह्म कथ्यते। माया शबलस्य ब्रह्मणः परमात्मसंज्ञास्ति।

मम समक्षं रज्जुखण्डं वर्तते । इदं सम्भवेद यद् अहं केनचित् कारणेन तन्न पश्येम यद्वा भ्रमेण तत् सर्पं मन्येय परन्तु ममादर्शनेन अन्यथादर्शनेन वा तत्स्वरूपे किञ्चिदन्तरं नहि भवति । तद् यादृशमासीत् तादृशमेवास्ति । यो मह्यं सर्पः प्रतीतो बोभूयते स मत्कृते बाढ़ं भयावह एव भवेत् । परन्तु अस्ति स रज्जुरेव । इत्थं परमात्मनोऽभिव्यक्तिर्माया-कारणाद् भवति परन्तु सः ब्रह्मणः सर्वथा अभिन्नोऽस्ति । स मायावगुण्ठनान्तरे ब्रह्मास्ति ।

ब्रह्मीभूतो भवन्नपि स ब्रह्मणो व्यतिरिक्तः, भिन्नरूपः प्रतीयते । ब्रह्म चिन्मात्रमस्ति परन्तु परमात्मा चेतनोऽस्ति । ब्रह्म ज्ञातृत्वमस्ति परन्तु परमात्मा ज्ञातास्ति । ज्ञातृत्वेन सार्धं भोक्तृत्वकर्तृत्वे अपि तिष्ठतः, परन्तु परमात्मनि इदानीमेते द्वे स्फुटिते न स्तः । अतोऽधुना स ज्ञातृमात्रमस्ति ।

असम्प्रज्ञाते, आत्मसाक्षात्कारावस्थायां, चित्तं नहि तिष्ठति । तस्यामवस्थायां व्यक्ति-रात्मनः शुद्धब्रह्मरूपे स्थिता जायते । इत एक निश्रेणितो नीचैः, संप्रज्ञातसमाधेश्चूडाव-स्थायाम्, अस्मिता-अहमस्मि-इयती प्रज्ञावशिष्यते । आत्माऽत्मानं जानाति, चित्ते आत्मानं प्रतिबिम्बितं पश्यति, यतो हि परिशोधिते चित्ते अधुनापरः कश्चन विषयो नाव-शिष्टोऽस्ति । संप्रज्ञातसमाधेरेतच्छिखरोपरि स्थितस्यात्मनः परमात्मरूपस्यानुभवो भवति ।

सुषुप्त्यवस्थायां चित्तस्य लय इव बोभूयते । लघुकमिव ज्ञानं तिष्ठति परन्तु तेन सार्धं भोक्तृत्वकर्तृत्वयोः बोधो न भवति । संस्कारा अपि अन्तर्धीयन्ते । जाग्रत्स्वप्न-योर्या वार्ताः परस्परं पृथक्करणवत्यो भवन्ति ता अपि तिरोहिता जायन्ते । अतो मूर्खपण्डितौ राजरङ्कौ सुषुप्तौ सर्वे सदृशाः संजायन्ते । परमात्मावस्था एतत्सदृगस्ति । ज्ञानमस्ति परं नेच्छास्ति नापि संकल्पः, नापि कश्चन संस्कारोऽस्ति ।

ज्ञानार्थं विषयोऽपेक्ष्यते । यदा परमात्मा ज्ञातास्ति तदा स किञ्चिदवश्यं जानीयात् परन्तु तदतिरिक्तमपरमस्ति किं यज्जानीयात् ? अतः स आत्मनो ज्ञातास्ति तज्ज्ञानस्य स्व-रूपमस्मिता-अहमस्मि-अस्ति ।

परन्तु ज्ञानाय चित्तरूपि साधनमप्यपेक्ष्यते । अस्मिता समाधिः निरोधप्राग्भारे चित्ते, ईदृशे चित्ते यद् अधुना निरुद्धं भविष्णु अस्ति, यत् सर्वासां संविदां, प्रत्ययानां, संस्काराणां चोपरि उत्थितमस्ति, भवति । परमात्मनोऽस्मिताज्ञानायापि ईदृशमेव निर्मलं चित्तमपेक्ष्यते ।

परन्तु वयं दृष्टवन्तः स्म यच्चेतनायाः सक्रियरूपस्य नाम चित्तमस्ति। चेतना ब्रह्मास्ति परमात्मा च तस्याः सक्रियरूपमस्ति। अतः परमात्मैव स्वचित्तमस्ति। तात्पर्यमिदमस्ति यत् परमात्मैव ज्ञातास्ति अपरं परमात्मैव ज्ञानसाधनं संस्कारादिरहितं निर्मलं सूक्ष्मं चित्तमस्ति। अस्मिन्नादिचित्तरूपे ब्रह्माणि ब्रह्मणो यत् प्रतिबिम्बमस्ति तदेव परमात्मास्ति। परमात्मन ईश्वरहिरण्यगर्भौ द्वे अपरे संज्ञे स्तः।

ईश्वरशब्दं दृष्ट्वा नहि चमत्करणीयम्। ईश्वराधिकरणे यस्येश्वरस्य खण्डनं कृतमासीत् तस्मिन्नस्मिंश्चान्तरमस्ति। नायं जगतः कर्ता, हर्ता, भर्ता वास्ति, नारम्भकोऽस्ति, नापि पुण्यपापयोर्निर्णायकोऽस्ति, नापि पुरस्कर्ता, न वा दण्डधरोऽस्ति। शास्त्रीयदृष्ट्या दुर्भाग्यस्येयं वार्ता भवेत् यदस्माभिरर्थद्वये एकस्यैव शब्दस्य प्रयोगः कर्त्तव्यो भवति। स ईश्वरो बुद्धिनिर्माणमासीत् परन्त्वयमीश्वरः परमात्मास्ति। यदि निर्माण शब्दस्य अस्थाने प्रयोगः कर्त्तव्य एव स्यात् तदा इमं मायानिर्माणं कथयेत।

यदा परमात्मा चित्तरूपेण निर्देष्टव्यो भवति तदा वयं तं हिरण्यगर्भं ब्रूमः। इदं तच्चित्तमस्ति यस्मिन्निदानीं कर्त्तृत्व भोक्तृत्वे व्यक्तीभूते न भवतः सविदश्च नहि उत्तिष्ठमानाः सन्ति।

परमात्मनि-ईश्वरे-हिरण्यगर्भे सकलं जगदस्ति परमिदानीं-व्याकरणम्- पृथक् करणं नहि जातमस्ति। एकं चित्तमस्ति, एकानुभूतिरस्ति। अतः परमात्मानमव्याकृतं कथयामः।

जीवात्मपरमात्मनोः कश्चन तादृश एव सम्बन्धोऽस्ति यादृशो ब्रह्मप्रत्यगात्मनोरस्ति। यदा वयं व्यष्टिदृष्ट्या पश्यामस्तदा चेतना प्रत्यगात्मा कथ्यते। वयं स्वशरीराभ्यन्तरे चित्तस्य सत्तां मन्यामहे अपरमस्यचित्तस्य प्रेरकत्वेन चेतनां प्रत्यगात्मानं भणामः। परन्तु चेतना एका अखण्डास्ति। अनया दृष्ट्या सा ब्रह्मास्ति। इत्थम् आत्मनश्चित्तेन परिच्छिन्नां चेतनां वयं जीवात्मानं कथयामः। आदि-चित्तेन विशिष्टं ब्रह्म परमात्मास्ति। प्रत्यगात्मा ब्रह्मणोऽभिन्नोऽस्ति, इत्थं जीवात्माऽपि, यदा तस्य चित्तम् अस्मितामात्रनिर्भासि अवशिष्यते, तत् परमात्मनः अभिन्नं सम्पद्यते।

जीवात्मा परमात्मनोंऽशः कथयितुं नहि शक्यते। अंशांशिसम्बन्धस्तत्र भवति यत्र कश्चनव्यवच्छेदको भवति। परमात्मा एकलोऽस्ति, तस्य कश्चन विभाजको नास्ति, अतस्तस्यांशा नहि भवितुं शक्नुवन्ति। एतादृशानां शब्दानां प्रयोगः केवलं लाक्षणिकशैलीदृष्ट्या न्याय्यो भवेत् परन्तु इमान् वस्तुसूचकान् मत्वोदासनेन विकल्प उत्पन्नो भवति।

एकस्या एव वार्तायाः पुनरुक्तिः नहि साधु भासते परन्तु कदाचित् वीप्सया विना कर्म नहि चलति। अतस्तस्याः पुराण्याश्वेतायनायाः दिशि पुनः पुनर्ध्यानाकर्षणमावश्यकं

प्रतीयते । ब्रह्ममायापरमात्मनां सम्बन्धस्य बुद्धिगतत्वकरणं कठिनं भवति । तस्याव-बोधस्य कृतेऽस्माकम् अस्ति, आसीत्, भूतः, इत्यादिका नवाविशब्दैः व्यवहारः क्रियते परन्तु तस्यामवस्थायां कालो नासीत्, क्रमोऽपि नासीत् । ब्रह्मपरमात्मनोर्मध्ये मायारूपा क्षीणमावरणमस्ति, पुनः को भूतः ? क्व भूतः ? कदा भूतः ? क्वचित् किञ्चिन्नहि भूतम्, यो यादृश आसीत् स तादृशोऽतिष्ठत् अस्ति च परन्तु मायाकारणात् परिणामबोधकशब्दानां प्रयोगोऽपि क्षम्यो जायते । समाधिभाषायाम् इमा वार्ता एव कथिता सन्ति यत् एकाऽनि-र्वचनीया त्रिपुरा शक्तिरस्ति । सा महासरस्वती महालक्ष्मी महाकालीति रूपत्रयवती अस्ति परन्तु वस्तुत इमानि त्रीणि रूपाणि पृथक् नहि सन्ति; सदैव परशक्तितः परस्परं चाभिन्ना अभेद्याश्च सन्ति । सा शिवनामपुरुषस्य प्रसूयते अपरं पुनस्तमात्मनः पतिं सम्पादयति । सा युगपत् कार्यद्वयं करोतिः नीचैः पातयति उपरि उत्थापयति च, मोहे च प्रक्षिपति मोहाच्च मोचयति । तस्या दर्शनार्थिनां यथा यथा तस्याः पार्श्वमायान्ति तथा तथा तेषां पुंस्त्वं क्षीयते अपरं ते स्त्रियः सम्पद्यन्ते । यथा यथा तत्संनिधानं वर्धते तथा तथा तेषां भेदा मृष्टा जाय-माना भवन्ति, सर्वे एकसदृशा भवन्तो जायन्ते । प्रभूतं निकटे उपस्थाने तेषामात्मनः सत्तामात्रस्य तु किंञ्चिद् भानं भवति अपरा काचित् प्रतीतिर्नहि अवशिष्यते । इतः पश्चात् तस्यां विलीयन्ते, तस्यामवस्थायां तेषामात्मसत्ताऽपि विलीनीभूता जायते । श्रवणे तु एतत् कथानकसदृशमस्ति, परन्तु एतदन्तरे गूढं रहस्यं भरितमस्ति । वार्ता अनुभवगम्यास्ति परन्तु तर्कापेक्षया कथानकरूपेण तद्व्यक्तीकरणं किञ्चिदधिकं सुगमं प्रतीतं भवति ।

अत्र चेतनामाययोर्द्वयोः कृते अनिर्वचनीयेति विशेषणमायातमस्ति । ज्ञातृत्व-भोक्तृत्व-कर्तृत्वानि महासरस्वती महालक्ष्मी महाकाल्यः कथितानि सन्ति । परमात्मा शिवतत्वमस्ति। स मायायाश्चेतनायाश्च सन्ततिरस्ति परन्तु तस्मिन् सामर्थ्यत्रयं विद्यमानमस्ति । स हिरण्य-गर्भेण अर्थात् चित्तस्य सूक्ष्मतमरूपेण निर्मलबुद्ध्येति यावत्व्यवह्रियते । अतः शक्तेः स्वामी, पतिरपि कथयितुं शक्यते । पराशक्तिर्वेदेषु स्वधा, आत्मनाऽऽत्मानं धारयित्री, निराधारा-अपि कथिताऽस्ति । सा ब्रह्मणो रूपं क्षपयति, अतोऽविद्यारूपास्ति । यः साधकः परतत्वा-न्वेषणं कर्तुं वाञ्छति स शनैः शनैः संस्कारादीन् त्यजति । अतस्तासां वार्तानां परित्यागो भवति या एकं जीवमपरस्माद् भिन्नं दर्शयन्त्यः सन्ति । सर्वे ईदृशा जीवा एकसदृशा भवितुमारभन्ते अथ च तेषां तेषां स्वरूपाणां च मध्यस्थमावरणं क्षीणं च भवितुमारभते । सम्प्रज्ञातसमाधेरन्ते केवलमस्मितावशिष्यते । इतः पश्चाद् आत्मनः पृथक् सत्ता क्षीयते। मायायाः आवरणं दूरीभवति, अनिर्वचनीया आद्या—शुद्ध चेतना-एवावशिष्यते ।

# पञ्चमो ऽध्यायः

## नानात्वस्य प्रसारः

वयं द्वयोः प्रश्नयोरुत्तरं दत्तवन्तः स्मः। इदानीं तृतीयः प्रश्नो ऽवशिष्यते। अयं विचारः करणीयोऽस्ति यत् सक्रियत्वानन्तरं ब्रह्मणः संविदः कथं योभूयन्ते।

## १ विराडधिकरणम्

अस्माभिर्हिरण्यगर्भ आदिचित्तं कथितमस्ति। तस्य प्रजापतिसंज्ञाऽप्यस्ति। तस्मिन साधारणचित्तेषु च कियन्तो भेदाः सन्ति। एकं तु तत् संस्कारविहीनमस्ति अपरं तस्मिन् शब्दादिसंविदश्च नोत्तिष्ठन्ति। तस्मिन् न सुखमस्ति नापि दुःखम्। अपरं तद् ज्ञानप्रधानम् शुद्धं, निर्मलम्, बुद्धिस्वरूपमस्ति।

वयमग्रावधि ज्ञातृत्व-भोक्तृत्व-कर्तृत्वानि क्वचित् योग्यतां क्वचित् सामर्थ्यं कथयन्तः स्मः। एतौ द्वौ शब्दौ समानार्थकौ स्तः परन्तु एतौ ज्ञातृत्वादेः सक्रियरूपस्य बोधं कारयितुं न शक्नुतः। यदा सामर्थ्येन व्यवहारः क्रियते तदा तत् शक्तिरूपं जायते। हिरण्यगर्भे ज्ञातृत्वं शक्तिरूपेणाऽस्ति, एतच्छक्तिद्वारा ईश्वर आत्मनो ज्ञाताऽस्ति॥

परन्तु तिस्रो योग्यताः सार्थास्तिष्ठन्ति, यतश्चेतना एकः पदार्थोऽस्ति। यदा एका योग्यता सक्रिया जाता तदा शेषे द्वे चिरसुप्ते नहि स्थातुं शक्ते आस्ताम्। तयोरपि सक्रियस्वभावः-योग्यतातः शक्तिरूपधारणम्-अनिवार्यमासीत्। हिरण्यगर्भस्य ज्ञानेन सार्थसार्थम् इच्छासङ्कल्पयोरभिव्यक्त्यवरोधसंभवो नासीत्। परन्तु यथा ज्ञानार्थं विषयोऽपेक्ष्यते

तथैव इच्छासंकल्पयोः कृतेऽपि विषयस्य भावः अनिवार्योऽस्ति । ज्ञानस्य विषयस्तु परमात्माऽऽसीत् परन्तु इच्छासंकल्पौ कं विषयं प्रति भवेताम् ? प्रियात् प्रियतरं वस्तु भवेत् परन्तु यदि तन्निरन्तरं ज्ञानक्रियो न स्यात् तदा इच्छासंकल्पयोरास्पदं न भवेत् । अतो हिरण्यगर्भस्य सद्यो जागरिते इच्छासंकल्पशक्ती तूर्णे भवितुं न हि अशक्नुताम् ।

अतृप्तयाऽनया हिरण्यगर्भः क्षुब्धोऽभवत् । इदं वैदिकवाङ्मये एवमुच्यते यद् हिरण्यगर्भस्तपोऽतप्यत । अद्यावधि स निर्मलं निश्चलं जलमिवासीद् यत्र चन्द्रः प्रतिबिम्बितो बोभूयते । यदा जलं तरङ्गितं भवति तदैकस्यानेकानि प्रतिबिम्बानि संजायन्ते जलं यावदेव क्षुभ्यति तावन्त्येव प्रतिबिम्बानि संजायन्ते अपि च सर्वाणि तानि एकसमानि नहि भवन्ति । किञ्चिदृजु किञ्चिद् वक्रं किंचिद् वृहत् किञ्चिच्च क्षुद्रं दृश्यते । इत्थमद्य यावद् ब्रह्मणो यदेकं प्रतिबिम्बं हिरण्यगर्भे अपाक्रामत् तदनेकं समपद्यत । अयमेव विषय उपनिषत्सु एवं कथितमस्ति यद् 'स ऐच्छत् एकोऽहं बहु स्यां प्रजायेय' यत्रैकस्य परमात्मनः प्रतीतिरभवत् तत्रानेकजीवात्मानः प्रतीता भवितुमारेभिरे । जीवात्मा पुरुषोऽप्युच्यते ।

जीवात्मनां समष्टिर्विराट् विराट्पुरुषो वा कथ्यते । एवं तु परमार्थदृष्ट्या यद् ब्रह्मास्ति तदेव परमात्मास्ति, स एव विराडस्ति अपरं स एव जीवात्मास्ति, परन्तु जीवात्मा आत्मानं पृथङ्मन्यते अतो यत्र परमात्मा अव्याकृतोऽस्ति तत्र विराड् व्याकृतोऽस्ति

## २ प्रधानाधिकरणम्

समुद्र एकोऽस्ति । यावत्पर्यन्तं तस्मिन्नेकश्चन्द्रमा दृश्यते तावत् तस्याखण्डता सम्पन्ना तिष्ठति । परन्तु यदा तस्मिन् बहूनि प्रतिबिम्बानि पतितानि जायन्ते तदा एवं प्रतीतं भवति यद् एकैकस्य प्रतिबिम्बस्य चतसृषु दिक्षु समुद्रस्यैकं खण्डमस्ति । इदं खण्डं कल्पितमस्ति, परन्तु यावत् समुद्रः क्षुब्धस्तिष्ठति तावत् खण्डबुद्धिरपि तिष्ठति । जलखण्डानि चन्द्रबिम्बानि सीमितानि कुर्वन्ति चन्द्रबिम्बानि च जलखण्डानि पृथक् कुर्वन्ति । क्षुब्धे हिरण्यगर्भेऽनेक जीवात्मानः संजाताः अपरं प्रत्येकं जीवात्मनि चेतनां विशिष्टां कर्तुं चित्तमासीत् । इमानि चित्तानि अविभाज्यस्य अविभक्तस्य च हिरण्यगर्भस्य अविद्याजनितांशा आसन् । यावद् जीवानां पृथक् सत्ता प्रतीता बोभूयमाना स्थास्यति तावत् पृथक् चित्तान्यपि स्थास्यन्ति । यदि हिरण्यगर्भः पुनरपि अक्षुब्धो भवेत् यथा हि सम्प्रज्ञातसमाधेः पूर्णतावस्थायां भवति, तर्हि पुनरेकं प्रतिबिम्बं परमात्मावशिष्येत हिरण्यगर्भे च भेदप्रतीतिभावोऽवरुद्धो जायेत । यावदेवं न भवति तावत् प्रत्येकं जीवात्मनि एकं चित्तं भवेत्,

यतो हि परिभाषानुसारं चित्तविशिष्टा चेतना जीवः कथ्यते। एषां पृथक् चित्तानां समष्टिः प्रधानं कथ्यते। प्रधानहिरण्यगर्भयोरिदमन्तरमस्ति यद् यानि चित्तानि जीवविशेषेण सह बद्धत्वात् परस्परं पृथक् सन्ति तेषां समष्टिः अयुतसिद्धावयववस्तु न हि भवेत्। सर्वाणि परस्परं स्वतन्त्राणि सन्ति। परस्परमपेक्षा च नास्ति। एषां समूहस्य एकाख्ययाऽऽह्वानं तावदेव युक्तियुक्तमस्ति यावत् मार्गोपरि आत्मन आत्मनः कर्मणा यातायातं कुर्वतां जनानां समूहस्य निचयाख्यया एकयाऽऽख्ययाऽऽ कारणा।

चित्तस्य शक्तयो गुणा अपि कथ्यन्ते। सक्रियज्ञातृत्वस्य नाम सत्त्वगुणः, सक्रियभोक्तृत्वस्य तमोगुणः अपरं सक्रियकर्तृत्वस्य रजोगुणोऽस्ति।

केचन लोका एवं कथयन्ति यत् त्रयाणां गुणानां साम्यावस्था प्रधानमस्ति। साम्यावस्था सैवावस्था भूता यस्यां कोऽपि गुणः सक्रियो न भवेत् परन्तु तस्यामवस्थायां चित्तं भवेदेव नहि। चित्ताभावस्यायमर्थोऽस्ति यत् पुरुषाणां नानात्वमपि न भवेत्, यतो हि गुणानां ज्ञातृत्वादीनां सक्रियतैव जीवपार्थक्यहेतुरस्ति ? यस्यामवस्थायां पुरुषाणां नानात्वं भवेत् तस्यामवस्थायां साम्यावस्था भवितुं न हि शक्नुयात्। पुरुषस्य असमेनैव क्षुब्धेनैव चित्तेन सान्निध्यं भवेत्।

इतः पश्चाद् जगतः प्रपञ्चस्य यो विस्तारो भूतोऽस्ति स यथा हि वयमुपरिष्टाद् द्रक्ष्यामः, प्रधानमध्यादेव निष्कीर्णोऽस्ति। प्रधानं तस्योपादानमस्ति, अतस्तां मूलप्रकृतिमपि कथयन्ति। अन्ये सर्वे पदार्थाः, येषामुल्लेखः पश्चाद् भविष्यति, प्रधानस्य विकृतयः सन्ति।

प्रधानपुरुषयोः स्वरूपस्य सम्बन्धेऽपि इयं वार्ता सततं स्मरणे रक्षणीया या परमात्महिरण्यगर्भयोः सम्बधे कथिताऽऽसीत्। चित्तविशिष्टा चेतना पुरुषो जीवात्मा वास्ति परन्तु सक्रियचेतनाया नाम चित्तमस्ति। अयं निष्क्रियसक्रिययोर्भेदोऽ विद्याजनितोऽस्ति। यदाऽस्माकं ध्यानं शुद्धरूपस्य दिशं याति तदा पुरुषशब्दस्य यदा च अविद्याद्वारा प्रतीयमानसक्रियरूपस्य दिशं गच्छति तदा प्रधानशब्दस्य प्रयोगं कुर्मः। परमार्थतो यः पुरुषोऽस्ति स एव प्रधानमस्ति।

## ३ प्रपञ्चविस्ताराधिकरणम्

जीवात्मा यच्चित्तं लब्धमासीत् तत् क्षुब्धमासीत्। तस्मिन् ज्ञातृत्वशक्तिः अर्थात् सत्त्वगुणो जागरितवानासीत्, इदानीं शेषं शक्तिद्वयम् अर्थात् द्वौ गुणौ उद्बुद्धावास्ताम्। सत्त्वगुणस्य कृते तु विषय आसीत्, रजस्तमसी विषयहीने अतोऽतृप्ते आस्ताम्।

जीवस्य चित्ते यज् ज्ञानमासीत् तज्जीवविषयकमासीत् । जीव आत्मानं जानन्नासीत् किन्तु इदं ज्ञानं परमात्मावस्थाया अस्मितारूपाज् ज्ञानाद् भिन्नमासीत् । जीवस्य ज्ञाने इयं विशेषताऽऽसीद् यत् स आत्मनः पृथक् सत्तां जानन्नासीत् । पार्थक्यस्य ज्ञानं तदैव भवति यदा आत्मनः सत्तया सार्धमात्मनो भिन्नायाः कस्याश्चित् पृष्ठभूमेरपि ज्ञानं भवेत् । वाढमिदं स्पष्टं माभूद् यद् आत्मनोऽतिरिक्तं किमस्ति परन्तु किञ्चदस्ति, एवं प्रतीतिं विना पार्थक्यस्यानुभूतिर्नहि भवेत् । जीवस्यास्यामवस्थायां यज् ज्ञानं बोभूयमानमासीद् वस्तुतस्तस्य त्रीण्यङ्गान्यासन्ः—

अहम् अस्ति–अस्मद् अस्ति ।

अनहम् इत्यस्ति–युष्मद् इत्यस्ति–मत्तोऽव्यतिरिक्तः कश्चन पदार्थोऽस्ति ।

अहम् अनहम् नास्ति- अस्मद् युष्मद् नास्ति ।

अहम् अनहञ्च परस्परं भिन्नौ परन्तु सम्बाद्धावास्ताम् । एकोऽपरस्य परिच्छेदक आसीत्, एकस्य कारणाद् अपरस्य ज्ञानं बोभूयमानमासीत् । यस्यामवस्थायां सत्त्वगुणः प्रवलो भवति सा बुद्धिः कथ्यते । जीवात्मा बुद्ध्याऽऽत्मनो ग्रहणं कुर्वन्नासीत्, अपरं बुद्ध्यैव आत्मानं अनहमित्यतो भिन्नं जानन्नासीत् । अहम् अनहम् इत्येतयोर्विवेककरणं बु स्तत् प्रकारको व्यापारोऽस्ति यमध्यवसायं कथयन्ति ।

अनहमिति इदानीमज्ञातमासीत् । इच्छाशक्तिस्तद् ज्ञानस्यावधारणस्य च विषयं सम्पादयितुं वाञ्छन्ती आसीत् । एतदर्थमिदमावश्यकमासीद् यद् अहमित्यस्य सम्बन्धे 'अनहमिति' ज्ञातं जायेत, अहमित्यनेन सह तस्य ( अनहमित्यस्य ) सम्बन्धो ज्ञातो भवेत् । अस्य परिणामोऽयं भवेद् यद् अनहमिति संबोधे अयायत्, अपरं परिच्छेदकस्य स्पष्टत्वे अहमित्यस्य स्वरूपमपि अधिकं स्पष्टं भवेत् । गम्भीरे ऽन्धकारे प्रकाशः सम्यग् दृष्टो भवति । इच्छायाः पूर्तये प्रयत्नोऽभूत् । बुद्धेरहङ्कार उत्पन्नोऽभूत् । अहङ्कार एकस्यां दिशि तु अनहमित्यस्य अहमित्यनेन सह सम्बन्धं करोति, अपरस्यां दिशि अहमित्यस्य पृथक्तां तीव्रां करोति ।

अपरस्य कस्यचित् कथनात् प्रथमं द्वयोर्वार्तयोर्दिशि ध्यानदापनमावश्यकमस्ति । प्रथमा वार्तेयमस्ति यदनहमित्यस्य पारमार्थिकी सत्ता नास्ति । चेतनायाः कृते यदि कश्चिदुपाधिरस्ति चेद्विद्याऽस्ति । तस्याः कश्चनापरः परिच्छेदको नास्ति । अविद्यायाः कारणत्वादेव पृथग् जीवात्मभावो ज्ञातोऽस्ति अपि चास्य पार्थक्यस्य सम्बोधनाम अनहमित्यस्याःवेषणमभूत् । अनहमिति बुद्धिनिर्माणमस्ति अथवा एवं कथयितुं शक्यते यद् अविद्याया एव

अनहमितिरूपेण प्रतीतिर्बोभूयते । अपरा वार्त्तेयमस्ति यत् परमात्मावस्थां यावत्तु अनुभूति-क्रमो नासीत्, अतः कालोऽपि नासीत् । परन्तु जीवात्मनश्चित्तेऽनुभूतीनां पटपरिवर्तनं भवितुं आरभते । इदानीमनुभवे क्रमोऽस्ति, चित्ते परिणामा भवितुमारभन्ते, अतो जीवात्मा कालक्षेत्रेऽस्ति ।

इदानीमनहमित्यस्य यथावज् ज्ञानं नहि भवदासीत् । अतः सक्रियेच्छा सङ्कल्पशक्तयश्च अहङ्कारं तस्यां दशायां परिरक्षितुं नान्वमोदन्त । स परिणतो जातः, अथ च परिणामस्वरूपा-स्ततः केचन पदार्थाः निष्कीर्णाः । प्रथमः पदार्थो ज्ञानेन्द्रियं कथ्यते । ज्ञानेन्द्रियाणि वस्तुतः पञ्च सन्ति–श्रोत्रम्, त्वक्, चक्षुः, रसनम्, घ्राणमिति । एषां शब्दानामर्थाः कर्णः, चर्म, अक्षि, जिह्वा, नासिका च न सन्ति ? कर्णादीनि तु क्रमाद् इन्द्रियाणां शारीरिकाणि अधिष्ठा-नानि सन्ति अर्थात् शरीरस्य ते भागा सन्ति यत इन्द्रियाणि कर्म कुर्वन्ति । इन्द्रियं चित्तस्य अनहमित्यस्य ग्राहिका शक्तिरस्ति, सा शक्तिरस्ति यद् द्वारा अनहमिति आकृष्य चित्ते आनीयते, ज्ञानस्य विषयः सम्पाद्यते । यदा विषयश्चित्तस्य समक्षमागतस्तदा तु ज्ञाने-न्द्रियाणि तेन यथोचितं निवर्त्यन्ति परन्तु यदा कदा तं चित्तस्य विषयं सम्पादयितुमथ च तं संततं सम्पादितं रक्षितुं च विशेषः प्रयासः कर्तव्यो भवति । कदाचित् तं चित्तस्या-विषयं सम्पादयितुमपि प्रयासः कर्तव्यो भवति । एवं तस्य सम्बन्धे ज्ञानमपि वर्धते भोक्तृत्व-शक्तिरपि च कृतार्था भवति । अतोऽहङ्काराद् ज्ञानेन्द्रियैः सह कर्मेन्द्रियाणि निष्कीर्णानि । ज्ञानेन्द्रियद्वारा विषयस्य चित्तोपरि क्रिया भवति । कर्मेन्द्रियाण्यपि पञ्च सन्ति वाक्पाणिपादप-यूपस्थानि । मनुष्यस्य शरीरे जिह्वा, हस्तौ, पादौ, गुदस्थानं, लिङ्गञ्च एषामाधिष्ठानानि सन्ति । एकमपरमपीन्द्रियं निष्कीर्णं यन्मनः कथ्यते । इदं ज्ञानेन्द्रियमप्यस्ति कर्मेन्द्रियञ्च । मनस्तत् कर्म करोति यद् बृहत्सु नगरेषु टेलिफोनसंचालनकेन्द्रं करोति । सर्वे ध्वनितन्त-वस्तत्रागत्य मिलन्ति । यदि 'क' इत्याख्यस्य 'ख' इत्याख्येन सह काचिद् वार्ता कथनीया भवति तदा स सन्देशस्तत्र भूत्वैव याति । ज्ञानेन्द्रियाणि यानि ज्ञानानि अभ्यन्तरं आनयन्ति, कर्मेन्द्रियाणि च यान् संकल्पान् बहिर्नयन्ति तानि सर्वाणि मनसि मिलन्ति । विषयस्य यत् स्वरूपं ज्ञानेन्द्रियद्वारा ऽधिगतं भवति तत् 'संवित्' कथ्यते । सा संवित् मनसि भवति । पुनरहङ्कारस्तत् पुराणज्ञानभाण्डागारेण सह मेलयति, अहमित्यनेन सह तत् संबद्धं करोति, तदा बुद्धिरध्यवसायं करोति । यदि तद् भोगानुकूलं प्रतीयेत तदा तद् ज्ञानस्य विषयं सम्पा-दयितुमन्यथा ज्ञानस्याविषयं कर्तुं प्रयासो भविष्यति । अयं संकल्पो बुद्धितो मनोद्वारा कर्मेन्द्रियाणि यावद् याति । मनः संवित्संकल्पयोर्मध्यस्थं सम्बन्धसूत्रमस्ति ।

अनहमित्यस्य सत्तायाः ज्ञानं तु जीवात्मन आरम्भादेवासीत्, किन्तु तद् ज्ञानमस्पष्टमसम्पूर्णञ्चासीत्। तत् पूर्णं कर्तुमेव चित्तस्याकुलता तत् परिणतं कुर्वती आसीत्, ज्ञानेन्द्रियादेरुत्पत्तिं च कुर्वती आसीत्? एतदर्थमेतैः सार्धमेव अनहमित्यस्य प्रथमं स्पष्टं ज्ञानमपि उत्पन्नं जातम्। चित्ते श्रोत्रेन्द्रियद्वारा प्रथमसंविदः-शब्दस्योत्पत्तिरभूत्। संविदस्तन्मात्रा अपि कथ्यन्ते यतो हि तद् द्वारा तस्य-अज्ञातस्य अनहमित्यस्य, युष्मदः-मानस्य ज्ञानं भवति।

## ४ आदिशब्दाधिकरणम्

मूलप्रकृतेर्वयम् इन्द्रियं, मनः शब्दतन्मात्रं च यावत् उपस्थिताः स्मः। विकासस्येयमवस्था तस्य भौतिकजगतः प्रवेशद्वारमस्ति येन सहास्माकं परिचयोऽस्ति।

श्रोत्रेन्द्रियशब्दयोः सम्बन्धे न केवलमशिक्षितानां प्रत्युत पण्डितानामपि प्रभूतो भ्रमः प्रसृतोऽस्ति। अस्य भ्रमस्य कारणमिदमस्ति यन्निगमागमाः पठितास्तु जायन्ते परन्तु तेषामर्थस्य सम्यग् बोधार्थं प्रयत्नो नहि कृतो जायते। निदिध्यासनस्य तु नामापि नहि गृह्यते। सम्यग्रूपेण मननमपि नहि भवति। एतदर्थं वाग्जालस्य विस्तरस्तु वरीवृध्यते, विकल्पस्य परिवारे वृद्धिर्बोभूयते अपरमेकस्यां दिशि शास्त्रं हास्यास्पदं सम्पन्नं जायते द्वितीयस्यां दिशि पाठकाः पाठयितारश्च सत्याद् दूरीभवन्तो जायन्ते।

शब्दस्यार्थः स्वनः-तादृशी संविद् या द्वयोः द्वैतवस्तुनोराघातोपरि भवति- मानितो जायते, अपरं श्रवणेन्द्रियं तस्य ग्राहकं मानितं जायते। इयं वार्ता तु यथावदस्ति परन्तु स्वनस्य क्षेत्रं तु नितरां संकुचितमस्ति। वैज्ञानिकप्रयोगैः सिद्धमस्ति यद् यदि कीदृशाघातात् कारणात् किंचिद् वस्तु प्रकम्पितं जायेत तस्य चतसृषु दिक्षु च कश्चनेदृशो घनस्तरलो वा मध्यस्थो भवेद् योऽस्माकं कर्णं यावदुपतिष्ठेत्-तदा तस्मिन् मध्यस्थ एकप्रकारिका लहरी उत्पन्ना भवति यस्य फलस्वरूपेणास्माकं स्वनसंविद् भवति। अस्माकं नाडीसंस्थानस्य संपादनमीदृशमस्ति यद् यदि वस्तुनः कम्पनं प्रतिसेकण्डं षोडशवारतो न्यूनमथवा लग्नं भग्नं प्रतिसेकण्डं पञ्चाशत् सहस्रतोऽधिकं भवेत् तर्हि स्वनो न हि श्रूयते। सङ्गीतस्य मूलसप्तके षड्जान्निषादं यावद् ये स्वरा आयान्ति तेषामानुपङ्क्तिककम्पनानां मात्रा षट्पञ्चाशदधिकशतद्वयस्य अशीत्यधिकशतचतुष्टयस्य चाभ्यन्तरे प्रतिसेकण्डं भवति। यत्र कश्चन घनस्तरलो वा मध्यस्थो नास्ति तत्र भवतु नाम बाढं प्रकम्पनं परन्तु स्वनो नायायात्। सूर्याच्चंद्रान्नक्षत्रादेश्चास्माकं प्रकाशो मिलति न स्वनः। किन्तु पुस्तकाना-

माधारोपरि पण्डितसम्प्रदायः शब्दस्य सम्बन्धमाकाशेन स्थापयति यः सर्वथाऽवैज्ञानिको ज्ञायते ।

ये स्वनाः कर्णेन श्रूयन्ते ते मनुष्यस्य पशुपक्षिणां वा वाचामङ्गानि स्युरथवाऽऽहतजडवस्तुभ्य उत्पन्ना भवेयुस्तान् वयं सुखेनापि वदितुं शक्नुमः । एतादृशस्वनानां समूहो वैखरी वाणी कथ्यते । परन्तु यो दर्शने 'शब्दः' कथ्यते स वैखरीतोऽधिकोऽस्ति ।

चित्तं क्षुब्धं, चञ्चलमस्थिरं चासीत् । त्रयो गुणास्तिस्रः शक्तयश्च जाग्रता आसन् । एकस्य तिरोभावो ऽपरस्य प्रादुर्भावो बोभूयमान आसीत् । एतदेव चित्तस्य परिणामित्वे परिवर्तनशीलत्वे च हेतुरासीत् । अनहमित्यस्य पूर्णतया ज्ञानाय भोगाय च आकुलताऽऽसीत् । इदमनहम् चित्ताद् बहिः क्वचन नासीत्; यथा वयं अग्रिमाधिकरणे कथितवन्तः स्मः, बुद्धिनिर्माणमात्रमासीत् पुनरपि तस्यामवस्थायां चित्तं तम् विषयं सम्पादयितुं वाञ्छदासीत्, तत् संवोदुमिच्छन्नासीत् । यज् ज्ञातुमुत्सुकताऽऽसीत्, क्षोभं आसीत्, तत् सर्वं चित्ताभ्यन्तर आसीत् । अतः सर्वतः प्रथमं यदा तद् ज्ञातमासीत् तदा चञ्चलतात्व एव । आत्मनश्चञ्चलताया निक्षेपं चित्तमहमित्येतस्मिन् कृत्वा प्रथममिदमज्ञासीद् यद् अनहमिति चञ्चलम् अस्थिरंचास्ति । प्रथमा संविद् अस्थिरतायाः, परिवर्तनशीलतायाश्चाभूत् । अस्यैव नाम 'शब्दः' अस्ति । यदिन्द्रियमस्य ग्रहणं करोति तस्य नाम श्रोत्रमस्ति ।

इयमस्थिरता तेषु सर्वेषु पदार्थेष्वप्यस्ति यतोऽस्माकं स्वनो नहि मिलति । अस्य तात्पर्यमिदमस्ति यत् प्रत्येकं भौतिकपदार्थः प्रत्येकं क्षणे शब्दायमानोऽस्ति, परन्तु अस्माकं श्रोत्रेन्द्रियस्य येन शरीररूपेणोपकरणेन व्यवहारः संपद्यते तत् एतत्शब्दसमूहस्याधिकांशमगृहीतं करोति । केवलं तत्स्तोकको भागः श्रूयते य एतत् शरीरेण समाने क्षुद्रे बृहति वा पिण्डे आहते सति निःसरति । स्वन एवैक ईदृशी संविदस्ति यतोऽस्माकं वस्तूनां चञ्चचलावस्थायाः परिचयो मिलति । योगिनामीदृशं कथनमस्ति यद् यदा प्राणवायुः किञ्चिद् ऊर्ध्वमुखो भवति तदेन्द्रिन्द्रयाणां शरीरगतं बन्धनमपि शिथिलं जायते । तस्मिन् समये श्रोत्रेन्द्रियमनाहतशब्दस्य, आघातं विनोत्पन्नस्य; सहजशब्दस्यग्रहणं करोति । तस्मिन् समये भौतिकपदार्थानां सहजचञ्चलतायाः संविद् भवति । इयं संविद् अपराभ्यो रूपादिसंविद्भ्योऽतिरिक्ताऽस्ति या अस्माभिर्भूतेभ्यः प्राप्ता भवन्ति । तस्यामादिमावस्थायां तु किमपि भूतं नासीत्, काचिदपरा संविद् भवितुं नाशकत्, केवलं शब्द आसीत् । श्रोत्रेन्द्रियं

तस्य मूलरूपस्य ग्रहणं कुर्वदासीत् । मूलरूपमेतदर्थं कथयन्नस्मि यद् भौतिकवस्तुषु चञ्चलताया अपि स्वभावतोऽनेक भेदः प्राप्यन्ते, अतोवैखरीवाण्यां व्यञ्जनीयस्वरानारभ्य अहंकारान्निःसृतमादिशब्दं यावत् स्थूलसूक्ष्मशब्दसंविदामपारो राशिरस्ति । अस्माकं सकलानि गानविद्यादीनि तस्य समक्षे तुच्छानि सन्ति । आदिशब्दस्य योगिभिरनेकं नाम दत्तमस्ति । स एवादिशब्दः, उद्गीथम्, प्रणवः, स्फोटः, तारः अजपा, नादः, सत्यनाम, परावाणी, गगनगीः, नीरवताया वाक्, लोगास, सुल्तानुल अजकारादिरूपश्चास्ति ।

आदिशब्दमोंकारमपि कथयन्ति । ओंकारस्य अ उ म् इति त्रीण्यङ्गानि कथ्यन्ते । एषां त्रयाणामक्षराणामनेकप्रकारका अर्थाः कृता जायन्ते । अस्मिन् सम्बन्धे लोकैर्बृहन्ति बृहन्ति पुस्तकानि लिखितानि जातानि । परन्तु एतत् सर्वं शास्त्रार्थस्य वार्ता अस्ति, यस्याम उद्रजिता असम्बोधा आत्मनां समयं नष्टं कुर्वन्ति । सत्य ओंकारः सो ऽस्ति यो ऽनुच्चार्योऽस्ति । एतदर्थं छान्दोग्योपनिषदि लिखितमस्ति यद् देवगणा उद्गीथं यदा सर्वस्मिन् जगत्यन्विष्य पराजिता जातास्तदा स तैः प्राणेषु मिलितः ।

शब्दः सर्वस्मिन् भौतिकजगति व्याप्तोऽस्ति; अतः श्रोत्रेन्द्रियमन्येभ्यः सर्वेभ्य इन्द्रियेभ्यो बलवत्तमं तथा सूक्ष्मग्राहि विद्यते । कम्पनं तु षोडशवारतः त्वामं प्रतिसेकण्डं पञ्चाशत सहस्रवारतोऽधिकमपि भवेत् परन्तु अस्माकं तस्य प्राप्तिर्नहि भवति । तस्यामवस्थायां वस्तु अस्माकं कृते ऽज्ञातं तिष्ठति । यदा कम्पनस्य वेगः प्रभूतं वृद्धो जायते तदा तापस्यानुभूतिर्बोभूयमाना लगति, अपरं वेगस्य वर्धने प्रकाशस्य, किन्तु यदि वेगो बरीवृध्यमान एव जायेत तर्हि अस्माकमिन्द्रियाणि असमर्थानि भवन्ति । एवं प्रतीतं भवति यत् प्रकृतिरस्माकमैन्द्रियज्ञानस्य शृङ्खला कतिषु स्थानेषु अभाङ्क्षीत् । वस्तुत एवं नास्ति । शब्दस्यानुभूतिः सततं भवितुं शक्नोति । आवश्यकता अस्या वार्ताया अस्ति यत् श्रोत्रेन्द्रियं तस्या दासताया मुक्तं भवेत् यां शरीरं तदुपरि स्थापितामकरोत् । विपत्तिरियमस्ति यत् चित्तमपि तत् वैखरीक्षेत्रस्य स्वनानामनुसरणाद् मुक्तिं नहि दातुं वाञ्छति ।

## ५ भूतविस्ताराधिकरणम्

चित्ते शब्दसंविदभूत्, अतो बुद्धाविदं प्रतीतिरभूत् यद् 'अनहम्' इति शब्दवत् चाञ्चल्यास्थिरता-परिवर्तनशीलतालिङ्गयुक्तमस्ति । शब्दलिङ्गस्य अनहमो नाम आकाशमस्ति । सकलचञ्चलतानां, सकलास्थिरतानां सकलगतीनां च आस्पदमयमाकाशः स पदार्थोऽस्ति यो दिङ्नाम्नाप्याकार्यते । वयं द्रव्याधिकरणे दृष्टवन्तः स्मो यद् बुद्धिः संविद्भिस्तद्धेतूनां निर्माणं चेक्रियमाणाऽस्ति । आकाशं प्रथमं बुद्धिनिर्माणमासीत् ।

अनहमित्यतो—यदिदानीं शब्दवदाकाशमासीद्—द्वितीया संवित् त्वगिन्द्रियद्वारा प्राप्ता ऽभूत्। इमां स्पर्शं कथयन्ति। स्पर्शस्य त्वगिन्द्रियस्य च सम्बन्धेऽपि किं अनेतत्प्रकारक एव भ्रमो भवति यादृक् शब्दश्रोत्रयोः सम्बन्धे जायते। साधारणतः स्पर्शस्यार्थो भवति छोपनम्, अतः स्पर्शस्य कठिनकोमलौ द्वौ भेदौ क्रियते। तापमानभेदात् स्पर्शः शीत उष्णश्च कथ्यते। परन्तु स्पर्शस्य क्षेत्रमितो व्यापकमस्ति। विज्ञानानुसारं शक्तिरेकास्ति। सैव कदाचित् तापस्य रूपेणानुभूता भवति, कदाचित्प्रकाशस्य, सैव नाडीषु धावति, मांसपेशीः कार्यकुशलाः सम्पादयति, रासायनिकक्रियाः कारयति, तन्त्रीरहितं तरङ्गहितं च दूरग्राहियन्त्रं च चालयति। तस्याः केषांचिद् भेदानामपरोक्षानुभवोऽस्माकं भवति केषांचिद् नहि। ये ऽनुभवा भवन्ति तेषां तापप्रकाशसदृशानि नामान्यस्माभिर्दत्तानि सन्ति।

यदीयं वार्ता युक्तास्ति तर्हि पुनस्तमेवाभियोगं प्रकृतेरुपरि वयं लगयितुं शक्नुमो यत् सा कियतीर्वार्ता अस्मत्तः गुप्ता रक्षितवत्यस्ति। तज्ज्ञानार्थं किञ्चिदिन्द्रियं नास्ति, नापीन्द्रियाणामभावे संविदो भावः प्राप्तो भवति। वस्तुतोऽयमभियोगः युक्तो नास्ति। संविद् भवति। इयं संविद् अस्माकं साधारण जीवने तापरूपा ततोऽपि नीचैस्तरे काठिन्यरूपा भवति परमस्य सूक्ष्मभेदा अपि सन्ति, एषामेव ग्रहणं त्वगिन्द्रियं करोति। यदा तत् शरीरस्य बन्धनात् मुक्तिं प्राप्नोति तदा सूक्ष्मस्पर्शस्य संविदो भवन्ति।

यथा शब्दाद् आकाशनामकं बुद्धिनिर्माणमभूत् तथैव स्पर्शतन्मात्रतो वायुनामकं बुद्धिनिर्माणं सम्पन्नम्। शब्दस्पर्शवाननहं वायुरस्ति। स एव प्राणोऽस्ति, स एव विद्युदस्ति, स एव सा शक्तिरस्ति या अनेकेनापरेण रूपेण भौतिकं जगत्परिचालयति।

इदानीमधिकविस्तरेण लेखनमनावश्यकमस्ति। वायोश्चक्षुरिन्द्रियद्वारा रूपसंविदभूत्, रूपात् शब्दस्पर्शरूपवत् तेजोनामकं बुद्धिनिर्माणं सम्पन्नम्। तेजसो रसनेन्द्रियद्वारा रससंविदभूद्, अपरं रसात् शब्दस्पर्शरूपरसवद् अब्नामकं बुद्धिनिर्माणमभूत्। अद्भ्यो घ्राणेन्द्रियद्वारा गन्धसंविज्जाता। गन्धाच्च शब्दस्पर्शरूपरसगन्धवती क्षितिर्नाम बुद्धिनिर्माणं सम्पन्नम्। इत्थं सर्वेषां भूतानामुत्पत्तिः संजाता। पुनस्तु भूतानां विभिन्नमात्रासु मेलनेन इदं विश्वमिदं भौतिक जगत् सम्पन्नं यदस्माकं दैनिकजीवनस्य क्षेत्रमस्ति। भूतानां मेलनेन नवसङ्घातानां समुत्पत्तिर्भवति अपरञ्च तेषां विक्षेपेण पुराणाः सङ्घाताःसततं विशीर्यन्ते। अयमेवास्माकं युष्मत्प्रपञ्चोऽस्ति।

भूतानामयं क्रम अद्यकालिकवैज्ञानिकविचारधाराया अनुकूलः प्रतीतो भवति। अस्मिन्नाश्चर्यस्य कापि वार्ता नास्ति परन्तु यदि वैज्ञानिकसिद्धान्तेषु किञ्चित् संशोधनं भवेत्

तदापि दार्शनिकः क्रमोऽयमेव स्थास्यति। इदं भवेद् यद् वैज्ञानिकशोधस्यसमुन्नतौ अस्माकं भूतस्वरूपस्य संबोधने सहायता मिलेत्। एतत् स्थलोपरि एतावज्ज्ञातं पर्याप्तमस्ति यद् भूतेषु सर्वेषां मूलं वायुरस्ति अपि च तस्य स्पर्शसंविदो ग्राहकमिन्द्रियं त्वगस्ति। वायोः स्थूलीभूतं रूपं यद् रूपसंविद्द्वारा चक्षुरिन्द्रियग्राह्यमस्ति तत्तेजोऽस्ति। तैजसावस्थायां तत्वानां विभागो नहि भवति। यदा तेजो घनीभूतं भवति तदा तत्त्वानि पृथग् भवितुमारभन्ते। तद्रूपमापः कथ्यते अथ च तस्यां रससंविदो ग्राहकमिन्द्रियं रसनमस्ति। पिण्डीभूता आपः क्षितिः कथ्यंते। तस्या गन्धसंविदो ग्रहणं घ्राणेन्द्रियं करोति।

भूतानां पारमार्थिकसत्तायाः सम्बन्धे भ्रमो न भवेत्। अविद्याकारणाद् जीवात्मा आत्मानं जीवात्मानं–परिच्छिन्नं, पृथग् व्यक्तिं–मन्यते। अविद्या तदभ्यन्तरे ऽस्ति परं स आत्मनः परिच्छेदकमन्विष्यति, तं ज्ञातुमिच्छति। चित्तं क्षुब्धमाकुलं च भवति, बुद्धेरहंकारस्य सृष्टिर्भवति, अहंकाराच्चेन्द्रियाणां मनसश्च। इन्द्रियद्वारा मनोद्वारा च अनेका संविद् भवति, अर्थात् तद् अनेकप्रकारेण तं पदार्थं ज्ञानस्य भोगस्य च विषयं संपादयति यः सदैव तदभ्यंन्तरे ऽस्ति। प्रत्येकसंविदनुसारं तस्य पदार्थस्य तस्य अनहमित्यस्य नवीनं ज्ञानं भवति, अपरं बुद्धिस्तद्विषये एकां नवीनां कल्पनां करोति। बुद्धेरेतन्निर्माणमेवाकाशादीनि सन्ति। एवं कथयितुंशक्यते यद् यज्ज्ञातृत्वादियोग्यतात्रयम् आत्मनः साम्यावस्थायां शुद्धावस्थायां वा चेतनारूपं ब्रह्मरूपमस्ति तदेव सक्रियावस्थयां चित्तमस्ति अपरं तदेव घनीभूतं भूतभावं भजते। यो ज्ञाताऽस्ति स एव ज्ञानस्य साधनमस्ति तदेव ज्ञेयमस्ति। इयं त्रिपुटी अविद्याकृताऽस्ति। जड़चेतनयोर्भेदो ऽविद्याकृतोऽस्ति, अस्मद् युष्मद् विभागोऽविद्याकृतोऽस्ति।

प्रथमखण्डस्य सेन्द्रियप्रत्यक्षाधिकरणे अस्याः समस्याया दिशि ध्यानमाकृष्टंकृतमासीत् यद् भौतिकवस्तुनि अभौतिकचित्ते च क्रियाप्रतिक्रिये केन प्रकारेण भवतः। इदानीमस्या वार्ताया सम्बोधने किञ्चित् काठिन्यं नहि भवेत्। वस्तु संविन्मात्रमस्ति, संविच्च चित्तस्य परिणामोऽस्ति अतो वस्तुचित्तयोः सम्बन्धः परिणामपरिणामिभावोऽस्ति यस्य भवनं स्वाभाविकमस्ति। एतदतिरिक्तं यः पदार्थश्चित्तमस्ति तदेव भौतिकं वस्त्वस्ति। द्वयं शक्तित्रयात्मकं गुणत्रयात्मकमतः सजातीयमस्ति। सजातीययोर्मिथःप्रभावितत्वं स्वाभाविकमस्ति। द्वयोर्भेद एतावानेव भवति यत् चित्ते सत्त्वरजसोर्मात्राऽधिका भवति, भूतेषु, विशेषतः क्षितौ, तमसः प्राधान्यं भवति। अतस्तद् अपेक्षया जडं प्रतीतं भवति।

# ६ संविद्वैषम्याधिकरणम्

अत्रेयं शङ्का भवेद् यद् जगतो विकासस्य यः क्रमो दर्शितोऽस्ति तदनुसारं सर्वेषां जीवानां संविद एकविधा भवेयुः। अस्योत्तरमिदमस्ति यद् यदि जगत उत्पत्तेः काचित्तिथिः निश्चिता भवेत् तदा ततः कुतश्चिदपि निश्चितात् कालात् पश्चात् सर्वेषां जीवानां चित्तानामेकसदृशा भावस्य सम्भावना भवेत्। परन्तु जगत् क कदा ऽभूत् ? तस्य प्रतीतिरत्वविद्याजनिताऽस्ति । 'अमुकतिथितोऽविद्यारम्भोऽभूत्' इदं कथयितुं न शक्यते, यतो हि अविद्यास्पर्शार्थं कश्चन हेतुर्नहि भवेत् । ब्रह्म यादृशमासीत् तादृशमस्ति। अविद्याऽनादिरस्ति । जगत उत्पत्तिर्नह्यभूत्, प्रतिक्षणं भवति ।

जीवात्मनः पृथक् सत्ता नास्ति परन्तु अविद्याकारणात् स आत्मानं पृथङ् मन्यते। तस्येयं भ्रान्तिरनादिरस्ति। अद्यावधि स कोटीः शरीराणि धारितवाँस्त्यक्तवांश्च, अनेकसंविदोऽनुभवं च कृतवान्, असंख्यानां ज्ञानानाम् इच्छानां संकल्पानां च संस्कारास्तस्य चित्ते संचिताः सन्ति। एतेषु सर्वेषु सत्स्वपि यदि सर्वेषां जीवानां चित्तानि कस्मिंश्चित् क्षणविशेषे एकस्यामेवावस्थायां भवेयुस्तदा इदं वस्तुत आश्चर्यस्य विषयो भविष्यति।

# ७ जगन्मिथ्यात्वाधिकरणम्

युष्मदस्मदोः समष्टिरेव जगदस्ति। अस्माभिर्जगतो विश्लेषणं कृतम् अपरमेतत्परिणामोपरि प्रोञ्छितं च यद् युष्मदस्मदौ, समस्तं जगत्, ज्ञाता, ज्ञानं, ज्ञेयम्, एतत् सर्वं ब्रह्माऽस्ति। ब्रह्म चिन्मयमस्ति, एकमस्ति, अद्वयमस्ति, दिक्कालातीतमस्ति । तदवधारणस्य विषयो नास्ति। यावत्पर्यन्तं तत्त्वमोः प्रतीतिर्भवति, संबुद्धेः संबोधनायाश्चावकाशस्तिष्ठति तावत् पर्यन्तं माया, अविद्याऽस्ति। अत उपनिषदः कथयन्ति अविज्ञातं विजानतां विज्ञातमविजानतामिति ।

तर्हि पुनः किं जगन्मिथ्याऽस्ति ? अस्य प्रश्नस्य द्वे उत्तरे स्तः, आम् न च। जगत् तावदेव सत्यं तावदेव च मिथ्याऽस्ति यावत् रज्जौ सर्पः। रज्जुरेव सर्पो ऽस्ति अतः सर्पः सत्योऽस्ति, तत्र सर्पो नास्ति अतो मिथ्याऽस्ति। जगतो यद् रूपं प्रतीतं भवति तत्तु मिथ्याऽस्ति परन्तु अस्ति तद् ब्रह्मणोऽभिन्नमतः सत्यमस्ति।

दार्शनिकस्य मुखत् जगतो मिथ्यात्वस्य वार्तां श्रुत्वा कियन्तो लोकास्तदुपरि इयमाक्षेपं कुर्वन्ति यत् स मनुष्यान् कर्महीनान् संपादयति। अहं कर्महीनेति शब्दस्य यथायथमर्थं नहि जानामि परन्तु एतावत् संबुध्ये यत् तत् किञ्चिदवद्यं वस्तु मन्यते। यदि

मदीयमनुमानं युक्तमस्ति तर्हि वराको दार्शनिकः निर्दोषोऽस्ति । स केवलां सत्यां वार्तां कथयति, यदि कश्चन सत्यस्य दुरुपयोगं करोति तर्हि एतत्कृते तस्य दायित्वं न हि भवेत् ।

पुनरप्येतत्प्रसङ्गे द्वे वार्ते दार्शनिकः कथयितुं शक्नुयात् । जगतः स्वरूपमज्ञात्वा कर्मणि निरन्तरं रतिः काचिद् बुद्धिमत्ताया वार्ता नास्ति । यदि दार्शनिकाज् जगतो मिथ्यात्वं ज्ञातवतां लोकानां कर्मदिशा परिवर्तिता भवेत् तर्हि स आत्मानं कृतार्थं मंस्यते । हरिणो मरीचिकामनुधावति । इदं किं प्रभूतबुद्धिमत्तायाः प्रमाणमस्ति ? यदि तेनेदं विदितं स्याद् यद् यदहं जलं संबुद्ध्यमानोऽस्मि तद् वालुकास्ति अपरमेवं ज्ञात्वा तद्दिशि धावनं त्यजेत् तर्हि किं तस्य कर्मराहित्यं निन्दार्हं भविष्यति । तैलिकस्य बलीवर्दो दिवसं यावच्चाघूर्यमाणस्तिष्ठति । किं तस्येयं गतिशीलता प्रगतेरुन्नतेर्बुद्धिमत्ताया वा लक्षणमस्ति ? केवलं किञ्चिच्चेरेक्रिया प्रशंसनीया न हि भवेत् । यत् कर्म परिस्थितेरनुकूलमस्ति तदेव साध्वस्ति । यत् कर्म परिस्थित्या असङ्गतमस्ति ततो विरतीभावः, अनया दृष्ट्या कर्महीनता बुद्धिमत्तायाः सूचिकाऽस्ति । प्रभूतानीदृशानि कर्माणि यानि जगतः सत्यतादशायामुचितानि भवेयुस्तस्मिन्नसत्यत्वज्ञाने अकरणीयानि प्रतियेरन् । हरिणेन मृगतृष्णिकादिशतः पराङ्मुखीभूय सत्यजलस्यान्वेषणं कर्तव्यं भवति । यैः कर्मभिः ब्रह्मप्राप्तौ सहायता मिलेत् तानि समीचीनानि सन्ति शेषाणि बन्धकानि सन्ति । तेषां यावदेव त्यागः कर्तुं शक्येत तावदेव श्रेयस्करं भविष्यति ।

परन्तु चेतावनी अपि दातव्याऽस्ति । जगत् मिथ्यास्ति, जगत् मिथ्यास्तीति कथनं अलं नास्ति । कर्ममात्रस्य सहसा परित्यागो नहि कर्तुं शक्येत । कीदृशानि कर्माणि करणीयानि सन्ति, अस्मिन् विषये ऽहमुपरिष्टाच्चलित्वा धर्माध्याये विचारं करिष्यामि; परन्तु कर्मणो हस्ताकुञ्चनेऽपर्यपि चित्ते वासनानां विशालं जगत् वरीवृत्यते । यावत् पर्यन्तमिदं जगत् तिष्ठति तावत् कर्मणो विरतीभावो निरर्थकोऽस्ति । कर्म इत्थं करणीयं येनाविद्याया बन्धनं क्षीणं भवेत् । देहश्चित्तं च बाढं बन्धने स्यातां परन्तु अनयोर्बन्धनाकारणमात्रं पर्याप्तं नास्ति, एताभ्यां बन्धनस्य श्लथताकरणस्य कर्म नेतुं शक्येत । यदि कूलोपरि दण्डायमानो मनुष्यो जले पतति तर्हि इदं शुचित्वा नहि विरमति यन्मम जले पतनं मूर्खतासीत् । मम जलेन कः सम्बन्धः ? अहं तु कूलवासी अस्मि । य एवं विचार्य हस्तौ बद्धौ करिष्यति तं जलं ब्रोडयिष्यति । सम्बोधवान् मनुष्यस्तरति हस्तौ पादौ च क्षिपति । जलमेव जलाद् बहिर्निःसरणस्य साधनं सम्पद्यति । तदैव स पुनः कूलोपरि आयाति ।

यदि निरर्थककर्मभ्यो विरम्य आत्मज्ञानसाधककर्मसु प्रवृत्तिः कर्महीनता भवेत् तदा दार्शनिकः कर्महीनतायाः समर्थकोऽस्ति ।

# षष्ठोऽध्यायः

## नानात्वस्य संकोचः

एकस्माद् ब्रह्मणो नानात्मकस्य जगतः प्रसारः कथमभूदिति त्वस्माभिर्दृष्टम्। एतत्संबन्धेऽयं प्रश्नोऽगत्योत्तिष्ठति यत् कदाचिदस्य नानात्वस्य संकोचोऽपि भवति न वा। यतो नहि नानात्वं सत्यं नास्ति परं प्रतीतिमात्रमस्ति अतोऽस्य प्रश्नस्येदं रूपं जातं यत् कदापि अस्य नानात्वस्य प्रतीतेर्लोपो भवति न वा।

नानात्वस्य मूलमविद्याऽस्ति, इयं जटा कर्मणा नहि कृन्त्येत। वयमागामिन्यध्याये कर्मणः सम्बन्धे विस्तरेण विचारं करिष्यामः किन्तु इदं स्पष्टमस्ति यत् कर्म अविद्याया विरोधि न भवेत्। अच्छादपि अच्छतरं कर्म भवेत् परं तन्नानात्वाधारोपर्येव क्रियेत अपरं कंचिन्नु कंचित् संस्कारम् अत्यक्त्वा नहि विलीयते। संस्कारेण नानात्वस्य जटा अधिकं पुष्टा भविष्यति। यदि वासनाया उपरि उत्थाय कर्म कर्तुं शक्येत तदातु तद् बन्धनं दृढं न करिष्यति परन्तु यावत्पर्यन्तमात्मसाक्षात्कारो न भवेत्तावत्पर्यन्तं पूर्ण-वैराग्यं नहि भवेत्। यथाहि वयमागामिन्यध्याये द्रक्ष्यामः, कर्मणः प्रभूतं महत्त्वमस्ति। अस्य महत्त्वस्य दिशि प्रथमखण्डस्य चित्तप्रसादाधिकरणे संकेतः कृतो वर्तते। परन्तु कर्म स्वतोऽविद्यां मृष्टयितुं नहि शक्नुयात्।

श्रवणं मननम्—सच्छास्त्रविचारः, दार्शनिकवाङ्मयस्यानुशीलनम्—अपि अविद्यां दूरीकर्तुं नहि शक्नोति। शास्त्रं जगतोऽसारतां संबोधयितुं शक्नोति परन्तु संबोधनैका वार्ताऽस्ति, अनुभवकरणं अपरा वार्ताऽस्ति। संबोधनं संबोधना च नानात्वस्याभ्यन्तरे भवतः।

शास्त्रे ब्रह्मणोऽन्वेषणं तुपेऽन्नस्य अन्वेषणमस्ति। तर्केणातर्क्यस्य ग्रहणप्रयासः कनिष्ठिकया सूर्यस्य स्पर्शकरणप्रयत्नादपि बृहत्तरो दुःसाहसोऽस्ति। एतस्येदं तात्पर्यं नास्ति यन्मननं व्यर्थमस्ति। तत् चित्तस्यानुकूलत्वसम्पादने अन्येषामनुभवेन लाभप्राप्तौ च सहायकं भवति। य आत्मसाक्षात्कारकोटिं यावन्नहि प्राप्तस्तत्कृते स्वाध्यायः, शास्त्रानुशीलनम्, मननं च प्रभूतमावश्यकमस्ति परमेतेनापि नानात्वं दूरं नहि भवति।

अविद्यायाः प्रतिषेधो विद्यया भवति। यन्नानात्वम् अविद्ययोत्पन्नमभूत् तद विद्ययैव दूरीभवेत्। विद्याया द्वौ भेदौ स्तः। पराऽपराचेति। अपराया विद्याया आरम्भः शास्त्राद् योगिजनोपदेशाच्च भवति। तया नानात्वबुद्धिः शनैः शनैः क्षीणा भवति, जगतो वास्तविकरूपं किंचित् किञ्चित् संबोधे आयातुं प्रारभते। अपराया विद्याया एवाभ्यन्तरे तेऽनुभवाः सन्ति ये सम्प्रज्ञातसमाधौ विद्यन्ते। समाधेर्भूमिकासु यथा यथा गतिर्भवति तथा तथा नानात्वं प्रतनुतांयाति। अस्मितायाः समाधेरन्ते नानात्वस्य अपराया विद्यायाश्च युगपद् द्वयोरन्तो जायते। अपरा विद्या सोऽग्निरस्ति यः तृणादिकं दग्ध्वा स्वयमेव शान्तो भवति। आत्मसाक्षात्कारः परा विद्याऽस्ति यस्यां माया पूर्णतया शान्ता भवति।

इयमवस्था नयभेदेन कतिभिर्नामभिराकार्यते। अविद्याया बन्धनं नश्यति अत मुक्तिर्मोक्षो वास्ति, अस्मिताया दीपको निर्वाति अत इदमेव निर्वाणमस्ति।

शास्त्रात्मसाक्षात्कारयोर्मध्ये ईदृश्यः कतिचन अवस्थाः सन्ति यासु अविद्यायाः यवनिका अंशतो दूरीभवति अपरं च नानात्वस्य न्यूनाधिकतया लोपो जायते। तासां स्तोककं निरूपणमनुचितं न भविष्यति।

## १ सुषुप्त्यधिकरणम्

स्वस्थो मनुष्यः प्रतिदिनं किञ्चित् चिराय गम्भीरनिद्रायां शयितो जायते। य एवं कर्तुं न शक्नोति स आत्मानं दुर्भागं मन्यते। सुषुप्तौ भोक्तृत्वकर्तृत्व शक्ती निष्क्रिये भवतः, ज्ञातृत्वे लघुकेव सक्रियता वर्तते। अस्यामवस्थायां नानात्वं लुप्तप्रायीभूतं जायते। अनुभूतिक्रमो नहि विद्यते, निद्रालुः कालाद् बहिर्भूयते। परन्तु प्रभूतं चिरं यावन्नहि तिष्ठति। जागरणेन सार्थं पुराणाः संस्काराः पुनरपि बलवन्तो भवन्ति अपरं नानात्वस्य प्रतीतिः पूर्ववत् बोभूयते।

# २ महाप्रलयाधिकरणम्

एवं तु विशेषकारणेभ्यः कस्याञ्चिद् व्यक्तेः कदापि निद्राऽऽयाति किन्तु काचिदीदृशी परिस्थितिर्भवति यद् रात्रौ एकस्मिन्नेव समये लक्षं मनुष्याः शयाना दृश्यन्ते। सर्वे परस्परं पृथक् सन्ति परं सर्वेषां व्यक्तित्वं क्षपितमिव भवति। कदा कदा एवं भवति यद् ईदृशी अवस्था दीर्घ कालाय प्रभूतानां जीवानां जायते। ज्योतिषी निश्चयेन नहि कथयितुं शक्नुयाद् यत केषु खेचरपिण्डेषु जीवधारिणो वर्तमानाः सन्ति। सर्वेषां प्राणिनां शरीराणि पृथिव्यां उपरि वर्तमानानां प्राणिनां समानानि सन्ति, इयं वार्ता कथं मानिता भवेत्? ईदृशी परिस्थितिरुत्पन्ना भवेद् यस्यां परस्परं संबद्धाः प्रभूताः पिण्डाः सहैव नष्टा जायेरन् अथवा वस्तुं योग्या नहि भवेयुः। सूर्ये किञ्चित्प्रकारकाघातेन सौरमण्डलीय सकलानां ग्रहाणाम् इयमेव गतिर्भविष्यति--सूर्यः शनैः शनैः शीतो भवति। एकस्मिन दिने तस्य शैत्यमीदृशं वृद्धं भविष्यति यत् तस्मिन् समये तेन सार्धं कोऽपि ग्रहो नहि अवशिष्टः स्यात् तदा सोऽस्मादृशां प्राणिनां वासस्य अयोग्यः सम्पन्नो भवेत्। सूर्य आकाशगङ्गायामस्ति। यद्यस्या नीहारिकायास्तस्मिन् प्रदेशे यस्मिन् सूर्य इदानीमस्ति कश्चन क्षोभ उत्पन्नो भवेत् तदा सूर्यस्तत्परिवारश्च नष्टौ भवेताम्। क्षोभो भविष्यति न वा, यदि भविष्यति तर्हि कदा कथं च भविष्यति, एतत्सर्वं वयमिदानीं न जानीमः। विज्ञानस्येदृशं प्रतीतं भवदस्ति यद् वायोः सक्रियता क्षामा भवत्यस्ति अर्थात् शनैः शनैः सकला भौतिक पिण्डा निश्चेष्टा, गतिहीना भवन्तः सन्ति। यदि एवमस्ति तथापि एतदुपरि प्राणिनो नहि स्थातुं शक्ष्यन्ति। परन्तु जीवा नष्टा नहि भवन्ति, ते प्रसुप्ता इव भवन्ति। ईदृशी दशा यस्यां जगतः प्रभूतो बृहन् भागो नष्टः, अथवा वासस्य-जीवानां भोगस्य—प्रयोग्य, सम्पद्यते, महाप्रलयः कथ्यते। महाप्रलये तस्य खण्डस्य जीवा हिरण्यगर्भे निमग्न स्तिष्ठन्ति। यदा पुनः परिस्थितिरनुकूला भवति-अपरमनुकूलपरिस्थितेः पुनः स्थापनमनिवार्यमस्ति, यतोहि जीवानामभ्यन्तरे एवतु सकलानां परिस्थितीनां भाण्डागारोऽस्ति-तदा नवीना सृष्टिर्भवति। जीवानां ज्ञातृत्वादिशक्तयश्चिरं सुपुप्ता नहि स्थातुं शक्नुवन्ति यतो हि अविद्या तु क्वचिद् गता नास्ति। शक्तयो यदा जागरणोन्मुखा भवन्ति तदा जीवा हिरण्यगर्भात् पुनर्निष्क्रिरन्ति। प्रत्येकं जीव आत्मना सार्धमात्मनः संस्कारमानयति। पुनर्यथा पूर्वाध्यायस्य भूतविस्ताराधिकरणे दर्शितमस्ति जीवा जगतो निर्माणं कुर्वन्ति। पूर्व संस्कार कारणाद् जीवेषु वैलक्षण्यं भवति अत एकविधेन शरीरेण सर्वेषां कर्म नहि निर्वहेत्। परिस्थितयः परिवर्तन्ते, सर्वेषामात्मन आत्मनोऽनुरूपाणि शरीराणि मिलितानि जायन्ते। एवमेव

सर्गप्रतिसर्गयोः प्रवाहश्चलितो जायते। महाप्रलयनूतनसृष्ट्योर्मध्ये यावत्कालपर्यन्तं जीवा हिरण्यगर्भे प्रलीनाः सन्ति तावद्दिनपर्यन्तं तेषां कृते नानात्वं लुप्तप्रायं भवति। परन्तु अयं लोप आत्यन्तिको नास्ति। तस्यामवस्थायामपि ज्ञानशक्तिः कर्म कुर्वत्यस्ति अपरं ततः पश्चात् नानात्वस्य वृक्षः पुनरपि हरितो भरितश्च जायते।

# ३ सौन्दर्यानुभूत्यधिकरणम्

केचनेदृशा दृग्विषयाः सन्ति येषां दर्शनेन हृदये रसस्य सञ्चारो भवति। गगनचुम्बि हिमाच्छादितं गिरिशिखरम्, समुद्रस्य फेनिलोत्तालतरङ्गाः, प्रपाता, निर्झराश्च ताराभिर्वि-द्योतमानमाकाशम्, शीतला शशिप्रभा, एतानि सर्वाणि मनोरमाणि भासन्ते। कयाचित् तूलिकया खचितं चित्रम्, कस्यचित् कवेर्मुखात् निर्गता कियन्तः शब्दाः चित्तं हटात् आत्मनो दिशमाकर्षयन्ति। वयमेतेषु सर्वेषु यां मनोहारितां प्राप्नुमस्तदेव सौन्दर्यं कथयामः। एतानि सर्वाणि स्वस्वपद्धत्या सुन्दराणि सन्ति।

सौन्दर्यस्य सम्बन्धे बृहद् वाङ्मयमस्ति। विशेषज्ञैर्यासां वार्तानां विवेचनं कृतमस्ति तासु प्रवेशस्यास्माकमावश्यकता नास्ति। अत्र तु सौन्दर्यानुभूतिविषये केवलमियं वार्ता साग्रहं प्रतिपाद्यास्ति यत् तस्यामवस्थायां मनुष्य आत्मानं विस्मरन्निव जायते। द्रष्टुर्दृश्येन सह तन्मयताभावो जायते। यावती एव तन्मयता भवति तावत्येव गभीरा सौन्दर्यानुभूति-र्भवति। सौन्दर्यस्येयमेव कषपट्टिकास्ति यत् तत् चित्तमेकाग्रं कर्तुं शक्नुयात्। अनुभूतिस्तु किञ्चिद् द्रष्टुरुपरि निर्भरा भवति, किञ्चिद् दृश्योपरि। द्रष्टा आत्मानं यावदेव वासनातः शून्यं करोति तावत्येव तस्य सौन्दर्यस्यानुभूतिर्भवति। वासना रागात्मिका भवतु द्वेषरूपा वा, सा सौन्दर्योपरि यवनिकां पातयति। कामी पुरुषः सौन्दर्यं नान्विष्यति न वा प्राप्नोति, स रतिवासनायास्तृप्तिमात्रं समीहते। यः क्रोधेन उन्मत्तो भवति तत्कृते पुष्पादपि कोमलालके बालकेऽपि सौन्दर्यं नास्ति। यस्येच्छा कुत्रचिदन्यत्र रतास्ति तस्य कृते किञ्चिदपि दृश्यं सुन्दरं नहि भवेत्। यदा चित्तमात्मानं कस्मिंश्चिदपि वस्तुनि लगयति तदा तस्य पूर्णं ज्ञानं भवति, तस्य सकलं तत्त्वं, सकलं रहस्यम् स्वत एवात्मनः समक्षमायाति। नाटकप्रेक्षणस्य पूर्णो लाभस्तस्यैव मिलति यः स्वयमभिनेता न भवति। ईदृशस्य प्रेक्षकस्य प्रतिक्षणं वस्तु-स्वरूपस्य कश्चन नवोऽनुभवो भवति यस्तस्य मनुष्यस्य न भवेत् यस्तद् भोगस्य साधनमात्रं मन्यते।

सौन्दर्यानुभूतेः कुञ्चिका स्रोत आपत्तिः, प्रवाहे आत्मपातनम्, अस्ति। सौन्दर्यं, वस्तुनः स्वरूपम्, तदा पूर्णरूपेण समक्षमायाति यदा सौन्दर्यस्यापि अन्वेषणं, तदर्थं प्रयासः, न भवेत्। एवं स्थिताविव बिन्दुस्तं समुद्रमुन्मुक्तं करोति यस्तस्य गर्भे सततं क्षपितोऽस्ति। विकसिते कमले, मेघमालातः पश्यन्त्यां ज्योत्स्नायाम्, उषायाः स्मिते, मयूरस्य नृत्ये, विधवाया मौनरोदने, अनाथस्य लुण्ठितयोरक्ष्णोः, विश्वस्य रहस्यं भरितमस्ति। वयं रोदनस्य सम्बन्धे सौन्दर्यशब्दं श्रुत्वा आश्चर्यचकिता भवामः। अयं प्रयोगः किञ्चिदसाधारणवस्त्वस्ति परन्तु अस्माकमाश्चर्यस्य मुख्यं कारणमिदमस्ति यद् वयं सौन्दर्यं भोग्यतायाः साधनं मानयितुमभ्यस्ताः सम्पन्नाः स्मः।

यच्चित्तं किञ्चिदपि वस्तु उद्दिश्य आत्मानमस्यामवस्थायां पातयति तस्य तद् वस्तुनो यथावदनुभवस्तु भवत्येव अर्थात् तेन ताः संविदस्तु प्राप्ता भवन्त्येव या अन्यथा त्यक्ता भवन्ति, बुद्धेस्तस्यां ताः शक्तयो मूर्त्तिमत्यो दृश्यन्ते या जगत् परिचालितं कुर्वत्यः प्रतीता भवन्ति। उच्चः पर्वतः प्रस्तराणां समूहो नास्ति, सा शक्तिरस्ति या गुरुत्वाकर्षणम् अभिभूयतिष्ठति, तस्य ओजसः प्रतीकमस्ति या नीचैराकर्षणकर्त्रीः परिस्थितीः पादेनाहत्य मनुष्यान् उपरि उत्थापयति; वसन्ते कलिका नहि स्फुरन्ति, शिशिरे पत्रिका नहि क्षरन्ति, ब्राह्मयो रौद्रयश्च शक्तयः कर्म कुर्वन्ति, कमलकिञ्जल्कस्य मध्ये भ्रमरो रसपानं नहि करोतिः लक्ष्मीरमृतस्य कलशं लोठयति; शुनी आत्मनः शावान् स्तन्यं नहि पाययतिः साक्षाद् जगद्धात्री जीवेषु प्राणान् ददत्यस्ति। एषां शब्दानां प्रयोगो नहि क्रियते, आसां शक्तीनां कल्पनाऽपि प्रभूतानां न भवति, पुनरपि आसां साक्षात्कारो जायते। द्रष्टाऽऽत्मनः साधारणजीवनोपरि उत्तिष्ठते, भौतिकस्य जगतः कियन्तमंशं पृष्ठे त्यजति, तस्मै ऋतस्य सत्यस्य च काचित् आभा मिलति, नानात्वस्य कियानुपशमो जायते, तेनैकेन पदार्थेन स्तोकं प्रभूतं वा तादात्म्यं प्राप्तं भवति, यत् सर्वस्य मूलमस्ति। सौन्दर्यानुभूतिः, रसानुभूतिर्वा एकप्रकारकः समाधिरस्ति। ते लोका भाग्यवन्तः सन्ति येषामयमनुभवः प्राप्तो भवति। कदाचित् सर्वेषामप्येवमनुभवः स्यात् परन्तु कस्यचिदियं सिद्धिर्जन्मना प्राप्ता भवति। ईदृशोऽनुभवः प्रभूतं चिराय न तिष्ठति परन्तु यावत्पर्यन्तं तिष्ठति तावत्पर्यन्तं चित्तमेकस्यामपूर्वोल्लासमय्यामवस्थायां वर्तते। ये लोका आत्मनं इममनुभवम् अपरां व्यक्तिं यावत् उपस्थापयितुं क्षमा सन्ति ते एव कवियः कलाकारा वा कथयितुं योग्या सन्ति।

दृश्यं द्रष्टुर्भिन्नं नास्ति। अविद्ययैवेदं द्वैतमुत्पन्नं कृतमस्ति। दृश्यरूपेण द्रष्टुरात्मनो दर्शनं भवति। दृश्ये यान्यपि स्थूलानि सूक्ष्माणि वा लक्षणानि प्रतीतानि भवन्ति तानि

द्रष्टुरेव चित्तप्रसूतयः सन्ति । अतो यदा चित्तमेकाग्रं भवति रसानुभूतिश्च भवति तदा द्रष्टाऽऽत्मन एव सूक्ष्मं रूपं पश्यति । दृश्यं सीमितं भूत्वा द्रष्टुः पार्श्वमायाति ।

एवं तु विशिष्ट व्यक्तीनां कृते सर्वत्र सौन्दर्यमस्ति परन्तु कियन्ति वस्तून्येतादृशानि सन्ति यानि चित्तमात्मनो दिशं झटित्याकर्षयन्ति । एषु भौतिक शक्तय इत्थं व्यक्ता भवन्ति यत् तासां सकृत् चित्तोपरि प्रभावः पतत्येव । उच्चाः समुद्रस्योत्तिष्ठन्त्यो लहर्यः, विकसितानि पुष्पाणि, नद्याः कलकल प्रवाहः, नक्षत्र वसना निशा, एतेषां दिशि चित्तं कृष्टमेव भवति ।

इयमेव वार्ता सत्यानां कलाकाराणां कृतौ भवति । कलाकारः फोटोनामिकां सत्याकृतिं नहि स्फोटयति । सम्प्रकृतेरनुकृतिं नहि करोति । तस्योद्देश्यमिदमस्ति यत् सत्यस्य या आभा तस्मै मिलितास्ति सा अपरेषामपि मिलेत् । एतदर्थं तस्य भौतिक साधनानामुपयोगः कर्त्तव्यो भवति अपरं चेमानि साधनानि आत्मनः सहजान् दोषान् हातुं नहि शक्नुवन्ति । चञ्चलानां सक्रियाणां पदार्थानां धातौ प्रस्तरे पत्रे वा बन्धनं, तेषां हिंसास्ति । तस्य कौशलं अस्यामेव वार्तायामस्ति यत् कलायाः सामग्री कलाया उद्देश्यं क्षामात् क्षामं व्यवहितं कुर्यात् । कविरस्यां वार्तायां भाग्यवानस्ति यत्तस्योपकरणं शब्दोऽस्ति । शब्देषु प्रवाहो भवति अपरं ते विचारप्रवाहस्य प्रतीकानि भवन्ति । पद्येषु विभिन्नच्छन्दसां मात्राणां लयस्य च सङ्घटनेन प्राणेषु लय उत्पद्यते अपरं चैतेन चित्तस्यैकाग्रतायां सहायता मिलति । शब्दानां प्रयोगोऽपि ईदृशो भवति यद् बुद्धिर्विवरणस्य वार्तासु अनवसयज् तस्यैव तत्त्वोपरितिष्ठेत् यत्र कविः तां केन्द्रयितुमिच्छति ।

काव्यं दृश्यं भवतु श्रव्यं वा, कवेर्विभावेन स्थायिना च व्यवहारोऽवश्यमेव कर्त्तव्यः, अनुभावस्य सात्त्विकस्य च दर्शनाऽऽपतति परन्तु तस्य लक्ष्यं रस एवास्ति । यदि नायको नायिका च, उद्दीपन सामग्र्यो वा रत्यादयो भावा वा पात्राणां चेष्टा वा आत्मनोऽग्रे गन्तुं नानुमोदेरंस्तर्हि कवेः प्रतिभाया दोषोऽस्ति । एतत् सर्वं तु रसस्य कृते व्याजमात्रं भवेत् । कस्यचित् पुरुषस्य कांचित् स्त्रियं प्रति प्रेम्णः, कस्याश्चित् प्रोषितपतिकाया विलापस्य, कस्याश्चिन्मातुः पुत्रस्य मृत्योरुपरि क्रन्दनस्य, कस्यचिन्महापुरुषस्यात्मबलेः, कस्यचित् संयमिनस्तरसश्च वर्णनस्याधारः प्रत्येकं दशायां कश्चन व्यक्तिविशेष एव भवेत् परन्तु चित्तमेभ्य उदाहरणेभ्य उत्थाय प्रेम्णः करुणायास्त्यागस्य वैराग्यस्य च निर्व्यक्ति क्षेत्रेषु मण्डलयितुमारभते । श्रोताऽऽत्मनि पात्रं पात्रे चात्मानं द्रष्टुमारभते, स्तोकं कालाय अनुभूतेः परिधिः निःसीमस्तस्या गभीरता चागाधा सम्पद्यते ।

कलासु संगीतस्य स्थानं सर्वत उच्चमस्ति। संगीतं सहित्यादपि उपरि उत्तिष्ठति। शब्दा आत्मनामर्थान् ध्वनींश्च नहि त्यक्तुं शक्नुवन्ति अतस्ते बुद्धिं किञ्चिन्नु किञ्चित् पाशबद्धां कुर्वन्त्येव संगीते स्वरस्य तालस्य च प्रयोगो भवति। यस्मात् स्फोटाद् भौतिकं जगन्निःसृतमस्ति तस्य प्रथमाभिव्यक्तिः स्वरेष्वभूत्, अतः स्वरराशिः पराया वाण्याः प्रभूतं निकटेऽस्ति। विशिष्टेभ्यो गायकेभ्यो वादकेभ्यश्च भाषायाः आवश्यकता न भवति; स्वराणामारोहावरोहौ प्राणान् बहिष्ट आकृष्य ऊर्ध्वमुखान् कुरुतः। चित्तं विक्षेपं त्यक्त्वा मन्त्रमुग्धसर्प इव निश्चलं संजायते, नानात्वं दूनमिव संजायते, शरीरस्य आभ्यान्तरं बहिश्च एकसदृशं भङ्कृतं भवति। ईदृशं प्रतीतं भवति यद्देहस्य बन्धनं नष्टं जातम्, अहमुत्थित इव प्रसुत इव च भवामि, एकोऽपूर्व आनन्द आत्मनि व्याप्नोति। रसस्य महोदधिः उद्वेलितो भवति। सामवेद-स्योद्गातारो, वीणायाः कुशला वादकाश्च अनाहतनादस्य स्वरे स्वरं मेलयन्ति, नटवरस्य नूपुरः ब्रह्माण्डस्य स्पन्दने तालं ददाति। एतादृशाः संगीतविशारदा अपि न्यामाः सन्ति येषां तालस्य स्वरमण्डलस्य चोपरि एतावां श्चमत्कारी अधिकारो भवेत्, एतादृशा भाग्यवन्तो-ऽपि न्यामाः सन्ति ये सङ्गीतादेतादृशं रसं प्राप्नुयुः, परन्तु क्षणिकोऽप्येतादृशः समाधि-कल्पोऽनुभवो मनुष्यं पवित्रयति।

कदाचित् ईदृशोऽनुभवो यस्योपरि उल्लेखः कृतोऽस्ति—प्राणवायोराभ्यन्तर दिशि आकर्षणम् श्वासस्य रोधकल्पता, शरीरस्य शिथिलतापत्तिः, आत्मन उपरि उत्थानमिव अथवा चतुर्दिशि संप्रसरणमिव, ईदृशोऽनुभवः एतादृशानामपि लोकानां भवति ये न कलाकाराः सन्ति नापि विशेषेण कलायाः प्रेमिणः। एवं प्रतीतं भवति यदस्मिन् क्षणे विश्वस्य सकलं रहस्यं ज्ञाने आगतम्, पश्चादस्य काचित् स्मृतिर्नहि भवति यत् सम्बोधे किम् आगतमासीत्। ईदृशा लोका एतदनुभवदिशि उपेक्षां कुर्वन्ति अथवा इममेव समाधेः काष्ठां सम्बुध्यन्ते। द्वयोरप्यवस्थयोस्ते ईदृशं दुर्लभमनुभवम् आत्मसाक्षात्कारस्य श्रेणि-सम्पदनाद् वञ्चिता भवन्ति। तैस्तदपि पदं नाप्यते यत्र कलाकारो गच्छति यतोहि अयोगि-त्वेऽपि धन्यः कलाकारः समाधेर्निम्नभूमिकासु वारं वारं प्रवेशं कर्तुं शक्नोति।

यदा वैज्ञानिकः प्रयोक्ता स्वशास्त्रीयाणां गूढानां समस्यानामुपरि विचारं करोति तदा तस्य बुद्धेः समन्ततोऽपि नानात्वस्य वारिदाः स्वल्पकालार्थमपसरन्ति अपरमेकत्वस्यैका आभा दृष्टिपथमापतति। इयमाभाऽस्फुटा बाढं भवेत् परन्तु तस्मिन्नद्भुता स्फूर्तिर्भवति। यैर्लोकैर्विज्ञाने नवयुगप्रवर्त्तनस्य श्रेयः प्राप्तमस्ति तेषामीदृशोऽनुभवः कदानु कदा जातोऽस्ति। अयं स बिन्दुरस्ति यत्र विज्ञानस्य कलायाश्च रेखे परस्पं कृन्ततः।

कश्चिदीदृश एवानुभवस्तस्या व्यक्तेरपि कदापि भवेद् यो दार्शनिकसमस्योपरि गभीरं मननं करोति। यदि मननेन सार्धं निदिध्यासनं न भूतं तदा व्यर्थमस्ति। केवलमनुमन्तुः समक्षं सत्यस्वरूपस्य कतिचिन्नवानि पटलानि न ह्यायान्ति, स बुद्धिनिर्माणानां विकल्पानां शब्दानां च जङ्गले इतस्ततो भ्रमन् तिष्ठति। यः केवलं पण्डितोऽस्ति तस्य पदं विज्ञानाचार्यस्य सत्यकलाकारस्य पदात् प्रभूतं नीचमस्ति। यदि तस्य कदाचित् सत्यस्य आभा मिलिताऽपि तर्हि तस्मिन् प्रकाशे तस्याभ्यन्तरान्धकारः अधिकप्रगाढो भूत्वोत्थितः स्यात्। केवलं शास्त्रीयां विद्यां मन्यते सा अविद्याया एव भेदोऽस्ति।

दर्शयिष्यमाणे द्वे चित्रे सम्भवतो रोचके प्रतीते भवेताम्। प्रथममचेतनवादाधारोपरि निर्मितमस्ति। तस्य निर्माता 'काडवेल' आसीत्। तस्य तात्पर्यं स्पष्टमस्ति। द्वितीयमपि स्पष्टं भवेत्। एतत् एतस्मिन् पुस्तके प्रतिपादितस्य सिद्धान्तस्यानुकूलमस्ति। अस्मिन्नेतत्प्रदर्शनस्य प्रयत्नः कृतोऽस्ति यत् प्रतीयमानं जगद् ब्रह्मणोऽभिन्नमस्ति, मायायां तस्य च्छायास्ति। एतज्जगद्रूपस्यैकप्रकारिकानुभूतिः अवधूतिश्च मानसशास्त्रस्य विद्यार्थिनो द्वितीयप्रकारिका विज्ञानस्य विद्यार्थिनश्च भवति। समन्वयद्वारा दर्शनशास्त्री इमे द्वे मेलयति।

शुद्धब्रह्मणः साक्षात्कारो निर्विकल्पकसमाधौ भवति। प्रतीयमानशुद्धयोर्मध्ये कलाकारस्य पूर्णनिष्कामकर्मिणश्च जगद् भवति।

# ४ उपासनाधिकरणम्

उपासनाया विषयो यावानेव महत्वपूर्णोऽस्ति तावानेव विशालं ऽस्ति। तत्सम्बन्धेऽनेकः प्रश्न उत्थातुं शक्नोति; उपासनाप्रवृत्तेर्विकासः कथमभूत्? मनुष्येण प्रथमं कस्य कथं चोपासना कृता? उपासनापद्धतिषु भेदः कथमस्ति? पद्धतिभेदेन ये सम्प्रदायाः सम्पन्नाः सन्ति तेषां मनुष्यस्य सांस्कृतिकसामाजिकार्थिकविकासोपरि कः प्रभावः पतितोऽस्ति? समाजशास्त्रस्य इतिहासस्य च पण्डितैरेतादशप्रश्नोपरि विचारः कर्त्तव्य एव, अपरं च ये लोका विभिन्नसम्प्रदायेषु व्यासपीठोपरि उपविशन्ति तैरपि एतद्दिशि ध्यानं दातव्यमेव। परन्तु अस्माकं कृतेऽयं विचारः प्रायशोऽप्रासङ्गिकोऽस्ति।

योगाभ्यासस्यापि गणना उपासनायां कृता जायते परन्तु वयमद्यावधि तस्य पृथगुल्लेखं कुर्वन्त आयाताः स्म अपरं पश्चादपि एवमेव करिष्यामः। तं त्यक्त्वा उपासकानां त्रयो भेदाः कर्तुं शक्यन्ते। सुविधायै एषामलग्नमलग्नं ग्रहणं साधु भविष्यति।

## (क) ईश्वरोपासकः

मायाशबलस्य ब्राह्मणः परमात्मन एव नाम ईश्वरोऽस्ति। स एव एकः सन्ननेको भूत्वा जीवात्माऽस्ति। तस्यैव बुद्धे हिरण्यगर्भात् सकलं जगत् निरेति, महाप्रलयस्य पश्चात् पुनतस्मिन्नेव समेति। इयं तु दार्शनिकी वार्ता जाता, परंतु प्रत्येकं मनुष्य आत्मनि कतिचन त्रुटीः कतिचन अपूर्णता, अनुभवति ता दूरं कृत्वा स आत्मनः कृते एकमादर्श सम्पादयति। परमात्मनि निक्षिप्तो भूत्वाऽयमादर्श स्तस्योपासकस्येश्वरः सम्पद्यते। साधारणयेन सर्वेषामुपासकानां कृते ईश्वरः पूर्णतया एक समानो नहि भवति।

विभिन्न सम्प्रदायानां शास्त्रकारैरेषां लौकिकानामीश्वराणामेकप्रकारको महत्तमसमापवर्तक इव उद्भावितोऽस्ति अपरं तस्मिंस्तेषां सद्गुणानां निक्षेपः कृतोऽस्ति ये तेषां विचारे मनुष्यचरित्रस्य कृते उन्नायका अपरं तस्याध्यात्मिकोन्नतेः साधकाश्च सन्ति। खिष्टीयैर्वैष्णवैश्चाचार्यैः ईश्वरविग्रहस्योल्लेखनीयः संस्कारः कृतः। ईश्वरस्य यद्रूपमनेन प्रकारेण निष्पन्नमभूत्, तत् तेषां सर्वेषामुपासकानां ग्राह्यं भवति ये विदुषां संसर्गे आयान्ति अथवा शास्त्रीयोपासनापद्धतौ दीक्षिता भवन्ति। अयमीश्वरः सर्वज्ञः सर्वशक्तिः सर्वव्यापकः अन्तर्यामी न्यायमूर्तिः परमकारुणिकश्चास्ति, स सदाचारिणां मुमुक्षूणांच सहायतां करोति, अपरमाततायिनां दण्डं च ददाति। परंतु करुणामयस्य दण्डो द्वेषप्रेरितो नहि भवति अतो

दण्डद्वाराऽपि स आततायिनां तथैव हितं करोति यथा पिता अध्यापको वा भर्त्सनां कृत्वा वैद्यः कटुकौषधं च दत्त्वा कल्याणं कुर्वन्ति।

अयमीश्वरः शास्त्रकाराणां बुद्धिनिर्माणं बाढमेव वा भवेत् परन्तु कल्पना निराधारा नास्ति। सर्वेषां प्राणिनां ज्ञानानि सर्वेषां प्राणिनां शक्तयश्चत विराजो ज्ञानशक्त्योरन्तर्भूतानि सन्ति अपरं विराट् च परमात्मनोऽभिन्नोऽस्ति। ऋतं सत्यं च न्यायपुरस्कारदण्डाना-माधारौ स्तः, अपरमेतौ द्वौ हिरण्यगर्भान्निष्कीर्णौ स्तः। जीवो स्खलति स्खलित्वा च पुनरुत्तिष्ठति। ये ऋतसत्ये नीचैः पातयतः त एवोपरि उत्थापयतश्च अतो यत्र न्यायोऽस्ति तत्रैव करुणाऽस्ति। परमात्मनः स्वधाशक्तिर्यत्रैकस्यां दिशि अविद्यारूपास्ति तत्रैव मुमुक्षवे विद्यारूपा च भवति।

परमात्मनः सर्वतः प्रधानं लिङ्गं प्रेमास्ति। स प्रेमस्वरूपोऽस्ति। प्रेम रागस्यैव भेदो-ऽस्ति, अतः ईश्वरो रसस्वरूपः कथितोऽस्ति। रागस्य भेदेषु प्रणयस्य वात्सल्यस्य च स्थानं प्रभूतमुच्चमस्ति परन्तु शुद्धप्रेम्णः पदवीमेते अपि उपस्थातुं नहि शक्नुतः। साधारणतः प्रेम रतिवासनाया एव नामान्तरमभिमन्यते। अस्य कारणमिदमस्ति यत् प्रणये प्रभूतं बृहदंशो रतिवासनाया अस्ति। अपरं बहूनां मनुष्याणां प्रणयस्यैवानुभवो भवति। साहि-त्येऽपि यत् प्रेम कथितं जायते तद् वस्तुनः प्रणय एव भवति। वास्तविकप्रेम्णि रतिवास-नायाः किञ्चिदुन्नमितं रूपमपि भवेत् परं तेन सार्धं सख्यवात्सल्यात्मनिवेदनानामपि अपूर्वं सम्मिश्रणं भवति। गार्हस्थ्यं जीवनं तत्रैव सुखमयं भवति यत्र प्रणयः शुद्धो भूत्वा रतिवा-सनारूपस्योत्तरोत्तरं परित्यागं कृत्वा प्रेम्णो दिशि अग्रसरो भवति, यत्र स्वार्थस्य बुभुक्षायाश्च छायापि भवेत् तत्र प्रेम नहि भवेत्। प्रेमी आत्मनः प्रेमपात्रेण सह आत्मानमेतावत्तन्मयं करोति यत् तस्यात्मनः सुखदुःखयोः प्रश्नो नहि अवशिष्यते। एतादृशानां पुरुषाणामुदा-हरणानि लभ्यन्ते यैरात्मनां प्रेयसीनाम् अपरैः पुरुषैः सह विवाहकरणे सहायता दत्ताऽस्ति यदा हि एतद्वार्ताया रोधनं तेषां कृते शक्यमासीत्। एतादृशीनां स्त्रीणामुदाहरणानि मिलन्ति याभिः स्वयं स्वप्रेमभाजनानां प्रसन्नतायै आत्मनां सपत्नीनां सिन्दूरं प्रसाधित-मस्ति। ईश्वरीयं प्रेम इतः कियन्निर्मलं भवति। तस्मिन् स्वस्य परस्य च कृते स्थानं नास्ति। परमात्मनि जीवानां परस्परभेदा लयं व्रजन्ति। यः प्रेमस्वरूपपरमात्मन उपासकोऽस्ति तस्मिन् कमपि जीवं प्रति द्वेषस्य हिंसायाश्च भावो नहि विद्यते।

ईश्वरोपासके चारित्रगुणेन तु भवितव्यमेव, तस्य सर्वतो बृहत्तमं साधनमनुरक्ति-रस्ति। अनुरक्तिम् ईश्वरप्रणिधानं, प्रपत्तिं, भक्तिं चापि कथयन्ति। ये लोका एवं कथ-

यन्ति यद् भक्तिरत्यन्तं सुगमाऽस्ति ते सम्यग् न जानन्ति । प्रेमकरणं यत्नसाध्यं न भवति । यद्वा प्रेमभावः स्वयमुदयते अथवा नोदयते अस्तु, भक्तः सर्वतः आत्मनश्चित्तम आकृष्य, ईश्वरचरणयोस्तल्लगयति । आत्मनः सकलां संपत्तिमीश्वरार्पणं सम्बुध्यते, आत्मनः सकलं कर्मेश्वरप्रेरितं मन्यते, प्रत्येकं वस्तु ईश्वरस्य विभूतिं सम्बुध्यते, प्रत्येकं दृग्विषयमीश्वरस्य शक्तेरभिव्यक्तिं मन्यते, सुखदुःखे ईश्वरस्य देये मत्वा शिरसा धारयति ।

एतेन सार्धमुपासनायाः काचित् पद्धतिरपि भवति । ईश्वरस्य गुणकीर्तनं, कश्चनपाठनः, किञ्चित्प्रकारकोजपः, येन केन विधिना ध्यानं च कृतानि भवन्ति । अनुरक्तिर्भावप्रधाना भवति अतः सर्वेषामुपासकानां कृते एकप्रकारकमेवध्यानं जपो वा नहि भवेत् । अस्मिन् मन्यमानेऽपि यदीश्वर एकोऽस्तीति कस्यचिदुपासकस्य तदुपरि पुरुषरूपेणा; नुरक्तिर्भवति, कस्यचित् स्त्रीरूपेण, कस्यिचित् कृते स पुरातनः पुरुषः परमपिताऽस्ति कस्यिचत् कृते आद्या शक्तिः, जगदम्बास्ति, कंचित् तस्य सर्वज्ञं रूपमाकृष्टं करोति, कस्य चित्कृते सर्वशक्तिरूपम्, स कस्यचित् कृते रुद्रोऽस्ति, कस्यचित् कृते शङ्करः । ईश्वरं प्रति यस्य यादृशी भावना भविष्यति स तस्य सेवां तदनुकूलभाषायमेवात्मनिवेदनं प्रार्थनं च करिष्यति ।

केचन केचनोपासका मूर्त्तेरन्य प्रतीकस्य वोपयोगं कुर्वन्ति । प्रतीके प्रतीकबुद्धया व्यवहारे कश्चन दोषो नास्ति, दोषस्तदाऽऽगच्छति यदा प्रतीकमेवोपास्यं मन्येत् ।

उपासनाया आसु शैलीषु प्रायः सामूहिकोपासनाया अपि स्थानमस्ति । प्रभूता उपासका एकत्र भूत्वा जपं, पाठं, ध्यानं वा कुर्वन्ति । ईदृशी गोष्ठी चक्रं कथ्यते । चक्रे सम्मिलितव्यक्तीनां चित्तानि परस्परं प्रभावितानि कुर्वन्ति अपरं स्तोकेनापि कालेन तादृशी एकाग्रता प्राप्ता भवति, याऽन्यथा चिरादयायात् । अतः कथ्यते यत् चक्रे उपास्यदेवता झटिति अवतीर्णा भवति । ईदृशी एकाग्रता स्तोकमेव कालं तिष्ठेत् परन्तु तावते एव कालाय प्राणा अंशतः स्तब्धीभूता जायन्ते अपूर्वा सुखमयी आत्मविस्मृतिश्च भवति । अप्रत्यक्षत्वेऽपि एवं प्रतीतं भवति यत् उपास्य आत्मनश्चतसृषु दिक्षु, आत्मनः पार्श्वे, आत्मनोऽभ्यन्तरे बहिश्च व्याप्तोऽस्ति । चक्रोपासनायामयं दोषोऽस्ति यद् इयं मादकानुभूतिः समाधेर्दिशोऽपि विरक्तं करोति ।

एतैः सर्वै रुपायैरुपासकस्य चित्तमेकाग्रं भवति, तस्य स्वतताया विवर्धनं भवति, तस्य कृते नानात्वं न्यूनाधिकं क्षामं भवति, तस्य क्षामात् क्षामं तादृशी अनुभूतिस्तु मिलत्येव या एकेनोच्चेन कलाकारेण प्राप्यते । कलाकारोपासकयोरयं भेदोऽस्ति यत् कलाकारस्य

पार्श्वे चित्तस्यैकाग्रतायाः काचिन्निश्चिता पद्धतिर्नास्ति । ईदृश्योऽपि व्यक्तयः सन्ति या विनाऽपि कांचिद्विद्यादीक्षां केवलं भावावेशेन अन्तर्मुखीभूता जायन्ते परन्तु आवेशश्चिराय स्थिरो भवितुं नहि शक्नोति । साधारणतः उपासकाय एकाग्रताविधेर्दीक्षा दीयते, अतो यदि स वाञ्छेत् तदा समाधेर्भूमिकासु दूरं यावत् यातुं शक्नोति । वस्तुत ईदृश उपासको योगी अस्ति, यद्यपि स आत्मानमनेन नाम्ना नहि आकारयति । अस्मिन् मार्गे त्रुटिरियमस्ति यत् अयं द्वैतं स्थिरं मत्वा व्यवहरति; उपासक आत्मसाक्षात्कारं कर्तुं नहि उद्युतोऽस्ति प्रत्युत ईश्वरसाक्षात्कारं कर्तुं वाञ्छति अतस्तस्य बुद्धिर्निर्विकल्पसमाधेः प्रथमगेव रुद्धा जायते । स उपासकोऽस्मितासमाधेरूर्ध्वं यियासत्येव नहि । स परमात्मानुभूत्या संतुष्टो भवति । ईदृशानामप्युपासकानां मोक्षोभवति परन्तु तैः प्रथममात्मसम्पादिता भित्तिः पातनीयासंभवति । उपासनाया भक्तिमार्गो योगस्य पर्यायो नास्ति, सा तस्यैकाशाखाऽस्ति या भावुकानां लोकानाम्, ईदृशानां लोकानां येषु ज्ञानापेक्षया इच्छाशक्तिरधिकं प्रबला भवति, विशेषं रुचिकरी श्रेयस्करी च प्रतीयते । एकाऽपरापि वार्ता ध्याने रक्षणीयाऽस्ति । समाधेरुच्चासु भूमिकासु भक्तिमार्गेण गच्छतां मध्ये स्तोकानां लोकानां गतिर्भवति । येषां लोकनामीदृशी शिक्षास्ति यत् कस्मिंश्चिल्लोकविशेषे स्थितस्य ईश्वरस्य-दिव्यरूपावलोकनेन भक्तस्यानन्दो मिलति, ये तस्मिन् लोके गत्वा मधुर वंशीं भक्त-जनस्य स्तवगानं वा श्रोतुं प्रतीक्षां कुर्वन्ति, ते आकाशादुपरि नहि उत्थातुं शक्नुवन्ति । सर्वतो बृहत्तमो दोषोऽयमस्तियदियं धारणा विस्तृताऽस्ति यद् भक्तिः प्रभूतं सुकराऽस्ति ।

प्रवृत्तेः स्वतन्त्र मार्गमननं भ्रमोऽस्ति परंतु अस्य भावस्य चित्तशुद्धावुपयोगो भवेत् । इयं साधकं दुरभिमानाद्रक्षति, य ईश्वरमन्तर्यामिणं मन्यते तस्यात्मनो वासनानां दमने सहायता मिलति । यच्चित्तं सर्वसद्गुणनिधानस्य निष्कामस्य सौन्दर्यसारस्य परमात्मनः श्रवणकीर्तनचिन्तनेषु लग्नं भवति तत्स्वयं तस्य रङ्गे रक्तं भवति ।

अस्माकमभ्यन्तरे असद्वासना अपि सन्ति साध्व्यो वासनाश्च । असद्वासना अस्मान् नीचैः पातयति समाजे क्षतिं च सम्पादयति । सद्वासना व्यक्तिसमाजयोर्द्वयोरपि कृते कल्याणकारिण्यो भवन्ति । वासना अच्छा भवतु अवद्या वा, तस्यास्तृप्तौ प्राणव्ययो भवति चित्तोपरि संस्काराश्च पतन्ति । यदि कुवासनतः मुक्तिर्मिलेत् तर्हि सुवासनानां कृते सैव प्राणशक्तिः सुरक्षिता स्यात् चित्तोपरि कुसंस्काराश्च न पतेयुः । अवद्यावासनातस्त्राणार्थं सर्वतः श्रेष्ठ उपायोऽयमस्ति यत् ताः साध्वीषु वासनासु परिणताः क्रियेरन् । सर्पस्तिष्ठत, परं तस्य विषपुटकं निष्कलितं जायेत । कामुकता, क्रोधः, लोभः असद्वस्तूनि सन्ति परन्तु उन्नमितानि भूत्वेमानि

कल्याणकारीणि सम्पन्नानि जायन्ते। भक्तस्य कृते वासनानामुन्नमनं सुकरं भवति। स आत्मनो वासनां भगवति अर्पिताः करोति। भगवान् प्रेमी संजायते, भक्त प्रेयसी संपद्यते अथवा भक्त आत्मन इष्टमेव प्रेयसी सम्पादयति, स्वयं वत्सः सम्पन्नोजायते तं च मातरं संपन्नां करोति; क्रोधम् अपवित्रतया अन्यायस्य, अनाचारस्य च दिशि प्रवर्तयति यतः स एवं मन्यते यदिमा वार्ता भगवतः प्रसादिका नहि सन्ति। इत्थं वासनानां तुमेदिशा परिवर्तिता जायते ता लोकसंग्रहस्य साधनानि च सम्पद्यन्ते। एतदर्थमेव कथितं जायते यत् शङ्करस्य गणाः प्रेताः पिशाचा वेताला ब्रह्मराक्षसाश्च सन्ति। अस्या वार्ताया दिशि तन्त्रग्रन्थेषु एषु शब्देषु संकेतः कृतो जायते यत् महिषमर्दिन्या असुराणां संहारः कृतः परन्तु सा पुनस्तान जीवयित्वा देवैः सार्धं स्वर्गे नीत्वोपावेशयत्।

य ईश्वरस्यानन्योपासको भवति तस्यैवं प्रतीत भवति यदीश्वरः सर्वदा सर्वत्र मम सार्धमस्ति। एतेन स प्रभूतेभ्यो दोषेभ्यस्त्रातो जायते अपि च संसारस्य कष्टानां हसन् खेलँश्च सहने समर्थो भवति। आत्मनः कर्मसु ईश्वरार्पणबुद्धिं नीत्वा तेषां संस्कारेभ्य आत्मानं त्रातुं शक्नोति यतो हि स स्वतन्त्रः कर्ता अभूत्वा ईश्वरचालितो निमित्त-मात्रं सम्पद्यते।

कदाचित् यदा मनुष्य अत्यार्तो भूत्वा ईश्वरमाकारयति तदा तस्यैवं प्रतीतं भवति यन्मदीयाऽऽकारणा श्रुता जाता। ईदृशमपि भवति यदीदृश्यां दशायां विपत्तिः दूरीभवति। यदा मनुष्यश्चिन्तायां पतितो जायते चतुर्दिशश्च निराशो भवति तदा तस्य चित्तवृत्तिर-न्तर्मुखीभूता जायते यतो हि बहिस्तु तस्य कश्चित् कश्चिदाश्रयो नहि मिलति। अस्यां दशायां तस्य जीवस्य जीवसमष्टेश्च मध्यस्थमाः यवनिकाः अल्पकालाय अपसरन्ति, बिन्दुः समुद्रे मिलितो भवति। तदा स जीवात्मा विराजोऽनन्तशक्तिभाण्डागारस्योपयोगं कर्तुं शक्नोति अथ चात्मनो विपत्तेरुपरि विजयं प्राप्नोति। चित्तस्य बाह्यभारः लघुको भवत्येव पुनः पार्थक्यं यथा तथा आयाति।

## (ख) देवोपासकः

प्रभूता लोका विभिन्नानां देवानां देवीनां चोपासनां कुर्वन्ति। ईदृशा लोका यद्या पारमार्थिक दृष्ट्याऽऽत्मन इष्टदेवं परमात्मानमथवा ब्रह्मणः अभिन्नं मन्येरन् परन्तूपास्य-दृष्ट्या तस्य पृथक्सत्तास्वीकारं कृत्वैवोपासना कृता भवति। एवं तु असंस्कृतबुद्धयः प्रेतादीनामपि पूजां कुर्वन्ति परन्तु साधारणतो ज्ञात्वा अज्ञात्वा वा केनचित् केनचिन्नाम्ना आजानदेवानामेवोपासना कृता भवति। आजानदेवास्ते जीवाः सन्ति ये आत्मनस्तपसो

योगाभ्यासस्य च बलेन इतरजीवेभ्यो परां वृद्धिं गताः सन्ति। तेऽपि शरीरधारिणः सन्ति परन्तु तेषां शरीराणि सूक्ष्मभूतेभ्यः संपन्नानि सन्ति, अतोऽस्माकं दृष्टिपथं नायान्ति। ते विश्वस्य सञ्चालनं कुर्वन्ति अपरं यथा ज्येष्ठो भ्राता कनिष्ठस्य भ्रातुश्चलनं शिक्षयति तथैव अपरेभ्यो जीवेभ्यो धर्ममोक्षमार्गोपरे साहाय्यं ददते। आजानदेवाः सदाऽऽस्मनः पदोपरि नहि तिष्ठन्ति। एको दूरीभवति, तावदपरो जीवस्तस्यां योग्यतायाम् उपतिष्ठते।

आजानदेवानामुपासकस्तत उपरि तु यातुं शक्नोत्येव नहि। अतः कथितमस्ति यद् देवोपासनातः सालोक्यस्य (तस्य देवस्य लोकस्य प्राप्तिः, तत्सदृशं शरीरं तच्छरीरानुकूलस्य ज्ञानस्य भोगस्य च प्राप्तिः] सायुज्यस्य [तस्य देवस्यायुःपर्यन्त तल्लोके स्थितिः] सार्ष्टयस्य च [तस्यदेवस्य तुल्यं शक्तिसम्पन्नतायाश्च] उपलब्धिर्भवेत् परमेतत् सर्वं मोक्षो नास्ति, नापीतो नानात्वस्य क्षामतऽऽप्ति। देवोपासकस्य विक्षेपः किञ्चित् क्षामो भवति तस्य चित्तमेकाग्रं भवति, तस्य जगतः सूक्ष्मस्तराणामनुभूतिर्भवति परन्तु समाधेरिमा भूमिकाः सर्वथा नानात्वस्य परिधेरभ्यन्तरे सन्ति। आजानदेवानामुपासनायामपि अनुरक्तेः, जपस्य, ध्यानस्य चक्रोपासनादेश्च प्रायस्तदेव स्थानमस्ति यदीश्वरोपासनायामस्ति।

## (ग) पौत्तलिकः, अपमार्गी च

ये लोकाः काथंचित्कीं प्रतिमाम् अन्यत् स्थूलं वस्तु वा उपास्यसर्वस्वं मन्यन्ते अथवा एवं सम्बुध्यन्ते यत् तेषामुपास्य एकदेशीयोऽस्ति अपि च तद् वस्तुप्रदेशमात्रे वर्तते ते पौत्तलिकाः सन्ति। अपरं ये लोका प्रेत-पिशाच- डाकिनीशयतानादीनां च पूजां कुर्वन्ति तेऽपमार्गिणः सन्ति। ईदृशा लोकाः सत्यात् अत्यन्त दूराः सन्ति। नानात्वनिगडबन्धनोन्मुक्तेस्तेषामिदानीं बहूनि जन्मान्यपेक्ष्यन्ते।

# ५ योगाधिकरणम्

योगस्य सम्बन्धेऽस्मिन् पुस्तके कतिपुचित् प्रसङ्गेषु किञ्चिन्नु किञ्चिल्लिखितमस्ति। इदानीं यदाहि अस्माकं जगत्स्वरूपविषयिका परीक्षा समाप्ता संजाताऽस्ति, प्रस्तुताध्यायस्य प्रकरणे योगाभ्यास सम्बन्धेऽपि द्वयोः शब्दयोः कथनमुचितं प्रतीतं भवति।

योगः काचन प्रातिहारिकस्य शाम्बरी माया नास्ति, यद्यपि सामान्य जनतासु

कश्चनेदृश एव भ्रमः स्फारितोऽस्ति अपरं च प्रभूतास्तथोक्तैर्योगिभिरस्या भ्रान्तेर्दृढीकरणे ज्ञानतोऽज्ञानतो वा पूर्णः प्रयत्नः क्रियते ।

नानात्वस्य प्रसारो जगतः प्रसवक्रमोऽस्ति, योगाभ्यासस्तस्य प्रतिप्रसवक्रमो वर्तते । शुद्ध ब्रह्मोपरि अविद्याकारणाद् याः यवनिकाः पतिताः सन्ति ता उत्तरोत्तरमपसार्य पुनः स्वरूपप्रतिष्ठायै योगी यतते, इदमेव तस्योद्देश्यमस्ति । यदा सोऽभ्यासे प्रथमं प्रवृत्तो भवति तदा तस्य विक्षिप्तं चित्तं पूर्णतया नानात्वस्य वीचौ भवति । यदाऽभ्यासो दृढो भवति तदा चित्तं विक्षिप्तं सदेकाग्रं भवितुमारभते । तस्या अवस्थाया नाम सवितर्कसमाधिरस्ति । अयं क्रमशः परिवृत्य निर्वितर्क-सविचारनिर्विचारावस्थासु परिणतो भवति । निर्विचारोपरि आनन्दास्मिते समाधी स्तः । अस्यां यात्रायां येऽनुभवा जीवस्य भवन्ति तेषां विवरणं नवा उचितमस्ति न वा सम्भवमस्ति । अभ्यासस्यारम्भे याऽवस्था वर्तते तया सह सर्वे लोकाः परिचिताः सन्ति; अन्तिमस्य अस्मिताख्यस्य समाधेः परिचयः कतिपुचित् स्थलेषु दत्तोऽस्ति । अस्मितासमाधेः पूर्णतावस्थायां चित्तं निरुद्धं संजायते, सकलानामावरणानां क्षयो भवति अपरं जीवात्मपरमात्मानौ द्वौ ब्रह्मणि लीयेते । एका अखण्डा अद्वया चिन्मयी ब्रह्मसत्ताऽवशिष्टा भवति ।

समाधिकालिकानुभवानां विस्तृतं विवरणं तु नहि दातुं शक्यते पुनरपि तद्विषये केचन संकेता कर्तुं शक्यन्ते । अभ्यासस्य किञ्चिद्दृढत्वे नानात्वं क्षामं भवितुमारभते । क्षितिरप्सु विलीना भवति अपरमनेनैव क्रमेण आपस्तेजसि तेजश्च वायौ विलीनं भवति । एतेन सार्धमेव क्रमात् गन्धरसरूपस्पर्श संविदोऽपि विलीना भवन्ति, आकाशमवशिष्यते, तस्मिन् विलीने शब्दस्यापि लोपो जायते । इत्थं भौतिकं जगत् अहंकारं समेति । अपरं चोपयोगाभावे अहंकारो मनइन्द्रियाणि चात्मनि संवृणुते । यदाभ्यासोऽधिकं गम्भीरो भवति तदाऽहंकारो बुद्धिगर्भे पुनः प्रयाति । अपरं चित्तं बुद्धिमात्रमवशिष्यते । बुद्धिः क्षुब्धचेतनायाः प्रथमं रूपम् अविद्यायाश्चान्तिमं दुर्गमस्ति । अस्य क्षयो झटिति नहि भवति । अविद्याऽस्मिते तौ द्वौ असुरबन्धू स्तः यौ शुम्भनिशुम्भनामभ्यां महासरस्वत्या सह युद्धं कृतवन्तौ । यथा हि सप्तशतीकारेण लिखितमस्ति अपरेषामसुराणां निधनस्य पश्चादपि इमौ द्वौ युध्यमानौ आस्ताम् । प्रभूतं कठिनं युद्धं कृत्वा कनीयान् भ्राता मारितोऽभवत् ततो ज्यायसो भ्रातुर्मृत्युरभूत् ।

वयं यावद् जगज्जानीमस्तस्मिन् जीवानां शरीराणि स्थूलानि चैतानि च भवन्ति परन्तु योगिनामीदृशानां जीवानां प्रत्यक्षं भवति येषां शरीराणि सूक्ष्मक्षितिमयानि अतेजो-

वायुमयानि च सन्ति। इतोऽप्युपरि ते जीवाः सन्ति ये शुद्धकारणशरीरिणः सन्ति, येषामुपरि केवलं बुद्ध्यहंकारयोरावरणमस्ति, भिन्नप्रकारकशरीरैः सार्धं स्वभावतो ज्ञानादि शक्तिष्वपि भेदो भवति। इयमेव वार्ता एवं कथ्यते यद् योगी अस्माद् भूलोकादुपरि भुवः स्वरादिलोकेषु याति। अत्र उपरिनीचैः शब्दप्रयोगः सूक्ष्मता-दृष्ट्या कृतो जायते, दिशानिर्देशस्य कृते नहि। वस्तुतः सर्वे लोकाः परस्परमोताप्रोताः सन्ति। उपरिलोकनिवासिनोऽपि जीवाः सन्ति, तेऽपि कदाचिन्मनुष्या आसन्, तेषां मध्यादपि प्रभूताः पुनर्मनुष्या भविष्यन्ति। जीवाद् जीवे कश्चन जातिभेदो नास्ति। ये उपरि सन्ति ते आत्मनस्तपोयोगोपासनाबलाद् उत्थिताः सन्ति। तेषामस्माकं जीवनोपरि प्रभावः पतति, अस्माकं तेभ्यः सहायता मिलति। एतेन सहैव अस्माकं जीवनस्य, अस्माकं सुखदुःखयोः, पुण्यपापयोश्च तेषामुपर्यपि स्तोकः प्रभूतो वा प्रभावः पतेदेव।

एतत्संबन्धे शिक्षिताशिक्षितेषु सर्वेष्वपि विवादस्तिष्ठति यद् देवादीनामस्तित्वमस्ति न वा। अस्य निर्णयस्तर्केण कर्तुं न शक्यते। योगी एतत्सम्बन्धे कस्यचित् शास्त्रस्य विदुषो वा व्यवस्थाया अपेक्षां न करोति। स इमां वार्तां जानाति यतस्तस्य आसां स्वयं प्रत्यक्षं जातमस्ति।

योगिनः कृते नानात्वस्य यः संकोचो भवति स आत्यन्तिको भवति। समाधेरवतरणोपरि तस्य पुनर्बाह्यजगतः प्रतीतिर्भवति परन्तु एतत्प्रतीतिपूर्वप्रतीत्योर्बृहदन्तरमस्ति। यश्चक्षुष्वा रज्जुं दृष्टवान् स तस्याः कुण्डलाकृतेर्न बिभेति। यत् शरीरं सम्पन्नं जातमस्ति तद् याव-दायुश्चलिष्यति, कर्माण्यपि भविष्यन्ति, परन्तु नवाः संस्कारा नहि सम्पद्यन्ते। योऽधुना समाधेः पूर्णभूमिकानां पारं नहि गतवानस्ति तत्कृते तु लोकान्तरप्राप्तेः प्रश्नोऽपि उत्तिष्ठति परन्तु यः पूर्णयोगी अस्ति स क्व यास्यति ? स तु देशकालयोरतिक्रमणं कृतवानस्ति, अवि-द्याया बहिर्निष्क्रीर्णवानस्ति। शरीरात् प्रयाणकाले एव स निर्विकल्पकसमाधिं प्राप्नोति। स समाधिं प्राप्नोतीति एतत्कथनमपि न युक्तमस्ति परन्तु भाषायाः शक्तिः सीमिताऽस्ति। ब्रह्मासीत्, ब्रह्म अस्ति, ब्रह्मावशिष्यते।

समाधेः सुषुप्तिमहाप्रलयाभ्यां महदन्तरमस्ति। एकतस्तु तास्ववस्थासु नानात्वस्य निरसनमात्यन्तिकं न भवति; अपरतः, नानात्वस्य लोपेन सार्धम् एकत्वस्योदयो नहि भवति। सुषुप्तौ जीवस्योपकरणानि शक्तिहीनानि जायन्ते। शरीरे शिथिले जाते नाडीषु प्राणसञ्चारेण नहि भवितव्यम्, इन्द्रियाणि व्यर्थानि संजायन्ते, अन्तःकरणस्य कापि सामग्री नहि मिलति। नानात्वं विलीनं नहि भवति, अविद्या नाशा नहि भवति, नानात्वस्योपरि स्थूला यवनिकेव

पतिता जायते। एतया सदृशी अवस्था महाप्रलये भवति। द्वयोरवस्थयोः प्रणाशे जीवो यत्र पूर्वमासीत् तत एव नवं जीवनमारभते। योगिनं किञ्चिदप्युपकरणं नहि त्यजति। यावत्पर्यन्तमिन्द्रियाणां गतिरस्ति तावत् तानि ससंरम्भं स्वशक्तीः सम्यगुपयुञ्जते। भेदोऽयमस्ति यदिदानीं तानि अल्पं कर्म कुर्वन्ति तदपि भोगस्य कृते; तदा प्रभूतं कर्म कुर्वन्ति शुद्धज्ञानस्य कृते। इन्द्रियेष्ववरूद्धेष्वपि सत्सु योगिनश्चित्तं कर्म चेष्टायते। विक्षेपे नष्टे तत् विषयस्यान्तस्तमं यावत् याति, अथ च तस्यामेवावस्थायां शान्तं भवति यदा तस्य ज्ञानस्य योग्यं किञ्चिद् नहि अवशिष्यते। अतो योगी समाधेरवतरणे नवेन ज्ञानेन नवया शक्त्या च सम्पन्नो भूत्वाऽऽयातिः

योगस्याभ्यासः सदा कल्याणकारी भवति। यो योगभ्रष्टो भवति अर्थात् अस्मिन् शरीरे पूर्णपदं यावत् नोपतिष्ठते सोऽप्यन्योपासकापेक्षया साध्वीं गतिं प्राप्तो भवति। भविष्यजन्मनीदृशा एव मनुष्या उच्चाः कलाकाराः प्रतिभावन्तो विचारकास्तथा सफलाः साधकाश्च भवन्ति। पुरस्तनी क्षमता इदानीं पूर्णीभूता जायते।

योगस्य पुस्तकेषु अस्या वार्ताया उल्लेखोऽस्ति। अपरं जनश्रुतिरीदृशोल्लेखस्य समर्थनं करोति यद् योगाभ्यासतः कतिविधा असाधारणशक्तयो जागरिता जायन्ते। एताः सिद्धयो विभूतयो वा कथ्यन्ते। अज्ञानबन्धनस्य श्लथीभावे, चित्तैकाग्रताया वर्धनेन अपरम् इन्द्रियाणां शरीरबन्धनात् मुक्तौ च शक्तीनां प्राप्तिलाभः अथवैवं यत् लुपितानां शक्तीनां पुनर्लाभश्च स्वाभाविकोऽस्ति। शक्तेरप्राप्तिराश्चर्यस्य वार्ता भवेत्। योगाभ्यासात् सिद्धिप्राप्तिरनिवार्याऽस्ति परन्तु सिद्धेरुपरि ध्यानं अभ्यासस्योन्नतौ बाधकं भवेत्।

योगाधिकारे वर्णजातिपाण्डित्यसंप्रदायानां स्त्रियाः पुरुषस्य वा भेदो न भवति। यस्मिन् वैराग्यमस्ति, यस्य चित्तं स्वाध्यायेन, सत्सङ्गेन, ईश्वरोपासनया लोकसंग्रहात्मककर्मणामनुष्ठानेन च शुद्धमस्ति, यस्मिन्ननुत्तरं प्रेम तन्मयता चास्ति, योऽस्यां राजविद्यायां श्रद्धावानोऽस्ति तत्कृतेऽस्या द्वारं सदा अनावृतमस्ति। स्यादेतत्, द्वे वार्ते अपरे चापेक्ष्येते। प्रथमावार्ताऽस्ति तपः— तामसं तपो नहि, किन्तु शास्त्रचोदितं तपः, यत् शरीरस्य चित्तस्य च कषायान् दूरी करोति। द्वितीयं परमावश्यकं वस्तु सद्गुरुनिष्ठाऽस्ति। यः संशयोच्छेदने समर्थो नास्ति तस्माद् गुरोः कार्यसिद्धिः कठिनास्ति परन्तु यश्चाऽभ्यासी नास्ति स त्वन्धो यस्याङ्गुलिं ग्रहिष्यति तमात्मना सह ब्रोडयिष्यति। यः शिष्यादुपकारस्यार्थी नास्ति ब्रह्मनिष्ठश्चास्ति स गुरुर्भवितं योग्योऽस्ति। यदि स युगपद् श्रोत्रियोऽप्यस्ति तर्हि स्वर्णे सुगन्धो

मन्तव्यः। ईदृशो देशिको भाग्येन मिलति। स ईश्वरवत् पूज्योऽस्ति। तस्य सेवया, तस्य तृप्त्या च निखिलविश्वस्य तृप्तिर्भवति। य आत्मानं तस्य हस्ते समर्पयिष्यति स निःसन्देहं सद्गतेर्भाजनं भविष्यति। सद्गुरोः प्रसादस्त्वमृतमस्त्येव, तस्य रोषोऽपि आशीर्वादस्य सामर्थ्यं दधाति। ब्रह्मविद्याया निष्क्रयो नहि भवेत्। यथाहि छान्दोग्योपनिषदि कथितमस्ति, धनपूर्णा ससागरा वसुन्धराऽपि अस्य तुल्यं नहि भवितुं शक्नोति।

योगिजना इमां विद्यां सदा गुप्तामकार्षीत्। अत्र तस्य कश्चन स्वार्थो नास्ति। सतु निधिं लोठयितुं प्रस्तुतोऽस्ति परन्तु ग्रहीतैव न मिलति। कुपात्रस्य हस्ते प्रक्षेपेण विद्याया अनादरो भवति, सा हतवीर्या संजायते, अपरं तस्या व्यक्तेः कश्चन लाभोऽपि नहि भवेत्। इदं निश्चितमस्ति यद् यो दीपकः अद्यावधि नहि निर्वातः सोऽग्रेऽपि जाज्वलिष्यत एव।

सत्पात्रस्य कृते किञ्चिदपि गोप्यं नास्ति। स गुरोर्हृदयं प्रविश्य विद्यामधिगच्छति। य ईदृशीं योग्यतां रक्षति स धन्योऽस्ति। तस्मै विद्या सद्यः फलवती भविष्यति। दर्शनसमकालमेव अक्ष्णां समक्षतो ऽविद्यायास्तमिस्रा अपसरिष्यति अथ च स्वरूपख्यातेरादित्य उदेष्यति।

यथा योगाधिकारे वर्णादीनां किञ्चिद् बन्धनं नास्ति तथैव वयसोऽपि कश्चन नियमो नास्ति। शरीरेण भारस्तु वहनीयो नास्ति चित्तं संयमनीयमस्ति। यस्मिन् कस्मिन् वयसि वैराग्यस्योदयो भवेत्, सद्गुरोः सम्बन्धो भवेद् तस्मिन्नेव वयसि अभ्यास आरब्धुं शक्येत। यदि आत्मनः संवेगः पूर्णो भवेत् तदा पूर्णा सफलताऽपि लभ्येत। परन्तु यो मनुष्य इदं कर्म वृद्धावस्थायाः कृते स्थगयति स भ्राम्यति। सत्यं त्विदमस्ति यद् य उपरिष्टात् स्थगनस्य वार्तां विचारयेत् स पात्रमेव नास्ति। सत्पात्रस्य तु ईदृशी व्याकुलता भवति यद् एकैकघटिकायाः स्थगनं भारवत् प्रतीयते। एतावदपरं स्मर्तव्यम् यत् सर्वेषां सत्कर्मणां कृते युवावस्था साधीयान् कालोऽस्ति। तस्य क्षपणं महती विनष्टिरस्ति।

---

# धर्म खण्डम्

## प्रथमोऽध्यायः

### धर्मः

प्रथमखण्डस्य प्रथमाध्यायस्य दिशि प्रत्यावर्ततां भवान्। पुरुषार्थानां विवेचनं कुर्वद्भिरस्माभिस्तत्र दृष्टमस्ति यद् धर्मस्य पालनेन व्यक्तेः समाजस्य च सुखेन अर्थकाम-निर्वृत्तिर्भवेत् अपरं जगतः स्वरूपस्य परिचयेन धर्मस्य पालनं भवेत्। जगतः स्वरूपस्य परिचयस्य कृत एवास्माभिर्दीर्घा दार्शनिकी यात्रा कर्तुं पतिताऽऽसीत्।

सा यात्राऽधुना समाप्तिं गता। जगत् संबुद्धमभवत् अपरमेवं मननीयं यत् सत्यो जिज्ञासुः केवलं तर्कस्य साहाय्येन नोपविष्टो भवेत् परं तेन निदिध्यासनस्याप्यभ्यासः कृतो भवेत्। केवलं तर्कः शास्त्रमूलकं ज्ञानं वा बालुकाया भित्तिरस्ति। तस्य कोऽपि विश्वासो नास्ति।

अस्तु, यदुद्देश्येन दर्शनाध्ययनारम्भः कृत आसीत् तत् पूर्णं जातम्। इदानीमस्मा-भिर्दर्शनीयमिदमस्ति यद् अस्यानुशीलनस्य पिण्डितार्थेन धर्मस्य विषये कः प्रकाशो मिलति।

# १ योगिमर्यादाधिकरणम्

इयं वार्ता त्वस्माभिः प्रथममेव सम्बोधनीयाऽस्ति यदस्माभिर्धर्मस्य किमपि स्वरूपं स्थिरीकृतं भवेत् अपरं तत्सम्बन्धे कोऽपि नियमः स्थापितः स्यात् परन्तु यो ब्रह्मज्ञोऽस्ति तस्यकृते आसां वार्तानां योजनीयता नहि भवितुं शक्नुयात् । यो द्वैतबुद्धेरुपरि उत्थितोऽस्ति तस्य कृते अर्थकामयोः काम्यता नष्टा संजाताऽस्ति; स यदृच्छालाभमात्रेण संतुष्टो भवति अपरा वार्तेयमस्ति यद् यस्य कृते अहं-पर इत्यनयोर्भेदो मृतः संजातोऽस्ति तस्य कृते ऋण-परिशोधयोः प्रश्नो नहि उत्तिष्ठति । तस्य कृते कर्त्तव्याकर्त्तव्ययोर्विधिनिषेधयोश्च किमपि बन्धनं नहि भवेत् । धर्म संबन्धीयः शास्त्रीयविचारस्तद् व्यक्तेः कृतेऽपि निरर्थकोऽस्ति यः पूर्णो योगीश्वरोऽ सन्नपि उच्चकोटिकोऽभ्यासी अस्ति ।

एतत्कथनस्य तात्पर्यमिदं नास्ति यद् आत्मज्ञानिनो योगिनश्चाचरणमीदृशं भवति यदुच्छृङ्खलं कथयितुं शक्येत । वार्ता इयत्यस्ति यत् तौ किमपि कर्म एतदर्थं नहि कुरुत यत् तत् धर्मः सदाचारो वा मतो जायेत; तौ यत् किञ्चित् कुरुतः तदेव धर्मः सदाचारश्चास्ति । तौ आत्मनो निर्बाधदृष्ट्या कर्मणः परिणामं सम्बोद्धुं शक्नुतः अपरमिदं ज्ञातुं यद् लोकानां कल्याणं वस्तुतः कस्यां वार्तायामस्ति । साधारणमनुष्यस्य बुद्धिरियद्दूरं नहि याति, स आगामिवार्ताम् अत्यल्पं चिन्त्येत् । अपरं पुनर्लोकाचारस्य परित्यागस्तस्य कृते कठिनो भवति । एतदर्थं महापुरुषाणामाचारान् स यदा कदा सशङ्कदृष्ट्या पश्यति ।

योगिजनो जानाति यत् साधारणो मनुष्यस्तज्ज्ञानं यावत् उपस्थातुमसमर्थो बोभूयमानोऽपि तेषामाचरणानामनुकरणं कर्तुं शक्नोति । इदमनुकरणं तस्य कृते हानिकरं भवेत् । एतदर्थं ते स्वयम् आत्मनाम् उपरि बन्धनं स्थापयन्ति अपरं तथा व्यवहरन्ति यद्धि ते देशकालयोर्ध्यानं रक्षन्तो लोकहितकरं सम्बुध्यन्ते । तेषां कृते काऽपि मर्यादा नास्ति परन्तु ते आत्मानो मर्यादाभ्यन्तरे रक्षन्ति यथाहि मर्यादोच्छिन्ना माभूत् । परिवर्तनशीले जगति धर्मस्यैकैव मर्यादा नहि स्थिरीकर्तुं शक्यते । धर्मसाक्षात्कर्ता योगी इमां वार्तां जानाति अपरं समये समये नवां मर्यादां स्थापयति । स यं धर्मं कथयति स एव धर्मोऽस्ति । योगी शास्त्राणि नहि पठति शास्त्रं योगिनो वचनानां निरुक्तिं करोति ।

लोकानुग्रहभावेन योगिजन आत्मानं कर्मक्षेत्रे आनयति । अपि च यानि बन्धनानि लोकस्य कृते श्रेयस्कराणि जानाति तेषामात्मार्थमप्यङ्गीकारं करोति । पुराण्या मर्यादाया

भञ्जनं यदा कदाऽऽवश्यकं भवति, परन्तु तत्स्थाने नवाया मर्यादायाः स्थापनं सर्वेषां कर्त्तव्यं नास्ति । यदि इदं कर्म स्वार्थप्रेरितलौकिकबुद्धेः करणीयं स्यात् तदा महतोऽनर्थस्य सम्भावना भवेत् ।

# २ धर्म स्वरुपाधिकरणम्

कर्त्तव्यस्य परिचयनं तस्य पालनं च धर्मोऽस्ति परन्तु कर्त्तव्यस्य परिचयनम् अत्यन्तं कठिनमस्ति तस्य पालनं च ततोऽपि दुष्करमस्ति । एतत्सम्बन्धे एकोऽपरः प्रश्न उत्तिष्ठति । अभ्युपगम्यताम् यदहं कर्त्तव्यं परिचिनोमि तस्य पालनस्य सामर्थ्यमपि मय्यस्ति परन्तु कर्त्तव्यस्य दिशि ध्यानं किमर्थं दद्याम्, तस्य पालनं कथं कुर्याम् ? कर्त्तव्यस्य पालनं सदाचारः कथ्यते, अतोऽस्य प्रश्नस्य रूपमिदं जातं यत् अहं सदाचारी किमर्थं सम्पन्नः स्याम् ? साधारणत इयं वार्ता युक्ताऽस्ति यत् मनुष्यस्यार्थकामयोः सिद्धिः समाजे वसत एव साध्वी भवेत् अपरं च सामाजिकं जीवनं तदैव निर्वहेत् यदा लोकाः सदाचारिणो भवेयुः । दुराचारिणा आत्मनो दुराचारेण योऽल्पो लाभः प्राप्यते सोऽप्येतदर्थं यद् अधिकांशा मनुष्याः सदाचारिणः सन्ति । यदि सर्वे मृषा वदितुं प्रवर्तेरन्, सर्वे चौर्यं कर्तुं लग्नाः स्युः, सर्वे परदारगामिनः सम्पन्ना जायेरन् , तदा समाज उत्सन्नो भविष्यति, सर्वे च लोका अर्थं कामं च नाशयिष्यन्ति । एतत्सर्वं यथार्थमस्ति परन्तु इमा वार्ताः साधारणमनुष्यस्य कृते एव संघटेत । यद्यहं बलवान् सम्राट् अधिनायको वा स्याम् तथा आत्मनः शस्त्रबलेन यदिच्छेयं प्राप्नुयां तर्हि पुनर्ममार्थकामयोः कृते सदाचारस्य काऽपेक्षा भविष्यति ? लोकमतं विरूद्धं सत् कामपि क्षतिं नहि कर्तुं शक्नुयात् । अत इदं विचारणीयमस्ति यत् सदाचारस्याधार अर्थ कामयोः प्राप्तेस्तदुपरि अवलम्बितत्वमेवास्ति अपरं वा किञ्चित् ।

सदाचारस्य निरुक्तिर्द्विधा भवेत्: सन् आचारः सतां लोकानां वाचारः । परम् सतां लोकानां तु इयमेव परीक्षाऽस्ति यत् तेषा समाचरणं सद् भवति । यः सदाचरणं करोति स सन्नस्ति । अत उभयतः सदाचारस्यार्थः सन्नाचार एव भवति । यादृशमाचरणं भवेद् यदि तादृशं भवति तर्हि वयम् सत् शब्दप्रयोगं कुर्मः । अतः सदाचारः स आचारोऽस्ति यः करणीयोऽस्ति । कर्त्तव्यस्याप्ययमेवार्थोऽस्ति ।

आचारशास्त्रोपरि बहूनि विद्वत्तापूर्णानि पुस्तकानि लिखितानि सन्ति । एषु कर्त्तव्यस्वरूपविषये विभिन्नमतानां प्रतिपादनं कृतमस्ति । नयभेदेन सर्वेषु मतेषु किञ्चित्

किञ्चित्तथ्यमस्ति अपरं च व्यवहारे तेभ्य एव सर्वेभ्यः न्यूना अधिका वा सहायता लभ्यते। परन्तु सर्वत्र क्वचन नु क्वचन बाधाऽऽपतति अपरमियं बाधा तस्मिन्नेवासरे आयाति यदास्माकं प्रकाशस्य सर्वतोऽधिकाऽऽवश्यकता भवति। साधारणतोऽस्माकमेतद् विवेचनस्यावश्यकतैव नहि प्रतीयते यदस्मिन् समये किंकर्त्तव्यमस्ति । लोकाचारो मार्गं दर्शयति। शिक्षासंस्कृतिश्च बुद्धिमीदृशं रूपंदत्तवत्यावास्तां यत्तस्यै परिस्थितिविशेषे एकमेव कर्म साधु रोचते। तदर्थमेवान्तःप्रेरणा भवति। अन्तः प्रेरणायास्तदेव स्वरूपमस्ति यत् कर्त्तव्यशब्दघटक तव्यप्रत्ययेन व्यक्तं भवति । तस्मिन्नयं भावो नहि भवति यत् लोका एवं कुर्वन्ति, अयमपि भावो नहि भवति यदेवंकरणेन अमुकोऽमुको लाभो भविष्यति। तस्य तु रूपं भवति "कर्तुं युज्यते" परमिदं कथनं यथायथं भविष्यति यत् तस्य रूपं भवति "कुरु"। कश्चन तर्को नास्ति, हेतु र्नास्ति, यथाऽऽभ्यन्तरतः कश्चनाङ्कुशोऽस्ति यदास्ताम्, ऐतन्मार्गोपरि वर्ततास् । कश्चनैतद् ईश्वरस्य प्रेरणं कथयितुं शक्नुयात् परन्तु इदंमनुचितं प्रतीयते । सर्वेषां कर्त्तव्यस्यैकविधा प्रतीतिर्नहि भवति। ईश्वरः सर्वेषां कृते एकामेव प्रेरणां कुर्वन् नहि प्रतीतो भवति । दर्शनेनैतत् वदितं भवति यद् अन्तःप्रेरणाया भेदः कियांस्तु तस्या शिक्षाया उपरि या तद् व्यक्त्या प्राप्ताऽस्ति, अपरं तस्याःसंस्कृतेरुपरि यस्यां स पालितोऽस्ति निर्भरं करोति, अपरं कियांस्तस्य स्वभावस्य, तस्य सहजगुणस्य,तस्य व्यक्तित्वस्य चोपरि निर्भरोऽस्ति।

यथाहि मयाऽधुना एव कथितमस्ति, कर्त्तव्यबुद्धेः शुद्धं रूप त्वस्ति "कुरु" । पश्चादुपविश्य विचारेण एतदाभ्यन्तराज्ञापक्षे बहवो हेतवो अन्विष्टा भवन्ति, परन्तु यदा कर्त्तव्यबुद्धेरुदयो भवति तदा एते हेतवो नहि उपस्थिता भवन्ति। कर्त्तव्यबुद्धेरुदयः क्रिया च प्रायो युगपद् भवतः । कश्चन निमज्जन्तं दृष्ट्वा जले कूर्दने यद्वा ज्वलन्तं दृष्ट्वा अग्नौ वा कूर्दने तर्कों नहि क्रियते । यस्य कर्त्तव्यबुद्धिः स्फुरिता भवति स कर्म सम्पादयति, यस्य न भवति स तर्कं कुर्वन्नेव तिष्ठति । सोऽपि दयालुः सज्जनश्च भवेत्, साधारणव्यवहारे लोकास्तं सत्यवादिनं; धार्मिकं कृपालुं च बुध्येरन् परन्तु तस्य कर्त्तव्यबुद्धिस्तदा दुर्बलाऽऽसीत्।

एतानि तु ईदृशानां कर्मणामुदाहरणानि सन्ति यानि सद्यः कार्याणि सन्ति। कियन्तीदृशानि कर्माणि भवन्ति यानि कालसाध्यानि भवन्ति, चिरेण पूर्णानि भवन्ति। तद्विषयेऽपि इयमेव वार्ता संघटते। परिस्थितेः सम्बोधने चिरं लभेत् परन्तु तस्याः सम्बोधोपरि कर्त्तव्यबुद्धेरन्तःप्रेरणायाश्च तत्काल उदयो भवति । इयमपरा वार्तास्ति यत् समये लब्धे वयं तां बहुभिर्हेतुभिः पुष्टां कुर्मः।

करणीयकर्मणामिदमेव बाह्यं लिङ्गमस्तियत् तेषां नोदिका याऽन्तः प्रेरणा भवति साऽ अहैतुकी भवति अपरं तस्यां पर्य्यायस्य-इदं तद् वा–कृते स्थानं न भवति। परन्तु केवलमनेनैव लिङ्गेन कर्म वस्तुतः सदाचारो नहि जायते। ईदृशी अन्तःप्रेरणा अवलिप्तस्यापि बोभूयते। अस्या आवेशे लोका हिंसामपि कुर्वन्ति।

करणीयकर्मणां, धर्मस्यैकमपरं लिङ्गमस्ति यदतिव्याप्तिदोषोन्मुक्तमस्ति। तदेकस्मिन् शब्दे तादात्म्यंमिति कथयितुं शक्यते। तादात्म्यस्य स्थूलोऽर्थोऽयमस्ति यत् कर्ता कर्मपात्राद्-भिन्नीभूतो जायते। अयमर्थः युक्तोऽस्ति परन्तु अस्मिन् प्रसङ्गेऽपूर्णोऽस्ति, अतः स्थूलः कथ्यते। पत्युः पत्न्याश्च प्रेम्णयपि तादात्म्यं भवेत्; माताऽऽत्मनः सन्तानेन सह तादात्म्य-स्यानुभवं करोति। परन्तु एपूदाहरणेषु यत्रैकेन सह तादात्म्यं भवति तत्रापरैः सार्धम् आनात्म्यस्यापि युगपद् व्यक्ततयाऽ व्यक्ततया वाऽनुभवो भवति। 'अयं मम, ममैवास्ति, अहमस्यं, अस्यैवास्मि, द्वितीयः कश्चन आवयोर्द्वयो मध्ये नहि आयायात्'–अस्य तादात्म्यस्येदं रूपं भवति। आत्मनोऽहन्ताया इयान् विस्तारो जायते यत् सा अपरा व्यक्तिस्तस्मिन् सन्निविष्टा भवति अपरं सा विस्तृताऽहन्ता समुचितस्य जगतः प्रतिबलतां कर्तुं प्रस्तुता संजायते। आत्मनः परकीयस्य च पार्थक्यं सम्पन्नं भवति। अस्य तादात्म्यस्य मूलं भोक्तृ-भोग्य-भावोऽस्ति। कर्मपात्रेणात्मनः कस्याश्चिद् वासनायास्तृ-प्तिर्भवति, तेनात्मनः काचिदव्यक्ता बुभुक्षा मृष्टति, किञ्चिद् रिक्तं स्थानं भरितमिव संजायते।

परन्त्वेकं तादात्म्यमित उच्चं भवति। तस्मिन्नेकेन तादात्म्यं भवति परं केनचिद् अपरेण आनात्म्यं न भवति। आत्मनः परकीयस्य च भेदो मृष्टो जायते अपरम् आत्म-नोऽहन्ता कर्मपात्रस्याहन्तायां सन्निविष्टा संजायते। कंचन रक्षितुं ज्वलिते गृहे कूर्दक आत्मानं विस्मरति, तत्कृते तदा केवलं स आपन्नः प्राणी अस्ति। तत्र भोगस्य कश्चन प्रश्नो नोत्तिष्ठति, अयं मम, अहमस्य, इति भावो न भवति अहमिमं रक्षेयम्, अथवा मयाऽसौ रक्ष्य, इति वार्ता नहि चिन्त्यते। तस्य वेदना आत्मनो वेदनति बोभूयते। योऽग्निना स्वयम् आवृतो जायते आत्मनो रक्षणं संकल्पपूर्वकं तर्कपूर्वकं वा न चेकीयते। यथावत् इत्थं स मनुष्यो यस्मिन् कर्त्तव्यताबुद्धिरुदिता भवति अपरस्य रक्षणाय प्रतिज्ञां तर्कं वा नहि करोति। तस्मिन् क्षणे तस्य कृते अहन्ता, तत्तयोर्मध्यस्था भित्तिः, पतिता जायते।

सत्कर्मणः, सदाचारस्य, धर्मस्य चेदमेव लक्षणमस्ति यत् तस्मिन् क्षणमात्रस्य कृते

देहवानयोः ता यवनिका या एकं जीवमपरस्माद् जीवात् पृथक् कृतवत्यः सन्ति उत्थिता भवन्ति, नानात्वस्य प्रायो लोपो जायते, अभेदस्य साक्षात्कारो भवति । स क्षणिकः समाधिरस्ति । य ईदृशं कर्म करोति स सत्पुरुषः, धर्मात्माऽस्ति । अन्यत्र सदाचारसदाचारिणोः धर्मधर्मात्मनोः शब्दयोः प्रयोग औपचारिकोऽस्ति ।

अविद्याकृतनानात्वस्य दूरीभावेन, आत्मनः स्वरूपे तेष्ठियमानतया योगिनो याऽपूर्वाऽऽनन्दरूपाऽनुभूतिः समाधौ भवति तस्य एवानुभवः सत्पुरुषस्य तस्मिन् क्षणे भवति यदा स धर्मे लग्नो भवति परन्तु ईदृशोऽनुभवः चिरकालं नहि तिष्ठति अतः अविद्यया आत्यन्तिको नाशो नहि भवेत् ।

यो मनुष्योऽविद्यायाः पारं गतवानस्ति, यस्य कृते नानात्वस्य क्षयः संजातोऽस्ति, तस्यावस्था कर्मदृष्ट्या धर्ममेघः कथ्यते । वारिदः संकल्पं कृत्वा परिणामानां विचारं कृत्वा च नहि वर्षति । वर्षणं तस्य स्वभावोऽस्ति । इत्थमात्मज्ञानी मनुष्यो यत्किञ्चित् करोति तद् अनायासेनैव धर्मो भवति तस्याचरणे सत्याहिंसाऽस्तेयदयासहिष्णुताप्रसादादिकं दृष्ट्वाऽश्चर्यस्य स्थलं नास्ति । अपरं भवेदपि किम् ? यो भोगवासनां जितवानस्ति अपरम् एकत्वानुभूतौ निष्णातोऽस्ति स केन सह मिथ्या वदेत ? कस्योत्पीडनं कुर्यात् ? कस्य सम्पत्तेरपहरणं कुर्यात्, कस्या वार्तायाः शोकं कुर्यात् ? यीशुना सदाचारस्य इदं लक्षणं यद् अपरेण साकम् आत्मवद् व्योहारः कर्त्तव्यः । इदं लक्षणं तावापर्यन्तमपूर्णमस्ति यावदिदं न ज्ञायते यदात्मनः परस्य च भेदः कल्पितोऽस्ति सा अपरा व्यक्तिरपि त्वमेवासि । अपरेण सह आत्मसदृशं व्योहारं कुरु, इत्यस्यार्थोऽस्ति आत्मना सह आत्मवद् व्योहारं कुरु, इति ।

धर्मोऽनया दृष्ट्या सार्वभौमोऽस्ति यद् यत्कर्म अभेदबुद्धेरुत्पादकमस्ति तत् सदा, सर्वत्र सर्वस्य कृते कर्त्तव्यमस्ति । यदि स केवलं भोगस्य साधको भवेत् तर्हि सार्वभौमो न भवेत् । वास्तविकी वार्त्तेयमस्ति यद् धर्मः सहानुभूतिद्वारा जीवायात्मनः स्वरुपस्यैका माभां दर्शयति । आत्मनः स्वरुपे स्थितिः सर्वेषामभीष्टा भवेत् परन्तु यदि कस्यचिद् बुद्धिः इमां वार्तां न स्वीकरोति तर्हि स मनुष्यो धर्मस्य सार्वभौमतां नहि कुर्यात् । धर्मस्तस्वीजाय बलिमतेव प्रतीयेत यतो हि भेददर्शनमेव तस्य जीवनस्य कुञ्चिकाऽस्ति ।

# ३ धर्माभ्यासाधिकरणम्

गतेऽधिकरणे धर्मस्य तात्विकी मीमांसा कृताऽस्ति परन्तु व्यवहारे मीमांसा कथमुपयुज्येत ? अस्माकमभेदर्शनस्यावसरप्रदानाय न वा लोका जले निमज्जयन्ति न तु अग्नौ धक्ष्यन्ते; इदमपि सम्भवेत् यद् ईदृशोऽवसर आगतोऽपि स्यात् तर्हि अस्माकमभ्यन्तरे कर्त्तव्यबुद्धिरुदिता न भवेत् अपरं वयं दराडायमाना मौखिकसमवेदनां दर्शयन्तः स्याम ।

जले ब्रुडन्तो नित्यं नहि लभ्यन्ते परन्तु दैन्यदुःखदौर्बल्याज्ञानोदाहरणानि नित्यं दृश्यन्ते । कियदप्युन्नतः समाजो भवतु सोऽधिकमुन्नतः सम्पादयितुं शक्यते । अस्मिन् कर्मणि सर्वेषां कृते स्थानमस्ति । सर्वेषां शक्तियोग्यता नैकसमे नहि भवतः । कश्चन एकदैव रोगिणः सेवां कुर्यात् कश्चन पुस्तकं लिखेत्, कश्चन प्रवचनद्वारा लोकानां बुद्धिं संस्कर्तुं शक्नुयात् । समाजस्यैषां सर्वेषां लोकानामामावश्यकताऽस्ति । एषां मध्ये प्रत्येकं कर्म समाज जीवनं पुष्टं सुखमयं च सम्पादयन्ति । एवं भूतानि कर्माणि लोकसंग्रहं कथ्यन्ते। शुद्धभावेन कृते लोकसंग्रहो व्यावहारिको धर्मोऽस्ति ।

पूर्णतया शुद्धस्त्वभेदभावोऽस्ति परन्तु सुकरोऽयं नास्ति। पुनरपि यावदेवाभेदभाव आत्मनः कर्मसु आनेतुं शक्येत तावदेव कर्म धर्मपदवाच्यं भवेत् । यो धर्मस्याचरणं कर्तुं वाञ्छति स आत्मनो विषये सावधानो भवेत् । वारं वारमस्या वार्ताया उपरि दृष्टिर्देया येन आत्मनः स्वार्थस्य लाभस्य च विचारो नायायात् । आत्मनो बुद्धिर्यावदेव निष्कामा सम्पादयितुं शक्येत तावदेव धर्मस्याचरणंभवेत् । कर्मणः पात्रं यावदेव विशालं भवति बुद्धौ तावत्येव निष्कामता वर्धेत । एकस्यापेक्षया कुटुम्बस्य कुटुम्बापेक्षया वर्गस्य, वर्गापेक्षया राष्ट्रस्य, राष्ट्रापेक्षया मानवसमाजस्य, मानवसमाजपेक्षया विराजः, अर्थात् प्राणिमात्रसमष्टे र्विशालताऽस्ति । एषां मध्यात् कस्याप्युत्तरवर्तिनः सेवाया आत्मनो लघुत्वेन पूर्ववर्तिनां सेवापेक्षया बुद्धिर्निर्मला, निः स्वार्था, निष्कामा च भवति । सेवा क्षुद्रस्यापि भविष्यति परन्तु महतां सेवायाः साधनस्वरूपे ।

निष्कामं कर्म भोगाय नहि क्रियते अतस्तत् सुखदुःखाभ्यां परं भवति । निष्कामतः पूर्णमभेददर्शनं माभूत् तथापि तस्य निकटेऽस्ति, अतो निष्कामकर्मकरणेऽपूर्व एक उल्ला

सो जायते यमसफलताऽभिभवितुँ नहि शक्नोति। भोगमूलकत्वाभावान्निष्कामं कर्म चित्तोपरि कुसंस्कारं नहि स्थापयति।

अयं तु कर्तुर्भावोऽभूत्। इदानीं प्रश्नोऽयमस्ति यत् स किं कर्म कुर्यात्? ईदृश-कर्मणां तालिकाऽत्र नहि दातुं शक्यते परन्तु एकस्या वार्ताया दिशि ध्यानमाकृष्टं कर्तुं शक्येत येन धर्मं चिकीर्षोः वारं वारं सहायता मिलेत्।

यदा कदापि कर्मणः सम्बन्धे विचिकित्सा भवेत् तदा द्वे वार्ते करणीये स्तः। एकं तु इदं द्रष्टव्यं यदात्मनश्चित्तं निष्काममस्ति तस्याः समस्याया उपरि रागेण द्वेषेण वा लिप्तया बुद्ध्या विचारो नहि क्रियते।

अपरा वार्तैतद्विचारस्यास्ति यत् यावन्तः पर्याया विद्यन्ते तेषां कतमोऽभेदभावस्य पोषकोऽस्ति। यत् कर्म सौहार्दस्य एकतायाश्च वर्धकमस्ति तत्करणीयमस्ति।

याभिर्वार्ताभिर्लोकानां बुद्धिः स्वार्थे अर्थादात्मनोऽर्थे कामे च केन्द्रीभूता भवति, या वार्ता लोकानां बुद्धीराकृष्य आत्मनः सुखोपरि द्रढयति, या वार्ताः प्रत्येकं जीवस्य पार्थक्यं प्रोत्साहयन्ति, ता ऐक्यवर्धिका भवितुं नहि शक्नुयुः। तदाधारो यदि कियती एकता आयायादपि तर्हि सा स्तोकं कालं स्थास्यति अपरं समुदायविशेषं यावत् सीमिता भविष्यति। तस्याः पृष्ठभूमौ मद्दत्तमं दौर्हार्दं भविष्यति अपरं तस्य परिणामोऽपि कलहः प्रतिहिंसारूपश्च भविष्यति।

साधारणो मनुष्य इमां वार्तां नहि कथयितुं शक्नुयात् यत् कर्तव्यस्य निर्णये तस्य भ्रान्तिर्न भविष्यति। प्रथमं तु चित्तस्य पूर्णतया निष्पक्षत्व-स्य, निष्कामत्वस्य, साधनमत्यन्तं कठिनमस्ति, पुनर्यत्र द्वौ पर्यायौ तुल्यबलौ प्रतीतौ भवतः; द्वयो रुत्कृष्टयो र्भावयोः परस्परभाघातो भवति तत्रैतस्य निश्चयोऽत्यन्त कठिनोऽस्ति यद अनयो र्मध्ये कतरत् ऐक्यमूलकं पार्थक्यतनूकरं चास्ति। तात्कालि-कपरिणामस्य तु किमपि ऊहनं भवेन्नाम परन्तु दैर्घकालिक वार्ताया अनुमानावस्थापनं दुष्करं भवति। तृतीया वार्तेयमस्ति यत् कोऽपि आत्मनो बुद्धेर्ज्ञानस्य चोपरि उत्थातुं नहि शक्नोति। शिक्षानुभवाभ्यां बुद्धेः सहजा प्रतिभा चाकचक्यमाप्तोत्तिष्ठति परन्तु सर्वेषां बुद्धिः केनाप्युपायेन एकसमा नहि संपादयितुं शक्यते। यस्य बुद्धिर्यावदेव परिष्कृता भवेत् स तावतीमेव सफलतां कर्तव्यनिर्णये प्राप्तुं शक्नुयात्। भ्रमस्य तज्जनित परिणामस्य

च कृते प्रस्तुतेन भाव्यम् । परमस्याः सावधानतायाः पश्चात् कृता भ्रान्तिः महतीं हानिं कर्तुं नहि शक्नोति । कर्तुः कश्चन दुराग्रहो न भवति अतः स भ्रान्तिं शोधयितुं च सदा प्रस्तुतो भविष्यति ।

सर्वतः श्रेष्ठा वार्तेयमस्ति यदित्थं कृते कर्मणि कटुता नहि भवति । यः कर्मपात्रं भवति स तेन कर्मणा बाढ़ प्रसन्नो मा भूत्, तस्य विरोधं कुर्यात्, तत्कारणाद् दुःखी भवेत् परं सोऽपि कर्तुः सद्भावं स्वीकर्तुं विवशो भविष्यति, विरोधं करिष्यति परं नतमस्तको लज्जितो भूत्वा, तस्य चित्तोपर्य्यापि द्वेषस्य संस्कारा अङ्किता न भविष्यन्ति। चिकित्सकोऽस्त्रं प्रयुङ्क्ते, एतेन रोगिणः पीडा भवति। वैद्यस्य भ्रमो भवेत् अपरमेतद्भ्रमफलस्वरूपो रोगिणोऽङ्ग च्छेदोऽपि भवेत् पुनरपि कस्यापि वैद्यसद्भावोपरि शङ्का च भवति। सर्वे जानन्ति यत्तस्यास्त्रप्रयोगे नहि किन्तु रोगिणःस्वास्थ्यसंपादने सुखं प्राप्यते ।

चित्तस्य निष्कामता, बुद्धेः परिष्कारश्च यत्नसाध्यौ स्तः । पूर्णनिष्कामतातु तस्यैव भवद् यः पूर्णो योग्यस्ति । तस्यैव बुद्धिः पूर्णतया परिष्कृता भविष्यति। परन्तु यस्तां पदवीं प्राप्तो नास्ति तेनापि कर्म कर्त्तव्यमस्ति। आत्मन आचरणं धर्मानुकूलं भवतु एतदर्थं तेनापि विरतेस्तपसश्चाभ्यासः कार्यः । शरीरमद्यास्ति श्वो न स्यात् अस्या रक्षा करणीया यतो हि सर्वाण्यभीष्टानि अस्मादेव सिद्धानि भवन्ति परन्तु सुखानामनुसरणं भ्रमोऽस्ति । भोगश्चिरस्थायी नहि भवति अपरं यावत्पर्यन्तमात्मनो भोगाय यत्नः क्रियते तावत्पर्यन्तमात्मनः परस्य च मध्यस्था भित्तिः स्थूला क्रियते। यावत्पर्यन्तं वासना संव्रियते तावत्पर्यन्तमियं भित्तिः प्रतन्वी संपद्यते। भोक्तारोऽधिकाः सन्ति, भोग्यानि न्यूनानि सन्ति, एतदर्थं स्पर्धासंघर्षौ भवतः। चित्तस्य विषयेभ्योऽपसरणं विरतिरस्ति अपरं जीवन निर्वाहस्य या पद्धतिः अस्मिन् कर्मणि सहायतां ददाति सा तपोऽस्ति । यो मनुष्यो मैत्रीकरुणामुदितोपेक्षासु रतो भविष्यति य आत्मनः स्वत्वं महता स्वत्वेन सत्रा मेलयितुं प्रयतिष्यते। समाजस्य दुःखनिवृत्तौ तस्य सुखनिर्वृत्तौ च यतमानो भविष्यति तस्य निष्कामताया श्चित्तप्रसादस्य च प्राप्तिर्भविष्यति, अपरं स तदा योगमार्गस्य अधिकारी सम्पद्येत यदुपरि गमनेन बुद्धेः परिष्कारो भवति ।

## ४ यज्ञाधिकरणम्

पुस्तकस्य प्रथमाध्यायेऽस्माभिर्दृष्टमासीद् यद् यस्य समाजस्य वयमङ्गानि स्मस्तत्र यावन्तः प्राणिनः सन्ति तेषां सर्वेषामस्माकमुपरि किञ्चिन्नु किञ्चिद् ऋणमस्ति अपरं यदि

वयमिदम् ऋणं नापाकुर्मः तर्हि कृतघ्नता दोषग्रस्ता भवामः। एषामृणानामपाकरणस्यापरं नाम कर्त्तव्यपालनं, धर्माचरणमस्ति।

अस्माकं समाजो विशालोऽस्ति। विराट् पुरुषः सोऽव्ययव्यस्ति यस्य वयं सर्वेऽङ्गानि स्मः। एवं मननं भ्रमोऽस्ति यद् अस्माकं सम्बन्धः केवलमात्मनः कुटुम्बेन, वर्गेण, राष्ट्रेण, मनुष्यमात्रेण वास्ति। अस्माकं प्रभूताः सम्बन्धिनः सन्ति य इदानीं मनुष्या न सन्ति। एकतस्ते प्राणिनः सन्ति येषां बुद्धिरस्मत्तः न्यूनं विकसिताऽस्ति, एतावत्पर्यंतं यत् तन्मध्यात् बहूनां चेतनत्वस्वीकारेऽपि अस्माकं संकोचो भवति। पशवः, पक्षिणः, मत्स्याः, कीटाः, कृमयः, जीवाणवः, वनस्पतयः, ओषधयः, एते सर्वेऽपि अस्मिन्नेव जगति सन्ति। तत्त्वतः एषामस्माकं च मध्ये किञ्चिदन्तरं नास्ति। एषां मध्यात् कियतामुपकारस्तु इयान् महानस्ति यत्तस्यास्वीकारं कर्तुमेव न शक्नुमः, कियन्त ईदृशाः सन्ति येभ्योऽस्माकं क्षतिरायाता प्रतीयते, शेषाणां विषयेऽस्माकं हानेर्लाभस्य च ज्ञानमिदानीं नास्ति। यत्र जगति एतेऽविकसिताः प्राणिनः सन्ति तत्रापरस्यां दिशि ते उत्कृष्टा जीवाः सन्ति येषां साक्षात्कारः साधारणतोऽस्माकं न भवति। योगिनो जानन्ति यद् देवगणाः सन्ति ते च निरन्तरमस्माकं सहायतां च कुर्वन्ति। एभिः सक्रियजीवात्मभिः सहास्माकं पूर्ववर्तिनामपि प्रभूतमृणमस्माकमुपरि वर्तते। एषां सर्वेषामृणानामपाकरणं धर्मोऽस्ति। य ऋणशोधाय यत्नं न करोति सोऽधर्मास्ति।

अद्य यदा वयं दर्शनस्य, विज्ञानस्य, धर्मस्य, कलायाश्च विचारं कुर्मस्तर्हि तान् पूर्वपुरुषान् विस्मरामो येषां वयं दायादाः स्मः। यत्संस्कृतेरुपरि वयमात्मनो जीवनमुन्नतं मन्यामहे तस्या निम्नशिलान्यासो यैः कृतस्तेषां मध्यात् प्रभूतानां नामान्यपि विस्मृतिं गतानि सन्ति। येषां नामानि स्मृतिपथेऽनुस्यूतानि सन्ति तेऽस्माकमात्मनीना नहि प्रतीता भवन्ति। एवं नहि प्रतीयते यद् भृगुः, अङ्गिरा, अथर्वा, वशिष्ठः, विश्वामित्रः, मनुः अस्माकं केऽपि आसन्। अस्माकं सभ्यतोपरि गर्वोऽस्ति परन्तु यदि अद्यतः सहस्रतो वर्षेभ्यः प्रथमतो राजपुरुषा योद्धारः साधवो विद्वांसश्च परिश्रमं नाकरिष्यंस्तर्हीयं सभ्यता क्वाभविष्यत्? पुरूरवा, मान्धाता, रघुः, ऋषभः, भरतः हरिश्चन्द्रः, भोजः विक्रमः, रामः, कृष्णः, परशुरामः, पाण्डवबन्धवाः, कर्णः, भीमः, अशोकः, समुद्रगुप्तः, सीता, सावित्री, कणादः, गौतमः, कपिलः, जैमिनिः, शङ्कराचार्यः, व्यासः, वाल्मीकिः, भवभूतिः, कालिदासः, बुद्धः, महावीरः, चरकः, पतञ्जलिः, पाणिनिः, बृहस्पतिः, कौटिल्यः, भास्करः, कस्य कस्य नाम गृह्णीयाम्।

इयं सूची सर्वग्राहिणी नास्ति । एषाम् ईदृशानां चापरेषां महात्मनां विस्मरणं कृतघ्नताऽस्ति। एतानि भारतीयानि नामानिसन्ति ? एतावत्प्राचीनानि नामानि मा वा लप्स्यत किन्तु अपरेषु देशेष्वपीदृशाः प्रातःस्मरणीया मनुष्या सम्भूवन् । एते लोका यस्मिन् वा देशे भवेयुः मनुष्यमात्रकृते वन्दनीयाः सन्ति । अद्य वयं विश्वसंस्कृते विश्वसभ्यतायाश्च दिशि अग्रेसराः स्मः। अतः ईदृशानां सर्वेषां च महापुरुषाणामृणं स्वीकरणीयमस्ति एतदृणस्य परिशोध एतावदेवस्ति यद् यो दीपकस्तैः प्रज्वालितोऽस्ति तस्य निर्वाणो माभूत्। तै र्मनुष्याः पशुभ्य उपरिउत्थापिताः । एवं मा भूद् यद् वयं तं पुनः पशुष्वेव पातयाम । अस्माकं कर्त्तव्यमस्ति यद् मनुष्येषु भ्रातृभावम्, ऐक्यं, संस्कृतिं, सभ्यतां च विस्तारयामः।

अस्माकमुपरि पितृऋणमप्यस्ति । अस्माकं पितृभिः स्वयं कष्टं सहित्वाऽस्मान् सुखिनः संपादयितुं यत्नः कृतः। वयमस्माद् ऋणभाराद् इत्थमेव मुक्ता भवेम यद् आत्मनः सन्तानेभ्यो यावच्छक्यं शिक्षासंस्कारसुखप्रासादनेऽवसरं दद्याम । माता-पितृभाव अत्यन्तं प्रवृद्धं दायित्वमस्ति। न जाने कियत्सु शरीरेषु संसरन् जीवोऽस्माकं गृहे जायते । तस्यैतज्जन्म अग्रिमाणि च जन्मानि अस्माकं व्यवहारेण मुद्रितानि भविष्यन्ति। वत्सा विनोदस्य सामग्र्यो न सन्ति। यो गृहस्थ आत्मनः कुले श्रेष्ठान् पुरुषान् श्रेष्ठाः स्त्रियश्चोत्पन्नान् करोति स पितृऋणमुक्तो भवति।

दया सौहार्दं च गुणौ नहि केवलं मनुष्यपर्यन्तमेव सीमितौ करणीयौ । क्षुद्रः प्राणिनोऽस्माकं समक्षं स्थातुं नहि शक्नुवन्ति। अतस्तान् प्रति अस्माकं दायित्वमपरं वर्धते । अस्माकं शरीराणां संघटनम् ईदृशमस्ति यद् अपरेषां जीवानां किञ्चिन्नु किञ्चित् क्षतेः प्रापणं विना कर्म नहि निर्वहति। जीवो जीवस्यान्नमस्ति परमय मविचाल्यः सिद्धान्तः स्वेच्छाचारस्यानुमतिं न ददाति । तिर्य्यक्शरीरिभ्यो वयं तावदेव गृह्णीमो यावदस्माकं शरीरयात्रायै अनिवार्यतयाऽऽवश्यकं भवेत्। न तु साधारणवस्थायामामिषभक्षणं क्षम्यं भवेत्, न वा मनोरञ्जनाय पशुसंहारो मानवोचितं कर्माऽस्ति। वयमपरं किञ्चिन्नहि अपितु एतावत्तु कर्तुं शक्नुमः यद् यैः प्राणिभिरस्माकं प्रत्यक्षं हानि र्न भवति तेषां स्वच्छन्दतायां बाधां न दद्याम।

अस्माकं कृते सर्वतो बृहत्तम कर्मक्षेत्रं मनुष्याणां मध्ये विद्यते। एतत्क्षेत्रास्तित्वस्यास्वीकारं कोऽपि कर्तुं नहि शक्नोति । सर्वे मनुष्याः परस्परं बद्धाः सन्ति। लोका आत्मन आत्मनो हितानां पृथग् रागं बाढमालपन्तु परन्तु सत्या वार्ता इयमस्ति यत् सर्वेषां सुख

दुःखे परस्परं संबद्धे स्तः। एकस्य देशस्य दुर्भिक्षं, यादवीयं, संक्रामकरोगो वा परस्परं परान् देशान् आन्दोलयति। एकस्मिन् देशे प्रवर्तितो विचारो विषुवद्रेखेव सकलां पृथिवीं क्रोडी करोति। ईदृश्यां दशायां सर्वेषामृणं सर्वेषामुपर्य्यस्ति। अस्या वार्ताया असंशोधनेनैव कलहस्य युद्धस्य च कृते छिद्रं लभ्यते।

व्यक्तेरुपरि यदपरेषां देयमस्ति तस्य कियन्तमंशं तु राजा समाजश्च ततो बलादवशुल्कयतः किन्तु अयमंशः समूहस्य न्योदिष्टोऽस्ति। बलात्कारेण कृतत्वादयं सदाचारः कथ्यतेऽपि नहि। सदाचारस्तदेवाचरणं भवेत् यः स्वेच्छया क्रियते। यत् कर्म कर्त्तव्यबुद्धया क्रियते तदेव सदाचारस्तदेव धर्मोऽपि भवेत्।

धर्मस्य तात्त्विकस्य व्यावहारिकस्य च स्वरूपविषये वयमितः प्रथमयोर्द्वयोरधिकरणयोर्विचारं कृतवन्तः स्मः। यो मनुष्यो धर्मस्य प्रेम्यस्ति यश्च कर्त्तव्यस्य पालनं कर्तु समीहते, तेनात्मनो जीवनं यज्ञनुष्ठानं सम्पादनीयं भविष्यति।

यज्ञस्य त्रीणि मुख्यान्यङ्गानि भवन्ति। तेषु प्रथममङ्गं व्रतमस्ति। यजमानेनायं संकल्पः करणीयो भवति यदहं यजनकाले सत्यस्य पालनं करिष्यामि। जीवनमहायज्ञो यावदायुस्तिष्ठति अतः सत्यस्य पूर्णः सार्वदिकश्च संकल्पः करणीयो भविष्यति। दम्भः कपटः छद्माचारः अनृजुता एतानि सर्वाण्यसत्यस्य रूपाणि सन्ति। एषां परित्यागः कर्त्तव्योस्ति। यः सत्याद् विमुखोऽस्ति तस्योपासना, तस्य तपः, सर्वं निष्फलमस्ति। द्वितीयं व्रतं अहिंसाऽस्ति। अहिंसाया अर्थः शस्त्रानुद्यमनं न ह्यस्ति शस्त्रानुद्यमनं विनाऽपि हिंसा भवेत् अपरं शस्त्रमुद्यम्यापि अहिंसा सुरक्षिता भवेत्। अहिंसाया अर्थः अद्वेषः—कस्यापि हानेरनीहा। दुर्गासप्तशत्यां देवगणेनेयं देव्याः प्रशंसा कृताऽस्ति यद् भवत्यां 'चित्ते कृपा समरनिष्ठुरता', चेत्युभे सहैव स्तः। भवती आततायिभिर्जगतः कल्याणाय युध्यति परमेतेन सह इदमपि वाञ्छति यदेतेषामपि कल्याणं भूयात्। भगवद्गीतायां श्रीकृष्णोऽर्जुनमिदमेव कथितवानासीत् यद् अन्यथाऽपि आत्मसम्बन्धिनो म्रियमाणान् कृत्यमानांश्च दृष्ट्वा त्वं योत्स्यसे परन्तु स उत्तमो भावो नास्ति। स्थितप्रज्ञोऽपि मनुष्य उत्पीडकानां दमनं करोति परन्तु क्रोधावेशे नहि, प्रत्युत कर्त्तव्यबुद्धया। तस्य जगतो हिताय यस्मिन् ते दुराचारिणोऽपि सन्ति।

अहिंसा निषेधात्मिकाऽस्ति। केवलातोऽहिसातोऽकमर्ण्यताऽऽयायात्। अतः सत्याहिंसाभ्यां सह तृतीयं व्रतं दयाया भवेत्। समवेदना अस्या एव द्वितीयं नामाऽस्ति।

दयात एव धृतिसहिष्णुते च लभ्यते । कर्त्तव्यपालनं यदा कदा अतिकटुकौषधस्य पानं भवति । दया तां पानपात्रीं सहृद्यां सम्पादयति । वत्स आत्महितं न जानाति । स औषधपानसमये कदाचित् कदाचित् मातरं पादेनाहन्ति, दन्तैः कृन्तति, परं सा तस्याज्ञतां हसित्वा सहते ।

यज्ञस्य द्वितीयमङ्गमाहुतिरस्ति । देवतोद्देश्येन यदग्नौ दीयते तदाहुतिःकथ्यते । कर्त्तव्ययज्ञे मानवसमाजो देवताऽस्ति तस्य सेवाऽऽहुतिरस्ति । आत्मनः शक्तेर्योग्यतायाश्चानुसारं या काचन सेवा सम्पन्ना भवेत् सा समाजाय अर्पणीया । सेवाशब्दोऽपि ध्यानं दातव्यम् ।लोकसंग्रहे लग्नेषु मनुष्येषु यद्ययं भाव आयायात् यदहं लोकोपरि अमुकप्रकारकमुपकारं कुर्वन्नस्मि तर्हि तस्य यज्ञो विध्वस्तः सम्पद्यते । भावोऽयं भवेत् यद् इयं तेषां लोकानां, येषां निःसीमोपकारभारेण अहमाचूडान्तं नमितोऽस्मि, महती कृपाऽस्ति यन्मह्यं स्तोकायाः सेवायाः करणार्थमवकाशं दत्त्वा किञ्चिदृणान्मुक्तेरवसरो दत्तोऽस्ति ।

यज्ञस्य तृतीयमङ्गं बलिरस्ति । बलिपशोः शक्तिर्यजमाने प्रविष्टा जायते, एवं मन्यते । जीवनयज्ञे आत्मनोऽधमं स्वत्वमेव पशुरस्ति । आलस्य-स्वार्थेर्ष्याणामालम्भनं करणीयं भविष्यति । एवं करणेन आत्मनः कुवासनानामुन्नमनं भविष्यति सद्वासनानाम् आत्मनः स्वत्वस्य च बलं वर्धिष्यते । धर्मचिकीर्षुरित्थमात्मनः समस्तं जीवनं यज्ञं सम्पादयति । या वार्तास्तस्य स्वास्थ्यशौचयोस्तस्य बुद्धिशक्त्योश्च वर्धयित्र्यः सन्ति ताः सर्वा धर्मपदेन कथ्यन्ते, यज्ञस्याङ्गानि सन्ति, यानि कर्माणि लोके ऐक्यस्य सद्भावस्य चास्फालनकर्तॄणि सन्ति तानि धर्मः । मनुष्यैरेतदिष्यतां यत् शय्यात उत्थाय पुनः शयनं यावत् यावन्त्यपि कर्माणि क्रियन्ते तदुपर्य्यनया दृष्ट्या विचारं कुर्यात् ।

देवगणस्यास्माकमुपरि महदृणमस्ति । यथा वयं भौतिकशक्तिभिरात्मनः कर्मसम्पादयामस्तथैव देवगणा भौतिकशक्तीनामुपयोगमस्माकं भूर्लोकनिवासिनां हिताय कुर्वन्ति । यथाहि पूर्वमपि लिखितमस्ति यत्ते वाञ्छन्ति यदेते सुखिनः समृद्धाश्च स्युः । एषु धर्मबुद्धेर्विद्यायाः प्रचारश्च वर्धेयाताम् । अल्पदयाः सन्तोऽपि तेऽस्माकं सहायतां चेक्रीयन्ते परन्तु वयं तेषां कर्मणि बाधां दद्मः । अल्पशक्तयः सन्तोऽपि वयं जीवाः स्मः; बहुशक्तयः सन्तोऽपि ते जीवाः सन्ति । देवानामृणान्मुक्तिरित्थं भवेद् यद् वयं तेषु कर्मसु प्रवृत्ता भवेम यानि तेषां प्रियाणि सन्ति । यावत्पर्यन्तं वयं परस्परं कलहायामहे शोषणं कलहम-

विद्यां च प्रसारयामः अपरं तेषां मूलोच्छेदाय प्रयत्नं च न कुर्मः तावत्पर्यन्तं वयमसुर-शक्तीनां साहाय्यं कुर्मः ।

अस्माभिर्धर्मस्य तात्विकी परीक्षा कृता अपरं तस्य व्यावहारिकरूपस्य च विवेचना कृता। यज्ञभावेन यत् क्रियते तत् प्रत्येकं जीवस्य पार्थक्यं दूरीकरोति । अपरं कर्तुरात्माभिव्यक्तिं करोति, तस्य बुद्धिं भेद दर्शनादुत्तरोत्तरमुपर्युत्थापयति । ईदृशं कर्म पवित्रमस्ति, शुक्लमस्ति, पुण्यमस्ति, धर्मोऽस्ति ।

यज्ञशब्दप्रयोगस्तेषां काम्यानां कर्मणां क्रियते येषु देवगणानां प्रसादनाय मन्त्रैरग्नौ आहुतयो दीयन्ते । एवं विश्वासः क्रियते यन् मन्त्रविशेषो देवता अर्थात् दैव शक्तिविशेषा-माक्रष्टुं समर्थो भवति अपरं पुनरभीष्टसिद्धिश्च भवति । ईदृशा यज्ञा राज्य सम्पत्ति, सन्तान-वृष्टि-रोगनिवृत्ति प्रभृतिभिरुद्देश्यैः सम्पाद्यन्ते । मन्त्रस्य विषयः प्रभूतं महत्वस्यास्ति परन्तु अत्राप्रासङ्गिकमस्ति । काम्या यज्ञा अस्माकमविषयाः सन्ति । एतत् स्थलोपरि एतावदेव वाच्यमस्ति यद् धर्मादविरुद्धा वर्थकामौ निषिद्धौ न स्तः । सदैव परहितस्य वार्तायां विचारे योऽसमर्थोऽस्ति-अपरमधिकांशा मनुष्या अस्यां कोटौ सन्ति-स आत्मनोऽर्थकामौ विस्मर्तुं न शक्नोति । तयोः सम्पादनाय यत्नशीलो भविष्यति । एवं करणमवद्यं नास्ति । आपत्तेर्वार्ता तदा भवति यदा धर्मो विस्मृतो जायते अथवा गौणो मन्यते । धर्मादर्थकामयोरपि प्राप्ति र्भवेत् अपरं शरीरपातस्य पश्चादपि सद्गतिः प्राप्ता भवेत् । अतो धर्मोऽभ्युदयनिश्रेयसोः साधनमुच्यते । इयं क्षमता तस्मिन् कर्मणि आयायात् यल्लोकस्य श्रेयस्करं भवेत् संकल्प-पूर्वकमनुष्ठितं च भवेत । यत् कर्म कयाचिल्लौकिक्या पारलौकिक्या आशया भयेन वा विधीयते अथवा लोकाचारस्यनुसरणमात्रं भवति तद् युक्तं सदपि शुद्धं न भवति । ईदृशं कर्म धर्मस्य पूर्णां मर्यादां यावत् नोपतिष्ठते ।

## ५ ब्राह्मणाधिकरणम् ।

यो मनुष्यो धर्मस्य स्वयं पालनं करोति अपरेण पालनं कारयति च स ब्राह्मणोऽस्ति। सर्वेषां लोकानां नत्वेकसमज्ञानं भवितुं शक्नोति न वा एक सदृशी बुद्धिः नाप्येकसमा शक्तिः प्रकृति र्वा । अतः कर्त्तव्यस्य भारोऽपि सर्वेषामुपरि एकसदृशो नहि दातुं शक्यते, सर्वेभ्य एकप्रकारकस्यैव कर्मणः करणस्याशा न कर्त्तव्या । प्रभूता लोका एतादृशाः सन्ति येऽति

गम्भीरं स्वतन्त्रं च विचारं नहि कर्तुं शक्नुवन्ति, ते प्रायो लोकाचारस्यैवानुसरणं कर्तुं पारयन्ति। ये लोका विचारशालाः सन्ति तेष्वपि सेवाया एक एव प्रकारः सर्वेषां रुचिकरश्च नहि प्रतीतो भवेत्। कस्यचिद् बुद्धिः शिक्षणे, कस्यचिद् रक्षणे, कस्यचिद् वाणिज्यव्यवसाये, कस्यचिच्च शारीरिक श्रमे संलग्ना भवति। समाजस्य जीवनस्य कृते एतानि सर्वाणि कर्माणि आवश्यकानि सन्ति एषु एकस्याप्यभावे सामूहिकं जीवनं सङ्कटे पतिष्यति। सर्वे कर्मकारिणः परस्परमाश्रिताः सन्ति, सर्वे समाजोपरि आश्रिताः सन्ति, समाजश्च सर्वेषामुपरि आश्रितोऽस्ति। एको मनुष्यो यत् कर्म सम्यक्तया कर्तुं शक्नोति तत् अन्यो स मनुष्यः कर्म तेनसौष्ठवेन कर्तुमशक्तः स्यात् अतः एवोच्यते यत् सर्वेषां मनुष्याणां कृते एक एव धर्मो नास्ति। यदपि कर्म यज्ञबुद्धया क्रियते स धर्मो भवेत्। यदपि कर्म धनस्य मानस्य वा कृते, लोभाद् भयाद् वा क्रियते तद् धर्मपदवीतश्च्युतं भवति।

समाजस्य सर्वाणि अङ्गानि तुल्यानि सन्ति, सर्वाण्यप्यावश्यकानि सन्ति, आत्मनो धर्मस्य पालनकर्त्तारः सर्वेऽप्यादरणीयाः सन्ति, पुनरपि तस्य मनुष्यस्य स्थानं सर्वत उच्चतमं मन्तव्यं यः शिक्षाद्वारा सेवां करोति। अत्र केवलं साधारणशास्त्रीयविद्यानां शिक्षायां तात्पर्यं नास्ति। ता अपि आवश्यिकाः सन्ति, ता विनाऽपि मनुष्योऽन्धीभूतो भवति परन्तु ये लोका अध्यात्मविद्याया धर्मस्य च शिक्षां ददते ते तु समाजस्य मूर्धन्याः सन्ति। ईदृशा लोकास्तपसस्त्यागस्य च पथिप्रदर्शकाः मूर्त्तिमन्तो धर्माश्च भवन्ति। त एव ब्राह्मणाः कथ्यन्ते।

ब्राह्मणत्वं कस्मिंश्चित् कुलविशेषे जन्मग्रहणेन नहि आयाति। येन ब्राह्मणेन भवितव्यं स जन्मना तादृशस्वभावसम्पन्नो भवति। शिक्षयाऽयं स्वभावः क्षालितो भवति। परन्तु ब्राह्मणत्वस्य मुख्यं स्रोतः स्वाध्यायस्तपस्त्यागो निदिध्यासनं च सन्ति। य एतैः साधनैर्युक्तोऽस्ति स एव धर्मप्रवचनाय अधिकारी अस्ति। यस्मिन्निमा वार्ता न सन्ति स कियन्नाम महान् पण्डितो भवेत् कस्मिन्नपि कुले उत्पन्नो भवेत्, ब्राह्मणपदवाच्यो नहि भवेत्, ब्राह्मणः कथयितुं न शक्येत। ईदृशो मनुष्य ऋषिपुत्रोऽपि भवेत् तथापि स ब्रह्मबन्धुब्राह्मणनाम्नो निन्दकोऽस्ति। यः समाज ईदृशेभ्यो धर्माद्विहीनेभ्यो लोकेभ्यो धर्मव्यवस्थां गृह्णाति स निःसंदेहं पतनोन्मुखोऽस्ति। या व्यक्तिर्धर्मस्योपदेष्ट्री संपन्ते यदि सा स्वयं तस्य पालनं न करोति तर्हि अपरतोऽधिकं पतितोऽस्ति। यस्य यावज्ज्ञानमस्ति तस्य तावदेव दायित्वमस्ति।

सर्वे ब्राह्मणा भवितुं नहि शक्नुवन्ति परन्तु सर्वैर्ब्राह्मणस्यादर्शमात्मनः समक्षं स्थापनीयम्। यद्यस्मिन् जन्मनि ब्राह्मणत्वं नापि प्राप्तं भवेत् तथापि जन्मान्तरस्य कृते प्रभूतं मूलधनं पार्श्वे स्थास्यति। यः समाजो ब्राह्मणान् जानाति तेषामादरं करोति, तेषामादेशानुसारं व्यवहरति च, तस्य कल्याणं भविष्यति।

ब्राह्मणस्य समक्षं राजा रङ्कश्च तुल्यौ स्तः। स निर्भीकतया भर्त्सयति, निष्पक्षो भूत्वा धर्ममुपदिशति। स दुर्बलानां बन्धुर्दुःखिनां च मूर्त्ता सान्त्वनाऽस्ति। साक्षाद् यज्ञात्मा ब्राह्मणो यदि यस्मात् कस्मान्मनुष्यात् सेवा स्वीकारं करोति स पावनः संजायते।

# ६ कर्तृस्वातन्त्र्याधिकरणम्

यावत्यो वार्ता अद्यावधि धर्मस्य विषये कथिताः सन्ति तास्विदं विवक्षितमस्ति यत् कर्ता कर्मकरणे स्वतन्त्रोऽस्ति। यदि व्यक्तिः स्वतन्त्रा नास्ति, कस्याश्चिद् बाह्यायाः शक्तेः संकेतोपरि कर्म करोति, तर्हि पुनर्धर्मस्योपदेशनं व्यर्थमस्ति, आत्मनः कर्मणः कृते कश्चिद् दायी नहि स्थिरीकर्तुं शक्यते, पुण्यपापयोः, धर्माधर्मयोः, कर्त्तव्याकर्त्तव्ययोः, स्तुतिनिन्दयोः पुरस्कारदण्डयोश्च सम्बन्धे विचारः कालयापनमात्रं भवेत्।

साधारणतोऽस्माकमेवं प्रतीतं भवति यद् वयं स्वतन्त्राः स्मः। यदा यादृशं मनसि आयाति, यादृशः संकल्प उदेति तदा वयं तादृशमेव कुर्मः। अज्ञानात् बाढ़मनुचितमेव संकल्पं कृत्वावतिष्ठताम्, परन्तु संकल्पोपरि बन्धनं नहि भवति। एकदैव द्वौ अधिका वा पर्याया आयान्ति, अहं तेषु यं कमपि चिनोमि अन्ते कश्चनैकएव गृहीतो भवति। अयं मम निश्चयो वस्तुतः स्वतन्त्रोऽस्ति, ममास्ति।

यदीयं वार्ता युक्ताऽस्ति तदात्वस्माकमिदानींतन्याः समीक्षायाः कृते आधारोऽस्ति, परन्तु अयं स्वतन्त्रतायाः प्रश्नो विचारणीयोऽस्ति। वयं तावत् स्वतन्त्रा नहि स्मो यावद् विना विचारं मन्यामहे। इदं तु युक्तमस्ति यद् वयमात्मनः संकल्पानुसारं कर्म कुर्मः परन्तु किं वयं संकल्पकरणे स्वतन्त्राः स्मः? किं यदाऽस्माभिः कश्चन संकल्पः कृत आसीत् तदा कस्यचिद् अपरप्रकारस्य संकल्पस्य करणं, कस्यचिद् अपरस्य पर्यायस्य वरणमस्माकं कृते सम्भवमासीत्?

ये लोकाः स्थावरजङ्गमात्मकं जगत् ईश्वरकर्तृकं मन्यन्ते ते तूपर्युक्त प्रश्नस्यैकमेवोत्तरं दद्युः। यदि मामीश्वरः संपादितवान्, यदि मह्यं तेन बुद्धिर्दत्ता यदि मां स विशेषपरिस्थितौ निक्षिप्तवाँस्तर्हीदं कथनं यत् त्वं स्वतन्त्रोऽसीति मया सह क्रूरताक्रान्त परिहासोऽस्ति। कस्यचिद् हस्तपादं बध्द्वा जले प्रक्षेपणम् अपरं पुनस्तमुद्दिश्योपदेशः यत् त्वं स्वतन्त्रोऽसि आत्मनः प्रणान् अभिक्लिन्नान् शुष्कान् वा रक्ष, स्वतन्त्रशब्दस्यावमाननाऽस्ति। परन्त्विदं मतं समीचीनं नास्ति। वयं ज्ञानखण्डे दृष्टवन्तः स्मो यदीदृशः कश्चनेश्वरोऽस्त्येव नहि यो जीवस्य तद् बुद्धेश्च स्रष्टा भवेत्।

ईश्वरो माभून्नाम, परिस्थितेः प्रभावस्तु संकल्पोपरि निः सन्देहं पतति। स्वस्थरोगिणोः तृप्तबुभुक्षितयोः, धनिकनिर्धनयोः, स्थिरचित्तचिन्ताग्रस्तयोश्च संकल्पा एकसमा नहि भवन्ति। शिक्षिताशिक्षित संकल्पयोर्भेदो भवति, युद्धशान्ति कालयोश्च संकल्पयोर्भेदो भवति। बहुधा वयं परिस्थितिं दृष्ट्वा इदं प्रथमत ऊहामहे यत् तत्रस्थो मनुष्यः कीदृशं कर्म करिष्यति।

परन्तु इयं कल्पना यदा कदा समीचीना नहि निःसरति। कश्चन मनुष्योऽपवाद इव दृश्यते। परिस्थितिर्बलवती भवति परन्तु कर्मकरणे मनुष्यस्य सहजस्वभावोऽपि निर्णायको भवति।

सर्वेषां स्वभाव एकसमो नहि भवति। सर्वे लोकाः सदृशीर्बुद्धिभिर्योग्यताभिर्वासनाभिश्च सार्धं नहि जायन्ते। वयं पूर्वं दृष्टवन्तः स्मो यद् अग्रिमानेकजन्मसु प्राप्तानुभवजसंस्कारै र्जीवानां चित्तेषु व्यवहारेषु च भेदो भवति। आत्मनश्चित्तानुसारं परिस्थितेरुपरि प्रतिक्रिया भवति तदनुसारं भोगश्च भवति। एतस्यार्थोऽयं प्रतीयते यद् जीवः प्रारब्धाधीनोऽस्ति। अभ्युपगम्यतां यत् प्रारब्धं तस्य कर्मणामेव फलमस्ति परं लोहशृङ्खलाऽऽत्मना घटिता भवतु परेण वा, बन्धनं त्वेकसममेव भविष्यति। प्राक्कर्मानुसारमिदानीन्तनी बुद्धिः, एतद्बुद्ध्यनुसारमेतज्जन्मनः कर्म, एतत्कर्मानुसारमागामिनी बुद्धिः, इयमनन्ता परम्परा संजाता। अस्मिन् न क्वचित् धर्मोपदेशस्य कृते स्थानमस्ति नापि मोक्षस्य प्रश्न उत्तिष्ठेत्।

इयमाशङ्का युक्ता नास्ति। जीवात् वरीयान् कोऽपि नास्ति। स क्षुद्रशरीरेष्वपि याति देवपदमपि प्राप्नोति, ततोऽप्युपर्युत्तिष्ठति। सकलाः शक्तयस्तस्मिन् सन्ति, परन्त्वविद्याऽऽवरणेन सोऽल्पज्ञोऽल्पशक्तिश्च सम्पन्नोऽस्ति। तस्य दशा तेन दन्दह्यमानेन अङ्गारेण सदृश्यस्ति यदुपरि क्षारस्य स्तरः संजातोऽस्ति। इतोऽपि युक्तमुपमेयमस्ति यद् जीवो वडवाग्निना समानोऽस्ति यो जलस्य भूखण्डस्य नीचैरन्तर्हितोऽस्ति। यदा कदा स स्फुटितो

भवति। तत्समये आवरका भूस्तराञ्छिन्नभिन्नाः संजायन्ते। कदाचित् कस्यचित् कलाकारस्य कृतिः, कदाचित् किञ्चित् प्राकृतिकं दृश्यं, कदाचित् कस्यचिद् अपरस्य जीवस्य विवशता, कदाचित् कस्यचिद् वीतराग मनुष्यस्याचरणं, कदाचित् कस्यचिदोजस्विनः प्रवक्तुरुपदेशः, सुप्तं जीवं जागरयति, तस्य चित्तमालोडितं करोति, अन्तर्निमग्नाः शक्तय उद्बुध्यन्ते स्वभावः पराभूतो जायते। इयमेव जीवस्य स्वतन्त्रताऽस्ति। स्तोकं प्रभूतं वा सदा कर्म करोति। जीवः परिस्थितेः स्वभावस्य च पूर्णो दासः कदापि नहि भवति। पुनरपि प्रारब्धो बलवान् भवति। किन्तु कर्ता वस्तुतः स्वतन्त्रोऽस्ति। तस्य अस्या एव स्वतन्त्रताया आधारोपरि धर्मस्य आदेशा उपदेशाश्च दीयन्ते। यथा यथा स धर्माचरणं करोति तथा तथा तेनात्मनः स्वतन्त्रताया अधिकाधिकः परिचयः प्राप्यते।

---

# द्वितीयोऽध्यायः

## समाजो धर्मश्च

यदि सर्वे लोका आत्मनो धर्मं पालयेयुस्तर्हि सर्वे सुखिनः समृद्धाश्च बोभूयेरन् परन्तु अद्यत्वे ईदृशं नहि बोभूयते। धर्मस्य स्थानं गौणातिगौणम् अबोभूयत अतः सुखं समृद्धिश्च उदुम्बरपुष्पे सम्पन्ने स्तः। यद्येकः सुखी सम्पन्नश्चास्ति तर्हि पञ्चाशत् दुःखिनो दरिद्राश्च दृश्यन्ते। साधनानां न्यूनता नास्ति परन्तु धर्मबुद्धेर्विकासाभावात्तेषामुपयोगो नहि बोभूयते। केचन स्वार्थान्धा युयुत्सवश्च प्राणिनः समाजे सर्वेष्वपि कालेषु प्रायः सम्भवेयुर्भविष्यन्ति च परन्तु अद्यत्वे ईदृशी व्यवस्थाऽस्ति यद् ईदृशानां लोकानाम् स्वप्रवृत्त्यनुसारं कर्मसम्पादनाय निर्बाधोऽवसरो लभ्यते। अपरं तेषां सफलताऽपरानपि तदनुगामिनः सम्पादयति। अपरस्यां दिशि ये लोका वस्तुतः सदाचारिणः सन्ति तेषां मार्गेषु पदे पदे बाधा उपतिष्ठन्ते।

मनुष्यस्य सर्वतो वरिष्ठः पुरुषार्थो मोक्षोऽस्ति परन्तु समाजः कस्मिन्नपि हठात् आत्मसाक्षात्कारस्येच्छामुत्पादयितुं नहि शक्नुयात्। नहि कश्चिद् योगीभवितुं विवशः क्रियेत न वा ब्रह्मविवित्सूनां कृते सर्वजनीनाः पाठशालाः उद्घाटयेरन्। बलात् कश्चन धर्मात्माऽपि नहि सम्पादयितुं शक्येत। परन्तु समानस्य संव्यूहनमीदृशं भवेत् यत् सर्वेषां समक्षम् आत्मज्ञानस्य अभेददर्शनस्य चादर्शस्तिष्ठेत् वैयक्तिकस्य सामूहिकस्य च जीवनस्य मूलमन्त्रः प्रतिस्पर्धायाः स्थाने सहयोगो भवेत् अपरं च सर्वेषामात्मनीन सहज योग्यतानां विकासस्य चावसरो मिलेत्। यदीदृशी व्यवस्था भवेत् तर्हि धर्मस्य स्वतः प्रोत्साहनं मुमुक्षाया अनुकूलं वातावरणं च लप्स्येते। एतेन सहैव इयं वार्ताऽपि स्वयमेव

सम्पत्स्यते यद् येषां लोकानां धर्मबुद्धिरिदानीम् उद्बुद्धा नह्यस्ति ते समाजस्य महतीं क्षतिं नहि कुर्युः ।

मनुष्य आत्मानमियत्सु त्रुटितकेषु वणिटतवानस्ति यदेकतायाः क्वचिदाश्रयो नहि मिलति । यावन्ति खण्डानि सन्ति तावन्त्येव पृथक् पृथक् हितानि सन्ति अपरम् एषां हितानां सिद्धिः पार्थक्यं तावदेव वर्धयति ।

उदाहरणार्थं सोंऽशो गृह्यतां यद् राष्ट्रमुच्यते । वयमात्मनो राष्ट्रेषु व्यभजाम अपरं प्रत्येकं राष्ट्रमात्मानं स्वतन्त्रं प्रभुराजस्य रूपे संव्यूढं दिदृक्षते । द्वौ मनुष्यौ समान-विचारौ एकस्या एव संस्कृतेरुपासकौ च स्तः । एकस्य अपरेण सह कोऽपि द्वेषो नास्ति, पुनरपि विभिन्नराष्ट्राणां सदस्यत्वाद्धेतोः तेषां हितानि परस्परं संघट्टन्ते, एकस्य अपरेण सह युद्धं संपद्यते, एकेनापरस्य संततिर्बुभुक्षया मारिता भविष्यति । व्यक्तेर्दासत्वसम्पादन-मवद्यं मन्यते परन्तु समग्रस्य राष्ट्रस्य दासतारज्जौ बन्धनम्, समुचितराष्ट्रस्य जीवनस्य आत्मेच्छानुसारं परिचालनं, समुचितराष्ट्रस्य शोषणमवद्यं नास्ति । बलाद् अपरस्य गृहस्य प्रबन्धो नहि क्रियेत परन्तु बलाद् अपरस्य राष्ट्रस्योपरि शासनं कर्तुं शक्येत । राष्ट्राणां राजानां च परस्परं व्यवहारे सत्यस्याहिंसायाः सहिष्णुतायाश्च स्थानं नास्ति । यो मनुष्यो अपरस्या व्यक्तेरेकस्याः पदिकाया आत्मसत्कारकरणमवद्यं मनुते स राजपुरुषपदेन अपरस्य राष्ट्रस्य गलस्योद्बन्धनं निन्द्यं नहि मन्यते । इयं वार्ता श्रेयस्करी नास्ति । कुटुम्बे व्यक्तयो भवन्ति समाजे राष्ट्राण्यपि तथैव तिष्ठन्तु । कासुचिद् वार्तासु आत्मनो जीवनं पृथगपि व्यत्याययन्तु परन्तु सकलमानवसमाजस्यैकता सततं समक्ष तिष्ठेत् । युद्धस्य कलहस्य च युगं समाप्यताम्; यद् राष्ट्रम् अपरस्य दिशि कुदृष्ट्या पश्येत् तद् राष्ट्रं राष्ट्रसमुदायाद् बहिष्कृतं दण्डितं च भवेत् । न्यायः सत्यं च सामूहिकाचरणाधारोपरि संपादयितुं शक्येते । मानवसंस्कृतिरेकाऽविभाज्या चास्ति; योगी, कविः, कलाकारः विज्ञानी वा भवन्तु नाम कस्यापि देशस्य निवासिनः मनुष्यसमाजमात्रस्यविभूतयः सन्ति । एतेन सहैवार्थिक विभाजनमपि समाप्तं भवेत् । प्रकृतिर्यां भोग्यसामग्री प्रदत्तवत्यस्ति तामपि मनुष्यमात्रस्योपभोगसाधिकां स्वीकुर्यात् । यावत्पर्यन्तं मनुष्य आत्मनो देशाद् बहिः अपरिचितः संभोत्स्यते, यावद् वसुन्धरा बलवतां सम्पत्तिर्ज्ञास्यते, यावच्च कस्यापि देशस्यायमधिकारः स्थास्यति यत् स सामर्थ्ये सत्यपि अपरेषां देशानाम् आवश्यकतापूर्तिं कुर्यान्न वा कुर्यात् यदि कुर्यादपि तर्हि स्वमनोनतीपणोपरि तात् पर्यन्तं मनुष्यसमाजः सुखी नहि भवेत् ।

यो नियमोऽन्ताराष्ट्रिय जीवनस्य कृते उपयुक्तोऽस्ति स एव राष्ट्रभ्यन्तरस्य कृतेऽपि युक्तो भवति। इदं समाजशास्त्रस्य राजनीतेरर्थशास्त्रस्य वा पुस्तकं नास्ति परन्तु द्वित्राणां वार्तानां दिशिध्यानमाकृष्टुं शक्येत।

राष्ट्रस्याभ्यन्तरं संव्यूहनमीदृशं भवेत् यत्र प्रत्येकं मनुष्यस्य धर्माविरुद्धार्थ-कामयोर्निर्बाधं प्राप्तिर्भवितुं शक्नुयात। इदं तदैव भवेद् यदा समाजस्य सङ्घटनं धर्म मूलकं भवेत्। समयेन सत्रा धर्मस्य बाह्यानि रूपाणि परिवरीवृत्यमानानि सन्ति परन्तु तस्य मूलतत्वानि अक्षुण्णा सन्ति। यत्कर्म ऐक्यस्य सहयोगस्य वर्धकमस्ति। स धर्मोऽस्ति; यत् कर्म आत्मनः संकुचित स्वत्वत्वोपरि केन्द्रितं तिष्ठतिसोऽधर्मोस्ति। यस्मिन् समाजे कश्चन जन्मना उच्चः जन्मना नीचो मंस्यतेः यस्मिन् समाजे योग्यव्यक्तिभ्य उत्थानस्य, आत्मनः सहजातयोग्यताया विकासकरणस्यच अवसरो न दास्यते अपरमयोग्य-व्यक्तिः कुलाधारं प्रयुक्तोच्चपदात् अपसारितो न भविष्यति; यस्मिन् समाजे तपसो विद्यायाश्च स्थानं सर्वोपरि न भविष्यति स समाज अधर्मनिम्नाधारशिलोपरि स्थितोऽस्ति। यस्मिन् समाजे परिगणित-व्यक्तीनां समाजस्य धनजनशक्तेर्यथेच्छमुपयोगस्य अधिकारो भवति; यस्मिन् समाजे शासि-तानां स्वशासकानामालोचनाकरणस्य, तेषां कर्मणा असन्तोषे सति तेषां च्यावनस्य चाधि-कारो न भवति; यस्मिन् समाजे शासकानामुपरि तपस्विनां, विदुषां ब्राह्मणानां चाङ्कुशो नहि भवति; यस्मिन् समाजे शिक्षाया, विज्ञानस्य, कलाया उपासनायश्चोपरि शासकानां नियत्रणं भवति स समाजः अधर्म निम्नाधारशिलोपरि स्थितोऽस्ति। यस्मिन् समाजे स्तोका मनुष्या धनवन्तः शेषाश्च निर्धनाः सन्ति, यस्मिन् समाजे भोज्य पदार्थानामुत्पादनस्य मूलसाधनानाम् अर्थात् भूमेः खनिजानां यन्त्राणां चोपरि कियतीनां व्यक्तीनां स्वत्वमस्ति; यस्यिन् समाजे शोषणं वैधमस्ति; यस्मिन् समाजे प्रतिस्पर्धिनां नीचैः पातनमेव उन्नतेः साधनमस्ति; यस्मिन् समाजे प्रभूतानां जीविकाः स्तोकानां हस्ते सन्ति, स समाज अधर्म निम्नाधारशिलोपरि स्थितोऽस्ति। अयं कश्चन तर्को नास्ति यत् प्राचीन काले इतः कति सहस्त्राणि शतानि वा वर्षाणि पूर्वम् आसां वार्तानां मध्ये कियत्यो वार्ता उचिताः सम्बुद्धा अभूवन् अमन्यन्त अपरं चवरिष्ठा विद्वांस एषां समर्थनमकार्षुः। यथा पूर्वं कथितमस्ति, धर्मस्य सिद्धान्तोऽ विचाल्योऽस्ति परन्तु देश काल पात्र भेदेन तस्य विनियोगे भेदो बोभूयमानोऽस्ति। पौराकालिकैर्ब्राह्मणैः आत्मनः समयस्य कृते या वा काचिद् व्यवस्था कृता भवेत् परन्त्व-स्माभिरयं समयो द्रष्टव्योऽस्ति। व्यासस्य, मनोः याज्ञवल्यक्यस्य, परा शरस्य, महात्मनो गान्धिनो वा नाम तर्क स्थानं नहि ग्रहीतं शक्नोति। स्यादेतत्, धर्माधर्मयोरेकैव परीक्षा-

ऽस्तिः इदं कर्म भेदभावं न्यूपयति वर्धयति वा ? लोकान् परस्परं संगमयति अथवा तेषु संघर्षं वा उत्पादयति ? यत्र कियद्भ्यो लोकेभ्यः केवलमधिकारः कियद्भ्यः केवलं कर्त्तव्यं च विभक्तं भविष्यति, यत्र शिक्षकः, पण्डितः, कविः, साधुः, धर्म गुरुश्च अधिकारिणः श्रीमतश्चोप जीविष्यन्ति, यत्र पुरोहितस्य लक्ष्यं च केवलं यजमानाद् धनप्राप्तिर्भविष्यति, यत्र सम्पन्नानां परिषदा व्यासपीठे स्थित्वा दुर्बलानां दलितानां च शान्तेः सन्तोषस्य च पाठ पाठने इतिकर्त्तव्यतां सम्भोत्स्यन्ते, तत्र कदापि समता, सद्भावः सहयोग एकता च नहि स्थातुं शक्ष्यन्ति। तत्र वैषम्याग्निः प्रत्येकं दुःखिनो हृदये दन्दहिष्यते । सा ज्वालामुखी एकस्मिन् दिने स्फोटिष्यति अपरं क्रान्तेर्ज्वाला न केवलं समाजस्य अवघतां दोषं परं भद्रतामपि भस्मसात् करिष्यति । ये लोका एतस्यास्त्रतुं वाञ्छन्ति तेषां कर्तव्यमस्ति यत् ते अन्यायस्य, शोषणस्य, प्रपीडनस्य, प्रवञ्चनस्य च निरन्तरं विरोधं कुर्वन्तु, प्रत्येकं मनुष्ये प्रत्येकं प्राणिनि च सद्भावं शान्तिश्च स्थापयितुं प्रयतेरन्। ईदृशे वातावरणे एव उच्चा कला, विद्या विज्ञानानि च पल्लवितानि भवितुं शक्नुवन्ति; ईदृश्यां परिस्थित्यामेव धर्मस्य अभ्यासो निर्बाधः परिपूर्णश्च भवेद्, ईदृशे समाजे एव आत्मसाक्षात्कारेच्छुकानामवसरोलप्स्यते समाजः कंचन ब्रह्मज्ञानिनं नहि संपादयितुं शक्नोति परन्तु मनुष्येभ्यो मनुष्यवद् व्यवहारस्यावसरं दातुं शक्नोति । तस्यायमेव धर्मोऽस्ति ।

---

# तृतीयोऽध्यायः

## शिक्षा

समाजस्य सम्यक् सञ्चालनं तदैव भवेद् यदा प्रत्येकं नागरिकस्य दायित्वं स्यात्। यः समाज आत्मनः सकलं भारम् अल्पानां व्यक्तीनां स्कन्धोपरि देदीयते तेन अस्या वार्तायाः कृते प्रस्तुतेन भाव्यं यदेकस्मिन् दिने तस्य सकला अधिकारा आभिः स्तोकाभिर्व्यक्तिभिराच्छिन्ना भविष्यन्ति। पुनस्तेन आत्मनो नष्टां सम्पत्तिं पुनरवाप्तुं विकटं युद्धं कर्त्तव्यं भविष्यति। परन्तु नागरिकः समाजस्य कर्म तदैव परिचालयितुं शक्नोति यदा तस्मिन्नेतस्य योग्यता भवेत् अपरं स सामाजिकजीवनस्य लक्ष्यं जानीयात्। इयं वार्ता शिक्षामुपजीवति।

शिक्षाया अर्थो व्यापकोऽस्ति। साधारणतः सा बौद्धिकव्यायामसमानार्थिकाभिमताऽस्ति। छात्राः साहित्यम्, विज्ञानम् इतिहासं, राजशास्त्रम्, अर्थशास्त्रम् इत्यादीनि पाठ्यानि पाठिता भवेयुः अथ च ते कुशलाश्चिकित्सका अध्यापका यान्त्रिका वा सम्पादिताः स्युः। समाजस्येदृशानां लोकानां सततमावश्यकता बोभूयते। यदि प्रत्येकं मनुष्यस्य तद्योग्यतानुसारं कर्म प्रत्येकं कर्मणश्च कृते कुशलो मनुष्यो लभ्येत तदा सर्वेऽपि सुखिनः सम्पन्नाश्च बोभूयेरन्।

इदं मतं निराधारं नास्ति। समाजस्य ईदृशानां लोकानां सदाऽऽवश्यकता तिष्ठति ये तस्यार्थकामयोः सम्पादनं कुर्युः। परन्तु यद्यर्थकामयोरेवोपरि ध्यानं दत्तं तर्हि स्पर्धैव उन्नतेः साधनं भविष्यति। सर्वेषां दृष्टिरात्मोपरि केन्द्रीभूता भविष्यति, हितानां संघर्षो बोभूयिष्यते समाजः शान्त्यर्थम् उद्वेजिष्यते।

हितसङ्घर्षस्य कारणमिदमस्ति यत् सर्वे स्वार्थम् आत्मनोऽर्थं कामं चान्विष्यन्ति। कस्यापि केनचिद् द्वेषो नास्ति, सर्वेषामात्मनि रागोऽस्ति। एकस्मिन्नन्धकारमये कोष्ठके यदि दश मनुष्या बन्दीकृता जायेरन् अथ च सर्वे बहिर्निस्सर्तुं द्वारमन्विष्यन्तो भवेयुस्तर्हि कतिवारान् परस्परं संघट्टेरन्। कस्यापि केनचिद् वैरं नास्ति परं सर्वे केवलमात्मार्थं द्वारमन्विष्यन्तः सन्ति अत एव संघट्टन्ते। परस्परं युद्धे शक्तेरपव्ययो भवति। स एव मनुष्यो यद्येवं सम्बुध्येत यत् सर्वेषामेकमेवोद्देश्यमस्ति तर्हि तेषां सम्मिलितशक्तेरुपयोगो भवेत्। ईदृश्यां दशायां यदि मुक्तेर्द्वारं न मिलितं तथापि युद्ध्वा परस्परस्य विपत्तिर्वर्धिता तु न भविष्यति। यथावत् इयमेव वार्ता समाजेऽस्ति। अस्माकं परस्परं वैरं नास्ति परमात्मनो भोगोपरि दृष्टिरस्ति। सर्वेषामियमेव दशाऽस्ति। यदीयं वार्ता विचारे आयायाद् यत् सर्वेषां हितमेकमेवास्ति अथ च तत् सहयोगेन प्राप्तुं शक्यते तर्हि परस्परस्य द्वन्द्वं निगडितं भवेत्। सर्वेषां सुखसमृद्ध्योः प्राप्तिर्भवेत्; ग्रामात् ग्रामं वयं परस्परस्य दुःखस्य वर्धनार्थं साधनं न सम्पद्येमहि।

छात्राणां कोमलबुद्धिषु इयं वार्ताऽऽरम्भत एव स्थापनीयाऽस्ति। परितः चतसृषु दिक्षु सौन्दर्यमयवातावरणे प्रकृतिच्छटायाः कलापूर्णकृतीनां च मध्ये छात्राणां जीवनं व्यतीतं भवेत्। तेषां समक्षं सफलं धनोपार्जनकर्तॄणां विजेतॄणां च आदर्शरूपेण रक्षणमकृत्वा विश्वस्य एकतायाः पाठं पाठयितॄणामुत्कर्ष उपदेष्टव्यः। शैशवादेव यदि तपसस्त्यागस्य चाभ्यासो नहि संपद्येत तर्हि उपरिष्टात् काठिन्यं भविष्यति।

मनुष्यशरीरमेवमेव क्षपयितव्यं वस्तु नास्ति। आत्मवासनानां तृप्तिं तु पशवोऽपि कृत्वावतिष्ठन्ते परन्तु मनुष्यस्यात्मनो बहुज्ञतायाः गर्वोऽस्ति। तेनैतद्गर्वानुरूपमात्मनो जीवनमपि सम्पादनीयम्। वासनाया दमनं मनुष्यस्य शोभाऽस्ति, आत्मनो यथाशक्यमपरेषां सेवासु नियोजनं तस्यादर्शोऽस्ति, आत्मसाक्षात्कारस्तस्य जीवनस्य प्रधानं लक्ष्यमस्ति शारीरिके बलविद्ये सांसारिके वार्ते स्तः, परन्तु आसां प्राप्तेः काश्चन सहजाः सीमा अपि सन्ति। अपरतो विद्यायां, बले, वैभवे, वा न्यूनता दुःखस्य वार्ता भवेत् परन्तु लज्जाया वार्ता नास्ति, परन्तु आत्मनो धर्मस्य पालनाय प्रयत्नस्याकरणम्, अर्थकामयोर्धर्मापेक्षया श्रेष्ठत्वस्य मननम्, मनुष्यस्य कृते लाञ्छनमस्ति। अयं भावः शिक्षाद्वारा दृढः कर्तव्यो भवेत्।

ईदृशीं शिक्षां प्राप्तो मनुष्यः समाजस्य योग्यो नागरिको भविष्यति। सर्वे धर्मसाक्षात्कर्तारो नहि भवेयुः परन्तु धर्ममार्गोपरि गमनस्य प्रवृत्तिः सर्वेष्वपि भवेत्। कश्चन विरल

एव ब्रह्मवेत्ता भवेत्, स्तोका एव योगाभ्यासिनो भविष्यन्ति, स्तोका एव पूर्णतया निष्कामाः पूर्णतया यज्ञभावेन लोकसंग्रहरता भवितुं शक्नुयुः परन्तु प्रायः सर्व एव परार्थाय स्वार्थादुच्चं स्थानं दास्यन्ति, प्रायः सर्व एव राष्ट्रियान्ताराष्ट्रीयव्यवहारयोः सहयोगस्य सद्भावस्य समर्थका भविष्यन्ति । ईदृशशिक्षादानं कठिनं नास्ति । अभेद एकता च जीवस्य स्वरूपमस्ति । अविद्यातस्तस्य नानात्वस्य, पार्थक्यस्य च प्रतीतिर्भवति परन्तु यदा कदा अल्पस्य कालस्य कृतेऽपि स पार्थक्यं विस्मरति, एकत्वस्याभां प्राप्नोति तदा उत्फुल्लो भूत्वोत्तिष्ठति नानात्वस्य मध्येऽपि स आत्मानम् अन्विष्यति । अतो या शिक्षा तमेकत्वस्य दिशि नेष्यति सा तस्य ग्राह्या भविष्यति ।

एतादृशशिक्षादानं सर्वेषां कर्म नास्ति । साधारणपाठ्यविषयाणामध्यापकास्तु प्रभूता लभ्येरन् । परन्तु विद्यार्थिने धर्मशिक्षां दत्वा द्वितीयजन्मदानयोग्यतासम्पन्ना आचार्याः क्षामा एव भवन्ति । इदं कर्म ब्रह्मबन्धोर्नहि ब्राह्मणस्यास्ति । आचार्यश्छात्रस्य कृते तु पूज्योऽस्त्येव, समाजस्य कर्त्तव्यमस्ति यद् ईदृशीनां व्यक्तीनां समादरं कुर्यात् अपरं तासां निष्कण्टककर्मकरणस्यावसरं दद्यात् ।

## उपसंहारः

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ॥

ऋग्वेदस्यायं मन्त्रो सुन्दरेषु शब्देषु तत् काठिन्यं व्यनक्ति यद् दर्शनस्य अध्येतुः प्रवक्तुश्च समक्षमायाति । इदं जगत् कथमभूत्, भूतमप्यासीन्नवा इदं को जानाति ? कः कथयितुं शक्नुयात् ? यावत्पर्यन्तं बुद्धेर्गतिरस्ति तावत्पर्यन्तमेव ज्ञातृज्ञेययोर्भेदस्तिष्ठति । शुद्धं ब्रह्म चित्तात् परमस्ति सर्वेषां भेदानामुपरि वर्त्तते । तत् चेतनाऽस्ति चेतनं नास्ति, अतः तद् एतद्रहस्यस्य ज्ञाता नास्ति । परमात्मनि बीजरूपेण सर्वं ज्ञानमस्ति परन्तु तद् जगतः आदिबिन्दुरस्ति, स्वयं मायाकृतोऽस्ति । अतः सोऽपि तस्या अवस्थाया ज्ञाता नहि भवेत् या तस्य पूर्वरूपमस्ति । कश्चिदात्मनो जन्मनः साक्षी नहि भवेत् । इयं प्रहेलिका बुद्धेर्वाण्याश्च विषयो नास्ति, अत इतः पूर्वस्मिन् मन्त्रे कथितमस्ति; 'को अद्धा वेद क इह प्रवोचत्' इदं को जानाति कश्चात्र कथयितुं शक्नुयात् ।

पुस्तकं समाप्तं जातम्। एतत्पठनेन कश्चन लाभो भवतु मा वा भूत्, एतत् प्रकटं भवेदेव यद् दर्शनस्य विषयः प्रभूतं कठिनोऽस्ति प्रभूतं रोचकश्चास्ति, तस्य जीवनस्य सर्वाभिः समस्याभिः सम्बन्धोऽस्ति, तस्यैव प्रकाशे सर्वेऽन्ये ज्ञेयाः सम्बोधे अवबोधे आयातुं शक्नुवन्ति, स एव तान् सर्वान् एकस्मिन् सूत्रे बध्नाति। यदि तस्य परमतत्त्वस्य ज्ञानार्थ-मिच्छा कस्मिंश्चिद् उत्पन्ना भवेत् तर्हि आत्मानं धन्यं मंस्ये।

एषु पृष्ठेषु यत् किञ्चित् प्रतिपादयितुं प्रयासः कृतोऽस्ति तत् समासेन एवं कथयितुं शक्यतेः—ब्रह्मैव सत्यमस्ति, तदेकम्, अद्वयम्, अपरिणामि, चिद्घनं चास्ति।

आत्मा जगच्च ब्रह्मणः अभिन्ने स्तः, सुतरां ते परस्परमभिन्ने स्तः। ब्रह्मैव ज्ञाता ज्ञानं ज्ञेयञ्चास्ति।

जगतः प्रतीयमानं रूपं मायाजनितमस्ति, अतोऽसत्यमस्ति, जगतो वास्तविकं रूपं ब्रह्मास्ति अतः सत्यमस्ति।

आत्मसाक्षात्कारस्यैकमात्रमुपायो योगोऽस्ति। निर्विकल्पकसमाधौ अविद्यायाः क्षयः संजायते।

वैराग्येण, स्वाध्यायेन, तपसा, उपासनया सर्धानुष्ठानेन च मनुष्येषु योगाभ्या-सस्य पात्रता समायाति।

यत् कर्म निष्कामेण भूत्वा यज्ञभावनया कृतं जायते, येन कर्मणा जीवयोरभेदस्य वृद्धिर्भवेत्, स धर्मोऽस्ति। धर्मेणार्थकामयोरपि सिद्धिर्भवति।

पार्थक्य-विषमता-शोषणोत्पीडनानां निरन्तरं विरोधकरणम्, सौहार्दं सहयोगो विश्व-संस्कृत्यर्थं तथा ऐक्यमूलकसच्छिक्षायाः कृते च उद्योगकरणं धर्मस्याङ्गानि सन्ति। यस्तपस्वी त्यागी चास्ति, येन समाधिद्वारा आत्मसाक्षात्कारप्राप्तिः कृताऽस्ति स एव धर्मस्य प्रवक्ता भवितुमर्हति। समाजेन ईदृशव्यक्तीनामादेशोपरि गन्तव्यम्। एतेन तस्य कल्याणं भविष्यति।

वारं वारं जन्ममरणाभ्याम्, कर्मणां वर्धमानसंस्कारराशेः दुःखात् अनुतापाच्च सदैव भेतव्यम्। अस्याज्ञानवृक्षस्य मूलोच्छेदो मनुष्यदेह एव भवेत्। अस्यामूल्यदेहरत्नस्योपयोग-करणम् आत्मनः पादे आत्मनैव कुठाराघातवदस्ति। मनुष्यशरीरस्य शोभा विषयभोगो नास्ति, इयं सम्यक् तपसे, ज्ञानाय, धर्माय, च मिलितास्ति।

मनुष्यस्य परमपुरुषार्थो मोक्षोऽस्ति। समानी व आकूतिः, समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति।

इति शम्

# परिशिष्टम्

धर्म (सदाचार) स्वरूपसम्बन्धे विभिन्नानि मतानि तद्विषये शङ्काश्च

[धर्मस्वरूपाधिकरणे पृ० ३६६ स्योपरिष्ट टिप्पणी द्रष्टव्या]

१ वादः--ईश्वरस्याज्ञा धर्मोऽस्ति ।

शङ्का—ईश्वरस्य सत्तायां किं प्रमाणमस्ति ? ईश्वर आज्ञापने स्वतन्त्रोऽस्ति परतन्त्रो वा ? यदि स्वतन्त्रोऽस्ति तर्हि सम्भवोऽस्ति तर्हि कदाचिदाज्ञायाः रूपं परिवर्तितं भवेत्, यो धर्मोऽस्ति सोऽधर्मो भवेत्। यदि स्वतन्त्रो नास्ति तर्हि पुनस्तस्य नियन्त्रणस्य कर्ता पदार्थो धर्मस्य निर्णायको जातः। ईश्वरस्याज्ञां कथं जानीयात् ? आत्मानमीश्वराज्ञां विज्ञापयन्तः सर्वे ग्रन्था एकामेव वार्तां नहि कथयन्ति । यदि मनुष्यस्य बुद्धिः इमं निर्णयं कुर्यात् यद् एषु ग्रन्थेषु को ग्रन्थ ईश्वरप्रेरितोऽस्ति तर्हि सा धर्मस्य स्वरूपमपि स्वयं निर्णेष्यति। ईश्वरस्याज्ञा कथं माननीया स्यात् ? किं पुरस्कारस्याशया दण्डाद् भयेन वा कृतं कर्म धर्मो भवेत् ?

२ वादः—श्रुतेराज्ञा धर्मोऽस्ति।

शङ्का—अधस्तादुक्ताः प्रायः सर्वाः शङ्का उत्तिष्ठन्ति। द्वयोस्तथाकथितश्रुतिवाक्ययोरस्माभिरेतद् द्रष्टव्यं भविष्यति यद् कतरा धर्मानुकूलाऽस्ति। अर्थात् अस्माकं श्रुतेः परीक्षार्थं धर्मस्य काचित् स्वतन्त्रा कषपट्टिका रक्षणीया भविष्यति।

(३) वादः — अभ्यन्तरे या कर्तव्याकर्तव्यविवेकबुद्धिरस्ति तस्या या प्रेरणा भवेत् सैव धर्मोऽस्ति।

शङ्का—विभिन्नदेशकालयोरियं प्रेरणा विभिन्नरूपा भवति। यत् कर्म एकस्य देशस्य एकस्य कालस्य वा लोका भद्रं कथयन्ति तदेव अपरे अभद्रं कथयन्ति। यादृशी शिक्षा मिलति तादृशी एव विवेकबुद्धिः संजायते । अतः एतेन धर्मस्य कश्चन स्थिरः परिचयो नहि मिलति ।

(४) वादः—यस्य कर्मणः समर्थनं लोकमतं करोति स धर्मोऽस्ति ।

शङ्का :- एकमेव कर्म विभिन्नानां देशानां कालानां च लोकमतम् एकयैव दृष्ट्या नहि पश्यति । यो बलवानस्ति अपरमात्मन इच्छानां पूर्त्यै समाजस्य चाश्रितो नास्ति स

लोकमतस्य किमर्थमनुनरणं कुर्यात् ? युद्धस्य अन्यस्य वा आवेशस्यावस्थासु लोकमतं यासां वार्तानां समर्थनं करोति उपरिष्टात् ता एव अनभिमताः करोति । कियतां विचाराणां येषामद्य समर्थनं बोभूयते, एकदा विरोधोऽभवत् ।

(५) वादः—यत्कर्म सामाजिकजीवनस्य पोषकमस्ति स धर्मोऽस्ति ।

शङ्का-सामाजिकजीवनस्य पोषणं कथं क्रियेत ? येन कर्मणा सामाजिकजीवनस्य पुष्टिर्भवति तत् परीक्षणं समाजस्य तात्कालिकी प्रसन्नताऽस्ति अपरं वा किञ्चित् ?

(६) वादः—यस्य कर्मण उद्देश्यं युक्तमस्ति स धर्मोऽस्ति ।

शङ्का-यदि देशस्य समृद्धेर्विवर्धयिषया कश्चन जनसंख्यामूनयितुं नवजातशिशून् मारयितुं प्रवृत्तः स्यात्तर्हि किं स धर्मो भवेत् ?

(७) वादः—यस्य कर्मणः परिणामो विशुद्धो भवेत् स धर्मोऽस्ति ।

शङ्का-कस्य कृते विशुद्धः ? यदि अपरेषां कृते, तर्हि अहमपरेषां कथमपेक्षां कुर्याम् ? यदि कस्यचित् मारणाय विषं दत्तं जायेत अपरं तद् विषं तस्या व्यक्तेः कंचन रोगं दूरी कुर्यात् तर्हि किमिदं विषदानं धर्मः कथ्येत ? विशुद्धः परिणामः क उच्यते ? अव्यवहितः परिणामो दृष्टो भवेद् व्यवहितो वा ? एको द्यूतकारी चोरो निमज्जन्नस्ति तस्य त्राणं तस्मै विशुद्धं लगति परं रक्षणोपरि स लोकान् लुरिठष्यति तङ्कयिष्यति च । अत्र धर्मस्य निर्णयः कथं भविष्यति ? यदि परिणामानां योगेन, तर्हि परिणामाः कथं योजिताः स्युः ? केनचिद् दत्तैः पणैः एकेन मिष्टान्नं भुक्तम्, एकेन सुरा पीता, एकेन नाटकं दृष्टम्, एकेन समाचारपत्रं क्रीतम् । एषां परिणामानां योगः कथं भविष्यति ? कस्य चित्तोपरि कः परिणामः पतितः इदं कथं ज्ञातं जायेत ?

(८) वादः—येन कर्मणा अधिकतमं सुखमुत्पन्नं भवेत् स धर्मोऽस्ति ।

शङ्का—कस्य कृते ? यदि अपरेषां कृते, तर्हि अहं तेषां ध्यानं कथं कुर्याम् ? अधिकानां लोकानां सुखं दृष्टं जायते अथवा सुखस्याधिका मात्रा ? दशानां मनुष्याणाम् उदरार्धपूर्त्तिः साध्वी अस्ति अथवा उदरपूरमशनं पञ्चानाम् ? किं सुखानि तुल्यानि सन्ति ? दशभ्यो मनुष्येभ्यो मद्यपानसुखं दद्याम् अथवा द्वाभ्यां दर्शनाध्ययनस्य ? सुखेषु उच्चताया नीचतायाश्च किं परीक्षणमस्ति ?

(६) वादः - यस्मिन् कर्मणि आत्माभिव्यक्तेरात्माभिवृद्धेश्च अनुभूतिर्भवेत् स धर्मोऽस्ति।

शङ्का – कुशलस्य लुण्टाकस्यापीदृशोऽनुभवो भवति । केवलमात्मनः स्वार्थाय दिग्विजयोपरि अभियातुः सेनान्योऽपि शत्रुसेनायाः संपेषणेऽपि सैवानुभूतिर्भवेत् किं स धर्मात्माऽस्ति ।

(१०) वादः—अस्माकं सामान्यतो जगतो ज्ञानं दिक्कालयोः कार्यकारणभावस्य च व्यवधानेन भवति । चित्तस्यैते धर्मा जगतो वास्तविकं रूपं तिरोधापयन्ति । यदा कदा कर्त्तव्यबुद्धिरुदिता भवति तदाऽस्माकं दिगादेरतिक्रमणानन्तरं जगतः स्वरूपस्य तात्कालिकमव्यवहितं ज्ञानं भवति । ईदृश्या बुद्ध्या यत् कर्म क्रियते स धर्मोऽस्ति । धर्मस्य त्रीणि लक्षणानि सन्ति:—

(क) सोऽन्तःप्रेरणारूपे भवति । इयमन्तःप्रेरणा आज्ञारूपा 'एवं कर्त्तव्यम्' अथवा 'एवं कुरु, भवति अपरम् अहैतुकी च भवति; तया सह हेतोः कारणस्य च भावना नहि लग्ना भवति ।

(ख) तस्यामात्मनो भोगाय किञ्चिदपि स्थानं न भवति । यत्र भोगो भवति तत्र सुखमपि तिष्ठति परन्तु कर्तव्येन सत्रा सुखं तु नैव भवति तत् कर्म किञ्चित् कटुकमिवाभासते ।

(ग) अस्माकमेवं प्रतीतं भवति यत् तत् कर्म सर्वैर्लोकैः करणीयमस्ति । चोर इदं नहि वाञ्छति यत् सर्वे लोकाश्चौर्यं कुर्युः परन्तु सत्यवादी वाञ्छति यत् सर्वे सत्यं वदेयुः ।

शङ्का—एवं भवेत् यदन्तःप्रेरणाऽस्माकं रागद्वेषरूपकारणाद् भवेत् । आत्मनः शत्रुं दृष्ट्वाऽपि कदाचित् ईदृशी अन्तःप्रेरणा भवति यत् अयं हन्यताम्' । मत्तोऽपि आत्मप्रेरणानुसारं कर्म करोति ।

इदमपि विचारणीयमस्ति यद् ईदृशी अन्तःप्रेरणा कियत्पर्यन्तं कर्तुः शिक्षायाः संस्कृतेश्च परिणामोऽस्ति अपरं कियत्पर्यन्तं च सा स्वभावमवलम्बते ।

इदं नहि कथयितुं शक्यते यद् अप्रियत्वं धर्मस्य लक्षणमस्ति । आत्मनश्चित्तस्यानुशीलनेन ज्ञास्यते यत् सत्योक्तिः त्यागो वा तदा अप्रियं नहि प्रतीयते भवेन्नाम वाढं तत्पश्चात् कष्टम् ।

इमानि मतानि प्रसिद्धैर्विद्वद्भिः प्रवर्तितानि सन्ति। एतावति स्तोके एतद्विषये ऊहापोहौ नहि भवेताम्, केवलं संकेतमात्रं कृतमस्ति। 'जीवन और दर्शन' नाम्नि स्वलिखिते पुस्तके। जीवनदर्शनयोः' किञ्चिद् विस्तृतो विचार: कृतोऽस्ति। अस्माकमेतत् प्रतीयते यत् यस्य सिद्धान्तस्य प्रस्तुतपुस्तके प्रतिपादनं कृतमस्ति तेन आसां सर्वासां शङ्कानामुत्तरं लभ्यते। धर्मस्य लक्षणेनेदृशेन भवितव्यं यत् ईश्वरस्य श्रुतेः, कर्त्तुस्तात्कालिकोद्देश्यादेश्चोपरि नावलम्बेत, येन प्रत्येकं व्यक्तिः प्रत्येकमवसरे आत्मनो बुद्धेरनुसारं तदुपयोगं कर्तुं शक्नुयात्। बुद्धिदोषेण यथावत् यथायथं परीक्षाकरणे वाढमेव भ्रमो भवेत् परन्तु सिद्धान्तो निरपेक्षो भवेत्। व्यावहारिकदृष्ट्या एषु सर्वेषु मतेषु सौष्ठवमस्ति अपरमेषां सर्वेषामस्माकं मतेऽन्तर्भावः प्रज्ञायते।

इति शम्

---

# विशिष्ट शब्दानामनुक्रमणिका ।

शब्द — पृष्ठ

# समाजवाद

## लेखक : माननीय डाक्टर सम्पूर्णानन्द, शिक्षामंत्री, उत्तर प्रदेश

*( माननीय डाक्टर सम्पूर्णानन्दजी लिखित पुस्तक 'समाजवाद' शास्त्री तथा आचार्य परीक्षाके राजशास्त्र विषयके पाठ्यक्रममें निर्धारित है। हिन्दीमें प्रकाशित समाजवाद विषयकी सर्वोत्तम पुस्तक होनेके कारण हिन्दी साहित्य सम्मेलन द्वारा बारह सौ रुपयेका 'श्रीमङ्गला प्रसाद' पारितोषिक तथा पाँच सौ रुपयेका 'मुरारका' पारितोषिक इसको मिला है और सम्मेलनके पाठ्यक्रममें रखा गया है। )*

समाज क्या है, उसमें ऊँच-नीच, गरीब-अमीर, छोटे-बड़ेका इतना वैषम्य क्यों हैं, इसका क्या निराकरण है, सुखके साधन मुट्ठीभर लोगोंके हाथोंमें क्यों एकत्र हैं, वर्तमान स्थितिमें वर्णाश्रम धर्मको हम अपूर्ण तथा अनुपयुक्त क्यों पाते हैं, लोकतन्त्रवाद या फासिटीवाद क्यों समाजके गलित कुष्टको समूल नहीं निकाल पाता, इत्यादि महत्वपूर्ण तथा गंभीर प्रश्नोंका उत्तर विद्वान् लेखकने बड़ी विद्वत्तापूर्वक दिया है। उनका स्पष्ट मत है कि साम्राज्यशाही, सामन्तशाही तथा पूँजीशाहीका विनाश निकट है। सुखी समाजकी आवश्यकताओंका दिग्दर्शन कराते हुए समाजवादी व्यवस्थाके होनेमें ही जगत्का कल्याण होगा, इसका समर्थन किया है। समाजवादके संबंधमें अनर्गल शंकाओंका भी समाधान है। समाजवादी विचारधारा तथा विभिन्न मतावलम्बियोंका भी इसमें निर्देश है। मार्क्सवादपर नये विचारोंका समावेश है। नवीन, परिवर्द्धित, संशोधित तथा परिवर्तित पंचम आवृत्ति।

[ मूल्य—तीन रुपया

# गणेश

## लेखक : माननीय डाक्टर सम्पूर्णानन्द, शिक्षामंत्री, उत्तर प्रदेश

प्रत्येक हिन्दूके घरमें, जन्मसे लेकर मरणतक किसी भी उत्सवमें गणेशकी सर्वप्रथम पूजा होती है। चलते समय, किसी कार्यको प्रारम्भ करते समय 'जय गणेश' का सम्बोधन किया जाता है। फिर भी, इनके बारेमें लोगोंको जानकारी बहुत कम है। प्रस्तुत पुस्तकमें लेखकने बड़ी विद्वत्तासे वेदोंसे लेकर जितने भी प्राप्य ग्रन्थ हो सकते हैं उन सबका अध्ययन कर यह ग्रन्थ तैयार किया है। श्रुतिमें गणपति, गजाननका जन्म, गणेशके स्मरणीय काम, योगशास्त्रमें गणेश बौद्ध और जैनधर्ममें विनायक, चीन और जापानके आध्यात्मिक जीवनमें विनायकका स्थान इत्यादि ११ अध्यायोंमें पुस्तक बँटी है। अन्तमें गणेशजीके नाम, स्कन्द पुराणान्तर्गत काशीखंडमें दिये विनायकके नाम तथा गणेशजीके मन्दिरोंका विवेचन किया गया है। गणेशजीके आयुध तथा उनकी भिन्न-भिन्न समयों, भिन्न-भिन्न मुद्राओं तथा भिन्न-भिन्न देशोंकी सादी और रंगीन तस्वीरें दी गई हैं इससे पुस्तकका महत्व और भी बढ़ गया है। देश तथा विदेशके विद्वानोंने इसकी बड़ी प्रशंसा की है। छपाई, सफाई बहुत सुन्दर है।

[ सजिल्द पुस्तकका मूल्य, दो रुपया आठ आना

---

*प्राप्ति स्थान*

**व्यवस्थापक, काशी विद्यापीठ प्रकाशन विभाग, बनारस छावनी**